# भोजप्रबन्धः । *

## प्रबन्धावतारणा । †

आदौ धाराराज्ये सिन्धुलसंज्ञो राजा चिरं प्रजाः पर्य्यपालयत्, तस्य वृद्धत्वे भोज इति पुत्त्रः (क) समजनि । स यदा (ख) पञ्चवार्षिकः, तदा पिता ह्यात्मनो जरां ज्ञात्वा मुख्यामात्यानाहूय अनुजं मुञ्जं महाबलमालोक्य, पुत्त्रञ्च बालं वीक्ष्य विचारयामास,—"यद्यहं राजलक्ष्मीभारधारणसमर्थं सोदरम्

### टीकाकृन्मङ्गलाचरणम्

नमस्कृत्य गणेशानं वाचं देवीं तथा गुरुम् ।
भोजप्रबन्धटीकेयं सरलाऽऽख्या विरच्यते ॥

(क) समजनि—उदपादि । [ सम्+जन+लुङ्-त । समजनिष्ट इति पदान्तरम् ] ।

(ख) पञ्चवार्षिकः—पञ्चवर्षीयः, [ पञ्च वर्षाणि परिमाणमस्य इति वर्षशब्दात् "वर्षाल्लुक् च" ( ५।१।८८ पा० ) इति ठञ् ] । राजलक्ष्मीभारधारणसमर्थं—राजलक्ष्म्याः,—राजसम्पदः, भारस्य—रक्षणोपायनिर्द्धारणरूपस्य, धारणे—सम्पादने, समर्थः,—क्षमः तं, राजकार्य्यपरिचालनयोग्यमित्यर्थः ।

* भोजस्य—धाराऽधिपतेः यशस्करः भोजयशस्करः, स चासौ प्रबन्धश्चेति भोजप्रबन्धः [ "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" ( वा० ) इति यशस्करशब्दलोपः ] ।

† प्रबन्धस्य—सन्दर्भस्य, अवतारणा—प्रस्तावना, भोजचरितवर्णने प्राथमिकः प्रस्ताव इत्यर्थः ।

अपहाय राज्यं पुत्राय प्रयच्छामि, तदा लोकापवादः। अथवा बालं मे पुत्रं मुञ्जो राज्यलोभाद्विषादिना मारयिष्यति, तदा दत्तमपि राज्यं वृथा, पुत्रहानिर्वंशोच्छेदश्च। उक्तञ्च,—

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च।
द्वेषक्रोधादिजनको लोभः पापस्य कारणम्॥ १॥
लोभात् क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्त्तते।
द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः॥ २॥
मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम्।
लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम्"॥ ३॥

लोभ इति।—लोभः,—धनादिस्पृहा, पापस्य—दुरितस्य, प्रतिष्ठा—स्थितिः, आश्रय इत्यर्थः, लोभ एव पापस्य प्रसूतिश्च—उत्पत्तिस्थानं, लोभात् पापं प्रजायते इत्यर्थः, द्वेषः,—हिंसा, क्रोधः,—अमर्षः, तौ आदौ येषाम्, (आदिपदेन काममोहादेः परिग्रहः) तेषां जनकः,—हेतुभूतः, तथा लोभः, पापस्य—सर्व्व-प्रकारस्य दुष्कृतस्येत्यर्थः, कारणं—हेतुः, भवतीति शेषः। [अत्र प्रतिष्ठा-प्रसूतिशब्दौ स्त्रीलिङ्गे, कारणं नपुंसकमिति एतानि "लोभः" इत्यस्य विशेषणान्यपि अजहल्लिङ्गत्वात् तथालिङ्गान्येव]॥ १॥

लोभादिति।—लोभात् ["भुवः प्रभवः" (१।४।३० पा०) इत्यपादाने पञ्चमी] क्रोधः,—अमर्षः, प्रभवति—सञ्जायते, क्रोधात्—अमर्षात्, द्रोहः,—हिंसाबुद्धिः, प्रवर्त्तते—सम्भवति, [अत्र वृतधातुरुत्पत्त्यर्थः]। शास्त्रज्ञः,—पण्डितः, अत एव विचक्षणोऽपि—निपुणोऽपि जनः, द्रोहेण—हिंसया, [हेत्वर्थे तृतीया] नरकं—निरयं, याति—गच्छति; सर्व्वज्ञः सुप्रवीणोऽपि लोभमतिक्रमितुं न समर्थः, कथमन्ये मूर्खा इति भावः॥ २॥

मातरमिति।—लोभेन आविष्टः लोभाऽऽविष्टः,—लुब्ध इत्यर्थः, [तृतीयातत्०] नरः,—लोकः, मातरं—जननीं, पितरं—जनकं, पुत्रं—तनयं, भ्रातरं वा—भ्रातृ-तुल्यमित्यर्थः, [इवार्थे वाशब्दः] शोभनं हृदयमस्य सुहृत्, अतिशयेन सुहृत् सुहृत्तमस्तं सुहृत्तमं—बन्धुवरं, ["सुहृद्दुर्हृदौ मित्रामित्रयोः" (५।४।१५० पा०)

इति विचार्य्य राज्यं मुञ्जाय दत्त्वा तदुत्सङ्गे भोजमात्मजं मुमोच।

ततः क्रमाद्राजनि दिवं गते (ग) सम्प्राप्तराज्यसम्पत्तिः मुञ्जो मुख्यामात्यं बुद्धिसागरनामानं व्यापारमुद्रया दूरीकृत्य तत्पदे अन्यं निवेशयामास, ततो गुरुभ्यः क्षितिपालपुत्रं वाचयति स्म।

ततश्चैकदा सभायां ज्योतिःशास्त्रपारं गतः (घ) सकलविद्याचातुर्य्यवान् ब्राह्मणः कश्चित् समागम्य, राज्ञे "स्वस्ति" इत्युक्त्वा उपविष्टः। स चाह,—"देव! लोकोऽयं मां सर्वज्ञं वक्ति, तत् किमपि पृच्छ। यतः,—

कण्ठस्था या भवेद्विद्या सा प्रकाश्या सदा बुधैः।
या गुरौ पुस्तके विद्या तया मूढ़ः प्रतार्य्यते" ॥ ४ ॥

इति निपातनात् हृदयस्य हृद्भावः] स्वामिनं—प्रभुं, सहोदरं वा—सोदरं भ्रातरमपि, हन्ति—विनाशयति; किं बहुना? सर्वं दुष्कृतमेव लोभी कर्त्तुमर्हतीत्यभिप्रायः ॥ ३ ॥

(ग) सम्प्राप्तराज्यसम्पत्तिः,—सम्प्राप्ता—लब्धा, राज्यरूपा—लक्षग्रामाधिपत्यरूपा, ("लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके। अत ऊर्द्धं महेशानि! महासाम्राज्यमुच्यते ॥" इति स्मरणात्); सम्पत्तिः,—ऐश्वर्य्यं येन सः। व्यापारमुद्रया—व्यापारस्य—कार्य्यस्य, मुद्रा—व्यपदेशः तया, कार्य्यच्छलेनेत्यर्थः; यद्वा—व्यापारस्य मुद्रा—सङ्कोचः, अभियोगः इति यावत, तया; तदनुष्ठेयकर्म्मणां शनैः शनैः भारसङ्कोचेनेति भावः। दूरीकृत्य—स्वपदादपसार्य्य। वाचयति स्म—पाठयति स्म। "क्षितिपालपुत्रः" इति पाठे वाचयति—अधीते इत्यर्थः।

(घ) सकलविद्याचातुर्य्यवान्—सकलासु विद्यासु चातुर्य्यं—नैपुण्यं, विद्यते अस्येति मतुप्प्रत्ययः।

प्रश्नकरणे हेतुमाह, कण्ठस्थेति।—या विद्या, कण्ठस्था—अभ्यस्ता, भवेत्, बुधैः,—पण्डितैः, सा—विद्या, सदा—सर्व्वदैव, प्रकाश्या—प्रकाशयितुमुचिता, [प्र+काश+अर्हार्थे यत्+टाप्]। या—विद्या, गुरौ—गुरुसन्निधौ, पुस्तके—ग्रन्थे च, वर्त्तते इति शेषः, तया—विद्यया, मूढ़ः,—मूर्खः, प्रतार्य्यते—प्रवञ्च्यते, [प्र+तॄ+णिच्

ततो राजाऽपि विप्रस्य (ङ) अहंभावमुद्रया चमत्कृतां तद्वार्त्तां श्रुत्वा "अस्माकं जन्माऽऽरभ्यैतत्क्षणपर्य्यन्तं यद्यन्मया आचरितं, तत्तत्सर्वं वदति यदि, भवान् सर्वज्ञ एव" इत्युवाच। ततो ब्राह्मणोऽपि राज्ञा यद्यत्कृतं, तत्तत्सर्वमुवाच गूढ़-व्यापारमपि। ततो राजाऽपि सर्वाण्यप्यभिज्ञानानि ज्ञात्वा तुतोष। पुनश्च पञ्च षट् पदानि गत्वा पादयोः पतित्वा, (च) इन्द्रनील-पुष्पराग-मरकत-वैदूर्य्यखचितसिंहासने तमुपवेश्य, राजा प्राह,—

> "मातेव रक्षति पितेव हिते नियुङ्क्ते
> कान्तेव चाभिरमयत्यपनीय खेदम्।
> कीर्त्तिञ्च दिक्षु विमलां वितनोति लक्ष्मीं
> किं किं न साधयति कल्पलतेव विद्या?" ॥ ५ ॥

कर्म्मणि लट्-ते]; सभायां वक्तुमशक्तत्वात् पुस्तकस्थविद्यया मूर्खः केवलं प्रतारितो भवति नान्यत किमपि फलं तयेत्यर्थः। तथा चोक्तं—"पुस्तकस्था तु या विद्या परहस्तगतं धनम्। कार्य्यकाले समुत्पन्ने न सा विद्या न तद्धनम्॥" इति ॥ ४ ॥

(ङ) अहंभावमुद्रया—अहंभावः,—"अहं सर्व्वज्ञः" इत्येवम् अहङ्कारः, तस्य मुद्रा—मुद्रणम्, अङ्कनमित्यर्थः, सर्व्वसमक्षमुच्चैरुद्घोषणमिति यावत्, तया, आत्मश्लाघा-प्रकटनेनेत्यर्थः।

(च) इन्द्रनीलेत्यादि।—इन्द्रनीलं—नीलकान्तमणिः, ("नीला" इति भाषा) पुष्परागः,—पद्मरागः, ("पोक्‌राज्") मरकतं—हरिन्मणिः, ("पान्ना") वैदूर्य्यं—विदूरपर्व्वतजातः मार्जारचक्षुसदृशो मणिविशेषः, ("लसूनीया" इति हिन्दीभाषा) एषां द्वन्द्वः तानि, तैः खचितं—संयुक्तं, यत् सिंहासनं तस्मिन्।

मातेति।—विद्या—शास्त्रज्ञानं, मातेव—जननीव, रक्षति—पालयति, पितेव—जनक इव, हिते—मङ्गले, नियुङ्क्ते—प्रवर्त्तयति, [नि+युज्+लट्-ते]। कान्तेव—भार्य्येव, खेदं—क्लेशम्, अपनीय—अपहृत्य, [अप्+नी+ल्यप्] अभिरमयति च—प्रीणयति च, [अभि+रम+णिच्+लट्-ति]। दिक्षु—दिशि दिशि, सर्व्वदेशेषु इति भावः, विमलां—विशुद्धां, कीर्त्तिं—यशः, लक्ष्मीञ्च—सम्पदञ्च, वितनोति—विस्तारयति, अतः विद्या कल्पलतेव—सर्वाभीष्टप्रदायिनी वल्लीव, किं किं

ततो विप्रवराय दशाश्वान् (छ) आजानेयान् ददौ।

ततः सभायाम् (ज) आसीनो बुद्धिसागरः प्राह राजानं,—"देव! भोजस्य जन्मपत्रिकां ब्राह्मणं पृच्छ" इति। ततो मुञ्जः प्राह,—"भोजस्य जन्मपत्रिकां विधेहि" इति। ततोऽसौ ब्राह्मण उवाच,—"अध्ययनशालाया भोज आनेतव्यः" इति। मुञ्जोऽपि ततः कौतुकादध्ययनशालामलङ्कुर्वाणं भोजं (झ) भटैरानाययामास। ततः स साक्षात्पितरमिव राजानम् आनम्य सविनयं तस्थौ। ततस्तद्रूपलावण्यमोहिते राजकुमारमण्डले प्रभूतसौभाग्यं महीमण्डलमागतं महेन्द्रमिव, साकारं मन्मथमिव, मूर्त्तिमत् सौभाग्यमिव, भोजं निरूप्य राजानं प्राह दैवज्ञः,—"राजन्! भोजस्य भाग्योदयं वक्तुं विरिञ्चिरपि नालं, कोऽहम् (ञ) उदरम्भरिः ब्राह्मणः? किञ्चित् तथाऽपि वदामि स्वमत्यनुसारेण। भोजमितोऽध्ययनशालायां प्रेषय"। ततो राजाज्ञया भोजे ह्यध्ययनशालां गते विप्रः प्राह,—

---

न साधयति—सम्पादयति? अपि तु सर्व्वमेव साधयतीत्यर्थः। [अत्र शिरश्चालने नञ्, तेन च काक्वा अन्यार्थः व्यज्यते]। वसन्ततिलकं वृत्तम्॥ ५॥

(छ) आजानेयान्—उत्कृष्टजातीयान्। ("वाजिवाहार्व्वगन्धर्व्वहयसैन्धवसप्तयः। आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः॥" इत्यमरः)। "आरट्टीयान्" इति पाठान्तरम्।

(ज) आसीनः,—उपविष्टः। [आस+शानच्+१मा १व०] बुद्धिसागरः,—स्वपदादपसारितपूर्व्वः मुख्यामात्यः; स च स्वपदादपसारणात् तादृशावमानितोऽपि केवलं भोजे स्नेहाधिक्यात् तस्य हिताकाङ्क्षयैव सभायामुपस्थित इति भावः।

(झ) भटैः,—सैनिकपुरुषैरित्यर्थः। आनाययामास [आ+नी+णिच्+लिट्-अ। भटैरित्यत्र "नीवह्योर्न" (वा०) इति प्रयोज्यकर्त्तरि कर्म्मसंज्ञानिषेधात् तृतीयैव]।

(ञ) उदरम्भरिः,—उदरमात्रपोषकः, नात्यधिकक्षमतावानित्यर्थः, [उदरं बिभर्त्ति इति उदर+भृ+इन् मुम् च। "फलेग्रहिरात्मम्भरिश्च" (३।२।२६ पा०) इति सूत्रे चान्द्रमतेन सिद्धः]।

"पञ्चाशत् पञ्च वर्षाणि सप्तमासदिनत्रयम्।
भोजराजेन भोक्तव्यः सगौड़ो दक्षिणापथः" ॥ ६ ॥ इति।

तदाकर्ण्य राजा चातुर्य्यादपहृमन्निव सुमुखोऽपि (ट) विच्छायवदनोऽभूत्। ततो राजा ब्राह्मणं प्रेषयित्वा निशीथे शयनमासाद्य एकाकी मन व्यचिन्तयत्,—"यदि राजलक्ष्मी-भोजकुमारं गमिष्यति, तदाऽहं जीवन्नपि मृतः,—

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः क्षणेन
सोऽप्यन्य एव भवतीति विचित्रमेतत् ॥ ७ ॥

---

भोजस्य भाग्यफलमाह, पञ्चाशदिति।—भोजराजेन—भवदीयभ्रातुष्पुत्रेण भोजेन, [ अनुक्तकर्त्तरि तृतीया ], पञ्चाशत् पञ्च वर्षाणि—पञ्चपञ्चाशद्वर्षाणीत्यर्थः, सप्तमासदिनत्रयं—सप्त मासान् दिनत्रयञ्च, दिनत्रयसहितसप्तमासाधिकपञ्चपञ्चाश-द्वर्षाणि व्याप्य इत्यर्थः, [अत्यन्तसंयोगे द्वितीया ], सगौडः,—गौड़देशसहितः, दक्षिणा पथः,—ऋक्षवदवन्तिमतिक्रम्य दाक्षिणात्यदेशः, [ दक्षिणस्याः पन्थाः "ऋक्पूरब्—" ( ५।४।७४ पा०) इति अन्तावयवः अः। उक्ते कर्म्मणि १मा] भोक्तव्यः,—पालयितव्यः, स्वाधिकारे स्थापयितव्य इत्यर्थः। [ भुज + कर्म्मणि तव्यः ] ॥ ६ ॥

( ट ) विच्छायवदनः,—वि—विगता, छाया—कान्तिः यस्मात् तत् विच्छायं, तादृशं वदनं यस्य सः, निष्प्रभमुख इत्यर्थः।

भ्रष्टैश्वर्य्यस्य जीवन्मृतत्वं विवृणोति, तानीति।—तानि—पूर्ववर्त्तीन्येव, सधनाव-स्थोचितान्येवेत्यर्थः, इन्द्रियाणि—चक्षुरादीनि, अविकलानि—अविकृतानि, स्वस्था-नीति यावत्, सन्तीति शेषः; तदेव—पूर्वपरिचितमेव, नाम—संज्ञा, विद्यते इति शेषः; सा—तादृशी, पूर्ववदेवेत्यर्थः, अप्रतिहता—अव्याहता, सर्व्वतोमुखीत्यर्थः, बुद्धिः,—चित्तवृत्तिः, अस्तीति शेषः; वचनं—भाषणमपि, लोकैः सह आलापन-मपीत्यर्थः, तदेव—पूर्वानुरूपमेव, वर्त्तते इति शेषः; सोऽपि—अविकलेन्द्रियादि-समन्वितः स एव, पुरुषः,—जनः, अर्थोष्मणा—धनमदेन, विरहितः,—वियुक्तः, ( चेत् भवति, तर्हि ) क्षणेन—अल्पक्षणमध्य एव, अन्य एव—अन्यादृश एव, भवति, इत्येतत् विचित्रम्—आश्चर्य्यम्। उक्तं हि—"ऊष्मा हि वित्तजो वृद्धिं तेजो नयति

किञ्च।—शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः।

बुद्धिप्रारब्धकार्य्यस्य नास्ति किञ्चन दुष्करम्॥ ८॥

असूयया हतेनैव पूर्वोपायोद्यमैरपि।

कर्त्तृणां गृह्यते सम्पत् सुहृद्भिर्मन्त्रिभिस्तथा॥ ९॥

तत्रोद्यमे किं दुःसाध्यम्?—

अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे।

परापवादभीरूणां दूरतो यान्ति सम्पदः॥ १०॥

---

देहिनाम्।" इति। "अर्थोष्मणा विरहितः पुरुषः स एव अन्यः क्षणेन भवतीति विचित्रमेतत्॥" इति पाठान्तरम्। वसन्ततिलकं वृत्तम्॥ ७॥

दक्षत्वादिगुणसम्पन्नः निर्धनोऽपि ऐश्वर्य्यं लभते इत्याह, शरीरेति।—शरीरनिरपेक्षस्य—शरीरे—देहे, निरपेक्षः,—निर्ममः तस्य, दैहिकदुःखमगणयतः इत्यर्थः, दक्षस्य—सर्व्वकर्म्मणि कुशलस्य, व्यवसायिनः,—उद्योगिनः, तथा बुद्धिप्रारब्धकार्य्यस्य—बुद्ध्या—बुद्धिपूर्व्वकं, सर्व्वथा विमृश्येत्यर्थः, प्रारब्धं—प्रक्रान्तं, कार्य्यं येन तस्य, जनस्य इति शेषः, [सम्बन्धविवक्षया षष्ठी], किञ्चन—किमपि, दुष्करं—दुःसाध्यं, नास्ति—न विद्यते॥ ८॥

निरुद्यमो हि प्रभुः सम्पत् रक्षितुं नैव शक्नोति इत्याह, असूययेति।—पूर्वोपायोद्यमैः,—पूर्वं—प्रथमम्, उपायाय—साधनाय, प्रभोरैश्वर्य्यग्रहणार्थं साधनसङ्ग्रहायेति यावत्, उद्यमः,—चेष्टा येषां तादृशैः, सुहृद्भिः,—बन्धुभिः, भ्रात्रादिभिरित्यर्थः, तथा मन्त्रिभिः,—अमात्यैश्च कर्त्तृभिः, अपि, किं पुनस्तादृशैः शत्रुभिरित्यपेरर्थः; असूयया—निरुद्यमतया नीतिविच्युतस्य कर्त्तुर्दुर्नीतिपरत्वादिकं दोषमुद्भाव्य तत्कर्त्तृत्वसम्पदाद्यसहनरूपया इति यावत्, हतेन—हननेन, आक्रान्त्या हेतुनेत्यर्थः; असूयापरवशैः सद्भिरिति भावः; [भावे क्तः] "असूयया हतेनैव" इति पाठस्तु न साधीयान्। कर्त्तृणां—प्रभूणाम्; उद्यमविहीनानामिति भावः; सम्पत्—राज्यादिसम्पत्तिः, गृह्यते एव—ग्रहीतुं शक्यते एव॥ ९॥

अभ्युदयार्थमयतमानानां सम्पन्नाशः अवश्यम्भावी इत्याह, अतीति।—अतिदाक्षिण्ययुक्तानाम्—अतिशयेन सरलानामुदाराणां वा; लाभालाभौ अगणयतामिति भावः; ("दक्षिणे सरलोदारौ" इत्यमरः), तथा पदे पदे—प्रतिक्षणं, [वीप्सायां द्वित्वम्] शङ्कितानां—जातसन्देहानाम्; प्रारब्धमिदं सिध्यति वा न वा

किञ्च।—आदानस्य प्रदानस्य कर्त्तव्यस्य च कर्म्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति सम्पदः॥ ११॥
अवमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः।
स्वार्थं समुद्धरेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता॥१२॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः।
एतदेवातिपाण्डित्यं यत् स्वल्पाद् भूरिनाशनम्॥१३॥

इति बुद्ध्या दोलायमानचेतसामिति भावः; तथा परापवादभीरूणां—परापवादात्—परनिन्दायाः, भीरूणां—भयशीलानाम; एतत्कार्य्यकरणे लोको मां निन्दिष्यतीति भयात् कार्य्यमनारभमाणानामिति भावः; जनानामिति शेषः, [ "षष्ठी शेषे" ( २।३।५० पा० ) इति कर्म्मणि षष्ठी ] दूरतः,—दूरात् एव, सम्पदः,—समृद्धयः, यान्ति—गच्छन्ति॥ १०॥

चिरकारिता दोषाय इत्याह, आदानस्येति।—कालः,—समयः, क्षिप्रं—झटिति, [ क्रि० विण् ] अक्रियमाणस्य—अनिष्पाद्यमानस्य, [ नञ्+कृ+कर्म्मणि शानच् षष्ठी ] आदानस्य—ग्रहणस्य, प्रदानस्य—अर्पणस्य, तथा कर्त्तव्यस्य—करणीयस्य, कर्म्मणश्च,—कार्य्यस्य च, सम्पदः,—समृद्धीः, फलानीति यावत्, [ २या बहुव० ] पिबति—हरति, विलुम्पतीत्यर्थः; दीर्घसूत्रतायाः सकलकर्मनाशिनीत्वात् शुभस्य शीघ्रकरणीयत्वाच्च इति भावः॥ ११॥

सर्वथैव स्वार्थः साधनीय इत्याह, अवेति।—प्राज्ञः,—पण्डितः, [ प्र+ज्ञा+कः ततः "प्रज्ञादिभ्यश्च" ( ५।४।३८ पा० ) इति स्वार्थे अण् ] अवमानम्—अवहेलनं, पुरस्कृत्य—अग्रे कृत्वा, मानञ्च—सम्मानञ्च, पृष्ठतः,—पश्चात्, कृत्वा—विधाय, अपमानमेव भविष्यति मानन्तु असम्भवीति मनसि कृत्वेत्यर्थः, स्वार्थं—निजप्रयोजनं, समुद्धरेत्—साधयेत्, [सम्+उत्+हृ+विधिलिङ् यात्] स्वार्थभ्रंशः,—स्वार्थहानिः, मूर्खता हि—अपाण्डित्यमेव; येन केनापि प्रकारेण स्वार्थः साधनीय इति भावः॥ १२॥

नेति।—मतिमान्—बुद्धिमान्, नरः,—जनः, स्वल्पस्य—तुच्छस्य, कृते—निमित्तं, भूरि—बहुतरं, न नाशयेत् [नश+णिच्+विधिलिङ्-यात्]। स्वल्पात्—स्वल्पं संरक्ष्य, [ ल्यब्लोपे पञ्चमी] यत्, भूरिनाशनं—प्रभूतहानिः, एतत् अतिपाण्डित्यमेव—अतिबुद्धिजीविनामेव योग्यमित्यर्थः; महामूर्खत्वमिति भावः। "एतदेवात्र पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम्।" इति पाठे—स्वल्पात्—अत्यल्पं परित्यज्य, यत् भूरिणः,—

जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात् तेन हन्यते ॥ १४ ॥
प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति संहताः।
हस्तन्यस्तातपत्रस्य वारिधारा इवारयः ॥ १५ ॥
अफलानि दुरन्तानि समव्ययफलानि च।
अशक्यानि च वस्तूनि नारभेत विचक्षणः" ॥ १६ ॥

प्रभृतस्य, रचणम् अत्र एतदेव पाण्डित्यम्। अत्र समार्थकः श्लोकः यथा रघौ,—"अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्।" इति ॥ १३ ॥

क्षुद्रोऽपि शत्रुर्नैवोपेक्ष्य इत्याह, जातेति।—यः, जनः इति शेषः, जातमात्रम्—उत्पन्नमात्रमेव, शत्रुं—वैरिणं, व्याधिं वा—रोगं वा, प्रशमं—शान्तिं, न नयेत्—न प्रापयेत्, सः, अतिपुष्टाङ्गयुक्तोऽपि—अतिपुष्टैः,—अत्यधिकं स्थूलैः, प्रभृतैश्च, अङ्गैः,—करचरणाद्यवयवैः, अमात्यादिभिः सहायैश्च, युक्तोऽपि—समन्वितोऽपि, पश्चात्—अनन्तरं, शत्रुव्याध्योः प्रवृद्धावस्थायामित्यर्थः, तेन—शत्रुणा व्याधिना वा, हन्यते—विनाश्यते। "ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च। पुनश्च वर्द्धते यस्मात् तस्मात् शेषं न कारयेत् ॥" इति वचनादिति भावः। अत्र समार्थकः श्लोको यथा माघे—"उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता। समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥" इति ॥ १४ ॥

बुद्धिर्यस्य बलं तस्य इत्याह, प्रज्ञेति।—वारिधाराः,—वृष्टिधाराः, हस्तन्यस्तातपत्रस्य इव—हस्ते न्यस्तम् आतपत्रं येन तस्येव, करधृतच्छत्रस्य जनस्येव, संहताः,—सम्मिलिताः, अपीति शेषः, अरयः,—शत्रवः, प्रज्ञागुप्तशरीरस्य—प्रज्ञया—बुद्ध्या, गुप्तं—रक्षितं, शरीरं—देहः यस्य तादृशस्य, विमृश्यकारिणो जनस्य, किं करिष्यन्ति? न किमपीत्यर्थः ॥ १५ ॥

अफलानीति।—विचक्षणः,—निपुणः जनः, अफलानि—निष्फलानि, अप्रयोजनकानीत्यर्थः, दुरन्तानि—दुः अन्ते येषां तानि, दुष्टपरिणामानि, क्लेशावसानानि इत्यर्थः, समव्ययफलानि च—व्ययफलतुल्यानि च, लाभशून्यानीत्यर्थः, तथा अशक्यानि च—आत्मनः शक्तिमतिक्रान्तानि च, असाध्यानि चेत्यर्थः, वस्तूनि—कार्य्याणि, न आरभेत—न कुर्य्यात्, [ आ + रभ + विधिलिङ्-ईत ]। तथा च—"निष्फलं क्लेशबहुलं सन्दिग्धफलमेव च। न कर्म्म कुर्य्यान्मतिमान् सदा वैरानुबन्धि च ॥" इति मनुः ॥ १६ ॥

ततश्चैवं विचिन्त्यन्नभुक्त एव दिनस्य तृतीये यामे एक एव मन्त्रयित्वा (ठ) वङ्गदेशाधीश्वरस्य महाबलस्य वत्सराजस्य आकारणाय स्वमङ्गरक्षकं प्राहिणोत्। स चाङ्गरक्षको वत्सराजमुपेत्य प्राह,—"राजा त्वामाकारयति" इति। ततः स रथमारुह्य परिवारेण परिवृतः समागतो रथादवतीर्य्य राजानमवलोक्य प्रणिपत्योपविष्टः। राजा च सौधं निर्ज्जनं विधाय वत्सराजं प्राह,—

"राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति।
ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते ॥ १७ ॥

अतस्त्वया भोजो भुवनेश्वरीविपिने हन्तव्यः प्रथमयामे निशायाः, शिरश्चान्तःपुरमानेतव्यम्" इति।

स चोत्थाय नृपं नत्वा आह, (ड)—"देवादेशाः प्रमाणम्; तथाऽपि भवल्लालनात् किमपि वक्तुकामोऽस्मि, ततः सापराधमपि मे वचः क्षन्तव्यम्।—

(ठ) "वङ्गदेशाधीश्वरस्य" इत्यत्र "वङ्गदेशाधीश्वरेण" इति पाठे—वङ्गदेशाधीश्वरेण सहेत्यर्थः। आकारणाय—आह्वानाय। [आ+कृ+णिच्+ल्युट् ४र्थी १व०। "हूतिराकारणाह्वानम्" इत्यमरः]।

प्रभुभृत्ययोः कर्त्तव्यं विवृणोति, राजेति।—राजा—नृपतिः, तुष्टोऽपि—प्रीतोऽपि, [तुष+कर्त्तरि क्तः] भृत्यानां—सेवकानां, [शेषे षष्ठी] मानमात्रं—केवलं सम्मानमेव; न तु भृत्यार्थे प्राणान् इति भावः; प्रयच्छति—ददाति, ते तु—भृत्यास्तु, सम्मानिताः,—प्रभुतः लब्धमानाः सन्तः, प्राणैरपि—प्राणदानेनापि, तस्य—राज्ञः, उपकुर्व्वते—उपकारं कुर्व्वन्ति। [उप+कृ+लट् अन्ते] ॥ १७ ॥

(ड) देवादेशाः,—देवस्य—राज्ञः, आदेशाः,—आज्ञाः, प्रमाणं—शास्त्रम्; शास्त्रादेशवत् अवश्यपाल्या इति भावः; ("प्रमाणं नित्यमर्य्यादाशास्त्रेषु सत्यवादिनि।" इति मेदिनी। अत्र प्रमाणमिति आदेशाः इत्यस्य विशेषणमपि नपुंसकमेकवचनञ्च उद्देश्यविधेयभावस्थले लिङ्गवचनयोस्तन्त्रता-नियमाभावादिति ज्ञेयम्)।

भोजे द्रव्यं न सेना वा परिवारो बलान्वितः।
परं पीत इवास्तेऽद्य स हन्तव्यः कथं प्रभो! ॥ १८ ॥
पारम्पर्य्ये इवासक्तस्त्वत्पादे उदरम्भरिः।
तद्वधे कारणं नैव पश्यामि नृपपुङ्गव!" ॥ १९ ॥

ततो राजा सभायां प्रातः प्रवृत्तं सर्व्वं वृत्तमकथयत्। स च श्रुत्वा हसन्नाह,—

"त्रैलोक्यनाथो रामोऽस्ति वसिष्ठो ब्रह्मपुत्रकः।
तेन राज्याभिषेके तु मुहूर्त्तः कथितोऽभवत् ॥ २० ॥
तन्मुहूर्त्तेन रामोऽपि वनं नीतोऽवनीं विना।
सीताऽपहारोऽप्यभवद्वैरिञ्चिवचनं वृथा ॥ २१ ॥
[ युग्मकम् ]।

वक्तुकामः,—वक्तुं कामः,—अभिलाषो यस्य तादृशः, [ "लुम्पेदवश्यमः कृत्ये तुम् कामममनसोरपि" इति वक्तुमित्यस्य मकारलोपः ]।

स्वाभिप्रायं विवृणोति, भोज इति।—हे प्रभो!—राजन्, भोजे—भवदीयभ्रातृपुत्रे, द्रव्यं—धनं, सेना—सैन्यं, वा—अथवा, बलान्वितः,—बलवान्, परिवारः,—परिजनवर्गश्च, न, अस्तीति शेषः, परं—परन्तु, पीत इव—तव पुत्र इव, आस्ते—विद्यते, अद्य—इदानीं, सः,— भोजः, कथं—कस्मात्, हन्तव्यः,—मारयितव्यः? [ हन्+कर्म्मणि तव्यः ]। सर्व्वथैव निःसहायो बालो महाबलैः भवद्भिर्नैव हन्तव्य इत्यभिप्रायः ॥ १८ ॥

पारम्पर्य्ये इति।—हे नृपपुङ्गव!—राजशार्दूल!, पारम्पर्य्ये इव—वंशपरम्परासमागत आश्रितजनान्तर इव, उदरम्भरिः,—उदरपोषकमात्रः भोजः; न तु द्रव्यादिसमन्वितः इति भावः; त्वत्पादे—तव चरणे, आसक्तः,—लग्नः, अनुरक्त इति यावत्, तद्वधे—तस्य मारणे, कारणं—हेतुं, नैव पश्यामि—नैवावलोकयामि ॥ १९ ॥

मौहूर्त्तिकवचनस्य व्यभिचारं प्रदर्शयति, त्रैलोक्येत्यादि द्वाभ्याम्।—रामः,—दाशरथिः, त्रैलोक्यनाथः,—त्रिभुवनाधीश्वरः, (तस्य विष्णोरवतारत्वात्) अस्ति, वसिष्ठः ब्रह्मपुत्रकः,—ब्रह्मणस्तनयः, अस्ति; उभावेव महापुरुषौ इति भावः; ("वशिष्ठः वसिष्ठः" इति शब्दद्वयम् एकार्थवाचकम्)। तेन तु—वसिष्ठेन तु, ब्रह्मपुत्रेण सर्व्वज्ञेनेत्यर्थः, राज्याभिषेके, रामस्य इति शेषः, मुहूर्त्तः,—लग्नं, कथितः,—निरूपितः,

जातः कोऽयं नृपश्रेष्ठ ! किञ्चिज्ज्ञ उदरम्भरिः ।
यदुक्त्या मन्मथाकारं कुमारं हन्तुमिच्छसि ? ॥ २२ ॥

किञ्च ।—किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति सञ्चिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ? ॥२३॥

अभवत्; परन्तु तन्मुहूर्त्तेन—तेनैव लग्नेन इत्यर्थः, [ कर्त्ता ] रामोऽपि—त्रिलोकी-नाथोऽपि, (का कथाऽन्येषामित्यपेरर्थः) अवनीं विना—पृथिवीराज्यं विना, वनम्—अरण्यं, नीतः,—प्रापितः, सीताऽपहारोऽपि—सीताहरणञ्च, अभवत्, वैरिञ्चिवचनं—विरिञ्चेः अपत्यं वैरिञ्चिः,—वसिष्ठः, तस्य वचनं—वाक्यञ्च, वृथा—निष्फलम्, अभवदिति शेषः; अतो मौहूर्त्तिकवचने विश्वासो नैव कर्त्तव्यः इत्याशयः॥ २०।२१ ॥

न कोऽपि सर्वज्ञोऽस्मिन् जगति इत्याह, जात इति ।—हे नृपश्रेष्ठ ! जातः,—उत्पन्नः, उत्पत्तिधर्म्मा इति यावत; मरणधर्म्मा इति भावः; अत एव किञ्चिज्ज्ञः,—अल्पज्ञानवान्; मरणधर्म्मित्वादसर्वज्ञ इति भावः; तथा उदरम्भरिः,—स्वोदरपूरणार्थमेव इतस्ततः पर्य्यटनशीलः; उदरपोषणार्थमेव चाटुवाक्येन जनमनोरञ्जकः इति भावः; अयं—भवदग्रस्थः, कः ?—कोऽयं चाटुवादी अतितुच्छः प्रवञ्चकः ? इति भावः; सर्वज्ञत्वादिविभूतिसम्पन्नस्य धनिनो द्वारि द्वारि पर्य्यटनासम्भवात् तादृशाटनशीलस्यास्य सर्वज्ञत्वाभावादतितुच्छत्वमेवेत्याशयः; यदुक्त्या—यस्य प्रतारकस्य वाक्येन, (त्वं) मन्मथाकारं—मन्मथस्य आकार इव आकारो यस्य तं, कन्दर्पकान्तिं, कुमारं—राजपुत्रं भोजं, हन्तुं—नाशयितुम्, इच्छसि—अभिलषसि ? [इष + लट् सि]; प्रकृष्टविभूतिसम्पन्नः ब्रह्मपुत्रवशिष्ठोऽपि यत्र विफलप्रयासः सञ्जातः, असर्वज्ञस्योदरमात्रपरायणस्यास्य तदंश भविष्यद्वचनं विश्वस्य कुमारहननं नृपश्रेष्ठस्य ते सर्वथैवानुचितमेवेति भावः ॥ २२ ॥

किमिति ।—इदं—चिकीर्षितम् एतत्, कृत्वा—सम्पाद्य, स्थितस्येति शेषः, मे—मम, किं नु—किं वा फलं, स्यात्—भवेत, [ सम्भावनायां लिङ् ] अकुर्व्वतः,—इदमसम्पादयतश्च, [नञ् + कृ + शतृ ६ष्टी१व०] मे—मम, किं नु—किं वा फलं, स्यात्—भवेत् ? इति—एतत, मनसा—बुद्ध्या, सञ्चिन्त्य—विविच्य, [सम् + चिन्ति + ल्यप्] प्राज्ञः,—पण्डितः, कुर्वीत—कर्त्तव्यमवधारयेत्, वा—अथवा, न वा—नैव, कुर्वीत इति अन्वयः; कार्य्यफलं विविच्यैव कर्म्म कुर्य्यात्, अन्यथा अनिष्टापातसम्भावनेति भावः ॥ २३ ॥

उचितमनुचितं वा कुर्वता कार्य्यजातं
परिणतिरवधार्य्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्म्मणामा विपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः॥ २४॥

किञ्च।—

येन सहाऽऽसितमशितं हसितं कथितञ्च रहसि विस्रब्धम्।
तं प्रति कथमसतामपि निवर्त्तते चित्तमा मरणात्?॥ २५॥

किञ्च। अस्मिन् हते वृद्धस्य राज्ञः सिन्धुलस्य (ढ) परमप्रीतिपात्राणि ये महावीरास्तवैवानुमते स्थिताः, ते त्वन्नगरमुल्लोल-

परिणामचिन्तामकृत्वा कृतस्य कर्मणो दोषमाह, उचितमिति।—उचितं—न्याय्यम्, अनुचितम्—अन्याय्यं वा, कार्य्यजातं—कर्म्मसमूहं, कुर्व्वता—सम्पादयता, पण्डितेन—धीरेण, परिणतिः,—कार्य्यस्य परिणामः, यत्नतः,—यत्नेन, अवधार्य्या—निश्चेतव्या, [ अव + धृ + णिच् + य + टाप् ]। तथा हि अतिरभसकृतानाम—अतिरभसेन—अतिवेगेन, कर्त्तव्यमकर्त्तव्यं वेत्यविचार्य्य सहसैवेत्यर्थः, कृतानाम्—अनुष्ठितानां, कर्म्मणां—कार्य्याणां, विपाकः,—परिणामः, आ विपत्तेः,—विपत्तिं यावत, मृत्युकालपर्य्यन्तमिति यावत, शल्यतुल्यः—शल्यसदृशः, अतिकष्टदायक इत्यर्थः, हृदयदाही—हृदयं दहति यः सः, हृदयसन्तापकः, [ दह + णिनिः ] भवति ; कार्य्यस्य औचित्यानौचित्यं परिणामफलञ्च अवश्यमेव विचार्य्यं, हठकृतानान्तु कार्य्याणां परिणामः आ मृत्योः सन्तापप्रद एव भवतीति भावः। तथा च भारविः—"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।" इति। मालिनी वृत्तम्॥ २४॥

येनेति।—येन सह आसितम—एकत्रोपविष्टम्, [ आस + भावे क्तः ] अशितं—भक्षितम्, [ अश + भावे क्तः ] हसितं, तथा रहसि—निर्जने, विस्रब्धं—विश्वस्तवाक्य, कथितञ्च—आलोचितञ्च, [ कथि + भावे क्तः ] तं—जनं, प्रति, असतामपि—असज्जनानामपि, ( का कथा सतामित्यपेरर्थः ) चित्तं—मनः, आ मरणात—मरणपर्य्यन्तं, कथं—केन प्रकारेण, निवर्त्तते?—पराङ्मुखं भवति? नैवेत्यर्थः। आर्य्या वृत्तम्॥ २५॥

(ढ) परमप्रीतिपात्राणि—अत्यन्तस्नेहास्पदानि। [ अत्र पात्रशब्दस्य अजहल्लिङ्गत्वात् नपुंसकत्वमेव ]। महावीराः,—महाबलाः भटाः। उल्लोलकल्लोलाः,—उल्लोलाः,—

कल्लोलाः पयोधारा इव प्लावयिष्यन्ति ; चिराहृढमूलेऽपि त्वयि प्रायः पौराः भोजं भुवो भर्त्तारं भावयन्ति । किञ्च,—

सत्यपि च सुकृतकर्म्मणि दुर्नीतिश्चेत् श्रियं हरत्येव ।
तैलैः सदोपयुक्तां दीपशिखां विदलयति हि वातालिः ॥ २६ ॥

तत् देव ! पुत्रबधः क्वापि न हिताय" ।

इत्युक्तं वत्सराजवचनमाकर्ण्य राजा कुपितः प्राह,—"त्वमेव राज्याधिपतिः, न तु सेवकः ;—

स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः ।
तज्जीवनमपि व्यर्थमजागलकुचाविव" ॥ २७ ॥ इति ।

ततो वत्सराजः "कालोचितमालोचनीयम्" इति मत्वा तूष्णीं बभूव ।

अथ (ग) लम्बमाने दिवाकरे उत्तुङ्गसौधोत्सङ्गादवतरन्तं

---

उन्नताः चञ्चलाश्च, कल्लोलाः,—तरङ्गाः येषां ते, उन्नततरङ्गशालिनः । पयोधाराः,—जलप्रवाहाः । "पयोधराः" इति पाठान्तरम् । प्लावयिष्यन्ति—प्लावितं करिष्यन्ति, विध्वस्तं करिष्यन्तीत्यर्थः । भावयन्ति—चिन्तयन्ति ।

सतीति ।—सुकृतकर्म्मणि—पुण्यकार्य्ये, सत्यपि—विद्यमानेऽपि, [ भावे ७मी ] चेत—यदि, दुर्नीतिश्च—दुर्नयश्च, स्यादिति शेषः, तर्हि सा, श्रियं—सम्पदं, हरत्येव—विनाशयत्येव, [दुर्नीतिः कर्त्तृपदम ] । हि—तथा हि, वातालिः,—वायुमण्डली, तैलैः सदा उपयुक्तां—समन्विताम्, अपि इति शेषः, दीपशिखां विदलयति—विनाशयति, निर्वापयतीत्यर्थः । [ वि + दल + णिच् + लट् ति ] । आर्य्या वृत्तम् ॥ २६ ॥

स्वामीति ।—यः भृत्यः,—सेवकः, स्वाम्युक्ते—प्रभुवाक्ये, स्वामिना आदिष्टे कार्य्ये इत्यर्थः, [ विषयाधिकरणे ७मी ] न यतते—यत्नं न करोति, स भृत्यः, भृत्यपाशकः,—भृत्याधमः, [ "याप्ये पाशप्" ( ५।३।४७ पा० ) इति निन्दार्थे भृत्यशब्दात् पाशप्प्रत्ययः ]। तज्जीवनमपि—तस्य—तादृशभृत्यस्य, जीवनमपि, अजागल-कुचाविव—अजायाः—छाग्याः, गले, कुचौ—लम्बमानौ स्तनाविव, [ कुचशब्दो नित्यद्विवचनान्तः ] व्यर्थं—निरर्थकम् ॥ २७ ॥

(ग) लम्बमाने—अस्तोन्मुखत्वात् पतति सति इत्यर्थः । उत्तुङ्गसौधोत्सङ्गात्—

कुपितमिव कृतान्तं वत्सराजं वीक्ष्य समेता अपि विविधेन मिषेण स्वभवनानि प्रापुर्भीताः सभासदः। ततः स्वसेवकान् स्वागारपरित्राणार्थं प्रेषयित्वा रथं भुवनेश्वरीभवनाभिमुखं विधाय (ग) भोजकुमारोपाध्यायाऽऽकारणाय प्राहिणोदेकं वत्सराजः। स चाह पण्डितं—"तात! त्वामाकारयति वत्सराजः" इति। स तदाकर्ण्य वज्राहत इव, भूताविष्ट इव, ग्रहग्रस्त इव, तेन सेवकेन करेण धृत्वाऽऽनीतः पण्डितः। तञ्च बुद्धिमान् वत्सराजः सप्रणाममाह,—"पण्डित! तात! उपविश। राजकुमारं जयन्तम् अध्ययनशालाया आनय" इति। तत आयान्तं जयन्तं कुमारं किमप्यधीतं पृष्ट्वाऽनैषीत्। पुनः प्राह पण्डितं,—"विप्र! भोजकुमारमानय" इति। ततो विदितवृत्तान्तो भोजः कुपितो ज्वलन्निव शोणितेक्षणः समेत्य प्राह,—"आः पाप! राज्ञो मुख्यकुमारम् एकाकिनं मां राजभवनात् बहिरानेतुं तव का नाम शक्तिः?" इति वामचरणपादुकामादाय भोजेन तालुदेशे हतो वत्सराजः। ततो वत्सराजः प्राह,—"भोज! वयं राजादेशकारिणः" इति बालं रथे निवेश्य, खड्गमपकोशं कृत्वा जगामाशु महामायाभवनम्।

अथ गृहीते भोजे लोकाः कोलाहलं चक्रुः, हुंभावश्च प्रवृत्तः। "किं किम्?" इति ब्रुवाणा भटा विक्रोशन्त आगत्य सहसा भोजं वधाय नीतं ज्ञात्वा हस्तिशालामुष्ट्रशालां वाजिशालां रथशालां प्रविश्य सर्वान् जघ्नुः। ततः (घ) प्रतोलीषु राजभवनप्राकार-

उत्तुङ्गम्—उन्नतं, यत् सौधं—राजसदनं, तस्य उत्सङ्गः,—मध्यं तस्मात्, उन्नतप्रासादाभ्यन्तरादित्यर्थः। मिषेण—छलेन।

(ग) भोजकुमारोपाध्यायाऽऽकारणाय—भोजकुमारस्य उपाध्यायः,—अध्यापकः, तस्य आकारणाय—आह्वानाय। प्राहिणोत्—प्रेरयामास। [प्र + हि + लङ्-द]।

(घ) प्रतोलीषु—रथ्यासु। ("रथ्या प्रतोली विशिखा" इत्यमरः)।

वेदिकासु बहिर्द्वारविटङ्केषु पुरसमीपेषु भेरीपटहमुरजमड्डुकडिण्डिमनिनदाडम्बरेणाम्बरं विडम्बितमभूत्। केचिद्विमलासिना, केचिद्विषेण, केचित् कुन्तेन, केचित् पाशेन, केचित् वह्निना, केचित् परशुना, केचित् भल्लेन, केचित् तोमरेण, केचित् प्रासेन, केचिदश्मना धारायां ब्राह्मणयोषितो राजपुत्रा राजसेवका राजानः पौराश्च प्राणपरित्यागं दधुः। ततः सावित्रीसंज्ञा भोजस्य जननी विश्वजननीव स्थिता दासीमुखात् (द) स्वपुत्रस्थितिमाकर्ण्य कराभ्यां नेत्रे पिधाय रुदती प्राह,—"पुत्र! पितृव्येण कां दशां गमितोऽसि? ये मया नियमा उपवासाश्च त्वत्कृते कृताः, तेऽद्य मे विफला जाताः, दशापि दिशां मुखानि शून्यानि; पुत्र! देवेन सर्वज्ञेन सर्वशक्तिनाऽऽमृष्टाः श्रियः। पुत्र! एनं दासीवर्गं सहसा विच्छिन्नशिरसं पश्य" इत्युक्त्वा भूमावपतत्।

ततः (ध) प्रदीप्ते वैश्वानरे समुद्भूतधूमस्तोमेनेव मलीमसे

राजभवनप्राकारवेदिकासु—राजभवनस्य प्राकारः,—प्राचीरं, तस्य वेदिकासु—तत्संलग्नोपवेशनार्हस्थानेषु। बहिर्द्वारविटङ्केषु—बहिर्द्वारस्य—तोरणस्य, विटङ्केषु—कपोतपालिकासु, द्वारप्रान्ते काष्ठनिर्मितकपोतावासस्थानेषु इत्यर्थः; अत्र विटङ्कशब्देन विटङ्कसमीपवर्त्तिस्थानं बोध्यं, तेन च कपोतावासस्थानस्याधःप्रदेश इत्याशयः। ("कपोतपालिकायान्तु विटङ्कं पुंनपुंसकम्।" इत्यमरः)। भेरीपटहादयः,—वाद्ययन्त्रविशेषाः, तेषां निनदः,—शब्दः, तस्य आडम्बरेण—संरम्भेण, बाहुल्येनेत्यर्थः। विडम्बितं—तिरस्कृतं, प्राप्त-प्रतिघातमित्यर्थः।

(द) स्वपुत्रस्थितिं—स्वपुत्रस्य—भोजस्य, स्थितिम्—अवस्थानं, प्राणहननार्थं भुवनेश्वरीविपिने नयनमिति यावत्। आमृष्टाः,—सम्यक् शोधिताः, सर्वथा उन्मूलिता इति भावः।

(ध) प्रदीप्ते वैश्वानरे—भटादिभिः देहत्यागार्थं यो वह्निः प्रज्वालितः, तस्मिन् प्रोद्दीपिते सति। मलीमसे—मलिने, [मल+"ज्योत्स्नातमिस्रा" (५।२।११४ पा०) इति ईमसच्]।

नभसि पापत्रासादिव पश्चिमपयोनिधौ मग्ने मार्त्तण्डमण्डले महामायाभवनमासाद्य प्राह भोजं वत्सराजः,—“कुमार! भृत्यानां दैवत! ज्योतिःशास्त्रविशारदेन केनचिद्ब्राह्मणेन तव राज्यप्राप्तावुदीरितायां राज्ञा भवद्वधो व्यादिष्टः” इति। भोजः प्राह,—

“रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम्।
कारागारनिषेवणञ्च मरणं सञ्चिन्त्य लङ्केश्वरे
सर्वः कालवशेन नश्यति नरः को वा परित्रायते? ॥ २८ ॥
लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाऽम्भोनिधे-
र्देवेन प्रणयप्रसादविधिना मूर्द्ध्ना धृतः शम्भुना।

स्वस्य वधदण्डादेशं श्रुत्वाऽपि निर्भीको भोजः सर्व्वानियततत्त्वं पुरावृत्तालोचनपुरःसरं विवृणोति, रामे इति।—रामे—दशरथतनये, प्रव्रजनं—प्रव्रज्याग्रहणं, कैकेयीनिर्देशेन वनगमनमिति यावत्, बलेः,—बलिराजस्य, नियमनं—बन्धनं, वामनरूपिणा नारायणेनेति शेषः; पाण्डोः सुतानां—युधिष्ठिरादिपञ्चपाण्डवानां, वनं—भ्रातृविरोधात् वनवासम् इत्यर्थः, वृष्णीनां—यदुवंशीयानां, निधनं—ध्वंसं, श्रीकृष्णलीलयेति शेषः; नलस्य नृपतेः,—नलराजस्य, राज्यात् परिभ्रंशनं—विच्युतिं, कलिकोपात् इति शेषः; लङ्केश्वरे—रावणे, कारागारनिवेशनं—काराक्लेशभोगं, सहस्रबाहुनाऽर्ज्जुनेनेति शेषः; तथा मरणञ्च—मृत्युञ्च, श्रीरामचन्द्रहस्तेनेति शेषः; सञ्चिन्त्य—पर्य्यालोच्य, एष मे निश्चयो जातः इति शेषः; यत् सर्व्वः,—सकलः, नरः,—लोकः, कालवशेन—कालविपरिणामेनेत्यर्थः, प्राप्तकाले इति यावत्, नश्यति—विनाशं प्राप्नोति, को वा, जन इति शेषः, परित्रायते?—रक्षति? कालवशगं नरमिति शेषः, न कोऽपीत्यर्थः। शार्द्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

“नियतिः केन बाध्यते?” इत्युपजीव्याह, लक्ष्मीति।—लक्ष्मीः,—प्रसिद्धा, कौस्तुभः,—मणिविशेषः, पारिजातः,—देवतरुविशेषः, स्वर्गीयवृक्षविशेषः इति यावत्, तेषां सहजः,—एकत्र दुग्धाब्धौ जातत्वात् सहोदरः, सुधाऽम्भोनिधेः,—सुधासागरस्य, अमृतोद्भूतिस्थानस्य क्षीरसमुद्रस्येत्यर्थः, सूनुः,—पुत्रः; क्षीराब्धेरुत्थितत्वादिति भावः; तथा देवेन शम्भुना—महादेवेन, प्रणयप्रसादविधिना—

अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः
केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ? ॥ २९ ॥
विकटोर्व्यामप्यटनं शैलारोहणमपांनिधेस्तरणम् ।
निगडं गुहाप्रवेशो विधिपरिपाकः कथं न सन्तार्य्यः ॥ ३० ॥
अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् ।

प्रणयेन—प्रीत्या, यः प्रसादविधिः,—अनुग्रहविधानं, तेन हेतुना, मूर्द्ध्ना—मस्तकेन, धृतः,—गृहीतः, (पुरा किल देवासुरैः मिलित्वा समयपूर्व्वकं मथ्यमानात् क्षीरसमुद्रात् हलाहल-कौस्तुभमणि-पारिजातादिभिः समुत्थितं चन्द्रं महादेवो ललाटे धृतवानिति पौराणिकी कथा) क्षपा—रात्रिः, तस्याः वल्लभः,—पतिः क्षपावल्लभः,—चन्द्रः, अद्यापि—इदानीमपि, दैवविहितं—नियतिनियमितं, क्षैण्यं—क्षीणतां, [क्षीण + भावार्थे ष्यञ्] नैव उज्झति—नैव परित्यजति, तथा हि पाषाणरेखासखी—पाषाणे—प्रस्तरे, रेखा—लेखा, रलयोरभेदात् लिपिरित्यर्थः, चिह्नं वा, ("लेखा राज्यां लिपावपि" इति हैमः) तस्याः सखी—सहचरी, प्रस्तरखोदितलिपि-सदृशीत्यर्थः, विधिगतिः,—दैवविहितावस्था, अन्येन केन, जनेन इति शेषः, विलङ्घ्यते ?—अन्यथा कर्त्तुं शक्यते ? न केनापीत्यर्थः ; [वि + लङ्घ + कर्म्मणि लट्-ते]। लक्ष्म्यादिसहोदरः महादेवेन समादृतश्च चन्द्रोऽपि दैवगतिं लङ्घयितुं न शक्नोति, किं पुनरन्यः इति भावः। शार्द्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

विकटेति।—विकटोर्व्यां—भीषणस्थाने, अटनं—परिभ्रमणं, शैलारोहणं—पर्व्वत-शिखरे आरोहणम्, अपांनिधेः,—समुद्रस्य, [अलुक्समासः] तरणं—पारगमनं, निगडं—शृङ्खलाबन्ध इत्यर्थः, तथा गुहाप्रवेशः,—गह्वरप्रवेशश्च, (सर्व्व एव) विधिपरि-पाकः,—दैवपरिणामः, कथमपि—केनापि प्रकारेणेत्यर्थः, न—नैव, सन्तार्य्यः,—उल्लङ्घितुं शक्यः ; [सं + तृ + णिच् + य]। विधिनियमः केनापि लङ्घयितुं न शक्य इति भावः। आर्य्या वृत्तम् ॥ ३० ॥

धातुरिच्छैव बलवतीत्याह, अम्भोधीति।—यस्य—अवन्ध्येच्छस्य देवस्य, इच्छया—अभिलाषेण, अम्भोधिः,—जलनिधिः सागरः, स्थलतां—स्थलभावं, जलशून्यतामिति यावत्, स्थलं—भूमिः, निर्जलप्रदेश इत्यर्थः, जलधितां—समुद्रत्वं, जलमयत्वमिति यावत्, धूलीलवः,—धूलिकणाः, शैलतां—पर्व्वतभावं, मेरुः,—सुमेरुपर्व्वतः : अतिकठिनोन्नतोऽपीति भावः ; मृत्कणतां—मृत्तिकालेशतास्, अणुपरिमितमृत्तिका-

वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
लीलादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः" ॥ ३१ ॥

ततो वटवृक्षस्य पत्रमादाय एकं पुटीकृत्य जङ्घां छुरिकया छित्त्वा तत्र पुटके रक्तमारोप्य तृणेनैकस्मिन् पत्रे कञ्चन श्लोकं लिखित्वा वत्सं प्राह,—"महाभाग! एतत् पत्रं नृपाय दातव्यं, त्वमपि राजाऽऽज्ञां विधेहि" इति।

ततो वत्सराजस्यानुजो भ्राता भोजस्य प्राणपरित्यागसमये दीप्यमानमस्त्रश्रियमवलोक्य प्राह,—

"एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत् तु गच्छति ॥ ३२ ॥
न तत्र हि सहायार्थे माता भार्य्या च तिष्ठति।
न मित्रपुत्रौ न ज्ञातिर्धर्म्मस्तिष्ठति केवलः ॥ ३३ ॥

रूपतामित्यर्थः, तृणम; सुकोमलमपीति भावः; कुलिशतां—वज्रत्वं, वज्रम; सुकठोरमपीति भावः; तृणप्रायतां—तृणतुल्यतां, वह्निः,—अग्निः, शीतलतां—शैत्यं, हिमं—तुहिनं, दहनताम्—अनलत्वम्, आयाति—प्राप्नोति, लीलादुर्ललिताद्भुत-व्यसनिने—लीलया—क्रीड़ाव्याजेनेत्यर्थः, दुर्ललितं—भीषणम, अद्भुतं—विचित्रञ्च, व्यसनं—परेषामनिष्टोत्पादकः कामजो दोषः अस्यास्तीति तादृशाय, तस्मै—महाप्रभावाय, देवाय—विधये, नमः, अस्तु इति शेषः; यस्येच्छया असम्भवमपि सम्भवति, तस्मै नमस्कुर्म्मः इति भावः; यदा जगदीश्वरोऽपि एवं पराहितव्यसनी, तदा क्षुद्र-नरेश्वरस्य व्यसनित्वे कथैव नास्तीति तात्पर्य्यम्। शार्द्दूलविक्रीड़ितं वृत्तम् ॥ ३१ ॥

भोजं जिघांसोर्वत्सराजस्य षड्भिः श्लोकैर्विवेकोत्पादनार्थे धर्म्मोपदेशमाह, एक इति।—एकः,—केवलः, धर्म्म एव (नान्य इत्येवकारार्थः) सुहृत्—मित्रं, भवतीति शेषः, यः,—धर्म्मः, निधनेऽपि—मरणेऽपि, अनुयाति—अनुगच्छति, अन्यत्—अपरम्; धनबान्धवादिकमिति भावः; सर्व्वन्तु—सकलमेव, शरीरेण—देहेन, समं—सह, नाशं—विलयं, गच्छति—प्राप्नोति; मरणकाले पुत्रकलत्रादिषु कोऽपि न अनुयास्यति, केवलं धर्म्म एव सहचरः तिष्ठति इति भावः; अतो नरहत्यारूपं पापं मा कुरु इति फलितार्थः ॥ ३२ ॥

नेति।—ततः,—मरणादनन्तरं, माता—जननी, भार्य्या च—पत्नी च,

बलवानप्यशक्तोऽसौ धनवानपि निर्धनः ।
श्रुतवानपि मूर्खश्च यो धर्मविमुखो जनः ॥ ३४ ॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधस्थानं स रोगी किं करिष्यति ? ॥ ३५ ॥
जरां मृत्युं भयं व्याधिं यो जानाति स पण्डितः ।
स्वस्थस्तिष्ठेन्निषीदेद्वा स्वपेद्वा केनचिद्धसेत् ॥ ३६ ॥

सहायार्थं—साहाय्यार्थं, न हि—नैव, तिष्ठति, मित्रपुत्रौ—मित्रं पुत्रश्च तौ, न, तिष्ठतः इति शेषः ; ज्ञातिः,—पितृव्यादिस्ववंशजोऽपि, न, तिष्ठति इत्यनेनान्वयः ; केवलः धर्मः, —धर्म एव, नान्य इत्यर्थः, तिष्ठति—सहायार्थे वर्त्तते ॥ ३३ ॥

अधार्मिकस्य सर्व्वमेव विफलम् इत्याह, बलवानिति ।—यो जनः धर्मविमुखः,—धर्मानुष्ठानपराङ्मुखः, असौ—सः, बलवानपि—बलिष्ठोऽपि, अशक्तः,—अक्षमः ; धर्मबलाभावात् दुर्बल इति भावः ; धनवानपि—धनाढ्योऽपि, निर्धनः,—दरिद्रः ; धर्मरूपामूल्यरत्नविहीनत्वादिति भावः ; श्रुतवानपि—शास्त्रज्ञोऽपि, मूर्खश्च—अज्ञश्च ; शास्त्रविहितकर्माकरणादिति भावः ; गण्यते लोकैः इति शेषः ; धर्मविमुखस्य सर्व्वमेव व्यर्थमिति भावः ॥ ३४ ॥

इहैवेति ।—यो जनः, इहैव—अस्मिन्नेव जगति, नरकव्याधेः,—नरकरूपरोगस्य, चिकित्सां—प्रतिविधानं, न करोति—न विदधाति, स रोगी—नरकव्याधिपीडितः, निरौषधस्थानम्—औषधवर्जितं स्थानं, परलोकमिति यावत्, गत्वा किं करिष्यति ?—कमुपायमवलम्बिष्यति ? न किमपि कर्त्तुं शक्ष्यतीत्यर्थः ; कर्म्मचेत्रे अस्मिन् लोके पापं पुण्यं वा कर्त्तुं शक्यते, भोगक्षेत्रे स्वर्गे नरके वा केवलं पापपुण्ययोर्भोग एव भवति, न तु तत्र किमपि प्रतिविधानं कर्त्तुं शक्यते इति तात्पर्य्यम् ॥ ३५ ॥

पण्डितलक्षणमाह द्वाभ्यां, जरामिति ।—यो जनः जरां—वार्द्धक्यं, मृत्युं—मरणं, भयं—भीतिं, व्याधिं—रोगञ्च, जानाति ; अपरिहार्य्यत्वेन अवश्यम्भाव्यसुखकरत्वेन चेति भावः ; पण्डितः,—अभिज्ञः, देहस्यास्य परिणामविषयकज्ञानसम्पन्न इति यावत्, स स्वस्थः,—स्वस्मिन्—प्रकृतौ तिष्ठतीति तथाभूतः, "मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः" इति ज्ञानात् मृत्युभयपरिशून्यः अत एव आत्मारामः सन्नित्यर्थः, केनचित्—येन केनचित् सहेत्यर्थः, तिष्ठेत—अवस्थानं कुर्य्यात्, [ स्था + विधिलिङ्-यात् ] वा—अथवा, निषीदेत्—उपविशेत्, [ नि + सद + विधि-लिङ्-यात् ] स्वपेत् वा—निद्रां गच्छेद्वा, [ स्वप + विधिलिङ्-यात् । "स्वपेत्"

तुल्यजातिवयोरूपान् हृतान् पश्यति मृत्युना।
न हि तत्रास्ति ते त्रासो वज्रवद्धृदयं तव" ॥ ३७ ॥ इति।

ततो वैराग्यमापन्नो वत्सराजः भोजं "क्षमस्व" इत्युक्त्वा प्रणम्य तञ्च रथे निवेश्य (न) नगराद्बहिर्घने तमसि गृहमागमय्य भूमिगृहान्तरे निक्षिप्य भोजं ररक्ष। स्वयमेव (प) कृत्रिमविद्याविद्भिः सुकुण्डलं स्फुरद्वक्त्रं निमीलितनेत्रं भोजकुमारमस्तकं कारयित्वा तच्चादाय राजभवनं गत्वा राजानं नत्वा प्राह,—"श्रीमता यदादिष्टं, तत् साधितम्" इति। ततो राजा च पुत्रवधं ज्ञात्वा तमाह,—"वत्सराज! खड्गप्रहारसमये तेन

---

इति आर्षः, लौकिकव्याकरणसम्मतं पदन्तु "स्वप्यात" इति] हसेद्वा—हास्यकौतुकादिकं कुर्य्यात् वा; जरादीनाम् अवश्यम्भावित्वज्ञानेन सर्वावस्थायामेव तद्भयपरिशून्यत्वात् इति भावः। तुल्येति।—तुल्यजातिवयोरूपान्—जातिः,—ब्राह्मणत्वादिः, वयः,—यौवनं, बाल्यादिर्वा, रूपं—सौन्दर्य्यं तानि जातिवयोरूपाणि, [द्वन्द्वः] तुल्यानि—समानानि, जातिवयोरूपाणि येषां तान्, [बहुव्रीहिः] समानजातीन् समानवयसः समानरूपांश्चेत्यर्थः, अपि तान् सर्वान् जनानिति शेषः, मृत्युना—यमेन, हृतान्—विनाशितान्, सर्वानेव मृत्युकवलितानित्यर्थः, पश्यति—अवलोकयति, सदैव प्रत्यक्षीकरोतीत्यर्थः, किन्तु तत्र—तस्मिन् विषये, ते—तव, त्रासः,—भयं, न हि अस्ति—नैव विद्यते, अतः तव हृदयं—मनः, वज्रवत्—वज्रतुल्यं कठिनम् इत्यर्थः; "मृत्युनैवेदमावृतमासीत, नान्यत् किञ्चन मिषत" इत्यादिश्रुतिप्रमाणेन पण्डितः "सर्वं मृत्युवशं जगत्" "अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः" इत्यादिकं ज्ञात्वा प्राणान्तेऽपि पापाचरणं न करोति, किन्तु एतादृशमूढस्त्वं, यत् सर्वं ज्ञात्वाऽपि पापिष्ठस्य प्रभोः सन्तोषार्थं महत् पापं कर्त्तुमुद्यतोऽसीत्यहो! इति समुदितार्थः ॥ ३६—३७ ॥

(न) नगरात् बहिः, स्थितमिति शेषः, गृहमित्यनेनान्वयः। आगमय्य—आनाय्य, केनचित् विश्वस्तभृत्येनेति शेषः। [आ+गम+णिच्+ल्यप्]। भूमिगृहान्तरे—भूगर्भस्थगृहमध्ये।

(प) कृत्रिमविद्याविद्भिः,—कृत्रिमां—क्रियया निष्पाद्यां, विद्यां विदन्तीति तैः, कारुजीविभिः, शिल्पविशारदैरित्यर्थः।

पुत्रेण किमुक्तम्?" इति। वत्सस्तत् पत्रमदात्। राजा स्वभार्य्याकरेण दीपमानीय तानि पत्राक्षराणि वाचयति,—

"मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः?।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते!
नैकेनापि समं गता वसुमती मुञ्ज! त्वया यास्यति" ॥ ३८ ॥

राजा च तदर्थं ज्ञात्वा शय्यातो भूमौ पपात। ततश्च (फ) देवीकरकमलचालितचेलाञ्चलानिलेन ससंज्ञो भूत्वा,—"देवि! मां मा स्पृश हा हा पुत्रघातिनम्" इति विलपन् कुरर

पौराणिकवृत्तोद्घाटनेन सम्पदामस्थायित्वं विवृत्य मुञ्जमधिक्षिपति, मान्धातेति।—कृतयुगस्य—सत्ययुगस्य, अलङ्कारभूतः,—भूषणस्वरूपः, मान्धाता,—तदाख्यः प्रसिद्धः, महीपतिश्च,—राजा अपि, गतः,—मृतः, येन महोदधौ—सागरे, सेतुः विरचितः,—निर्म्मितः, असौ—प्रसिद्धः, दशास्यान्तकः,—दश आस्यानि—मुखानि यस्य सः दशास्यः,—रावणः, तस्य अन्तकः,—विनाशकः, रामचन्द्रः इत्यर्थः, क्व?—कुत्र? सोऽपि गत एव इति भावः; च—किञ्च, युधिष्ठिरप्रभृतयः,—युधिष्ठिरादयः, अन्येऽपि—अपरे प्रसिद्धाः राजानोऽपि, दिवं—स्वर्गं, याताः,—गताः, [ या + कर्त्तरि क्तः १मा बहुव० ]। हे भूपते!—राजन्! मुञ्ज!, एकेनापि—पूर्वोक्तानाम् अन्यतमेन केनापि, समं—सह, वसुमती—पृथिवी, न गता—न प्रयाता, त्वया—भवता सह, यास्यति—गमिष्यति, इत्यहं सम्भावयामीति शेषः। मान्धातृप्रभृतीनां सुप्रसिद्धानां सार्व्वभौमाणां राज्ञामपि कालेन विलयं, पृथिव्याश्च पूर्व्ववदेवावस्थितां दृष्ट्वाऽपि भवतः संसारस्यानित्यतापरिज्ञानं न सञ्जातम्? इति छलेन राजानं प्रति कुमारस्य तिरस्कार एषः। उक्तञ्च—"अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्। शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्य्यमतःपरम् ॥" इति। वृत्तं शार्द्दूलविक्रीडितम् ॥ ३८ ॥

(फ) देवीकरकमलचालितचेलाञ्चलानिलेन—देव्याः,—राज्ञ्याः, करकमलेन—हस्तपद्मेन, चालितम्—आन्दोलितं, [ "चल प्रेषणे" इति चुरादिगणीयस्य चलधातोः णिच् ततः कर्म्मणि क्तः। भ्वादिगणीयस्य तु घटादित्वात् णिच्परे ह्रस्वत्वात् "चलितम्" इति रूपम्] यत् चेलाञ्चलं—वस्त्रान्तं, तस्य अनिलेन—तज्जातेन वायुना। ससंज्ञः,—सचेतनः। कुरर इव—उत्क्रोशाख्यपक्षिविशेष इव।

इव, द्वारपालानानाय्य "ब्राह्मणानानयत" इत्याह। ततः स्वाज्ञया समागतान् ब्राह्मणान् नत्वा—"मया पुत्रो हतः, तस्य प्रायश्चित्तं वदध्वम्" इति वदन्तं ते तमूचुः,—"राजन्! सहसा वह्निमाविश" इति। ततः समेत्य बुद्धिसागरः प्राह,—"यथा त्वं राजाधमः, तथैव अमात्याधमो वत्सराजः। तव किल राज्यं दत्त्वा सिन्धुलनृपेण तेन त्वदुत्सङ्गे भोजः स्थापितः, तच्च त्वया पितृव्येणान्यत् कृतम्;—

कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः।
विदधति तथाऽपराधं जन्मैव यथाऽस्य वृथा भवति ॥ ३९ ॥

सन्तस्तृणोत्सारणमुत्तमाङ्गात्
सुवर्णकोट्यर्पणमामनन्ति।
प्राणव्ययेनापि कृतोपकाराः
खलाः परे वैरमिवोद्वहन्ति ॥ ४० ॥

यौवनमदस्य अनर्थोत्पादकतामाह, कतिपयेति।—दुः,—दुष्टः, आत्मा—स्वभावो येषां ते [बहुव्रीहिः] दुरात्मानः,—दुष्टस्वभावाः जनाः, कतिपयदिवसस्थायिनि—कतिपयान्—कांश्चित्, दिवसान्—दिनानि व्याप्य स्थातुं शीलं यस्य तस्मिन् अल्पदिनस्थायिनि, न तु चिरस्थायिनीत्यर्थः, [स्था+णिनिः] मदकारिणि—मत्तताजनके, यौवने—तारुण्ये, तथा—तादृशम्, अपराधं—पापं, विदधति—कुर्व्वन्ति, [वि+धा+लट्-अन्ति] यथा—येनापराधेन, अस्य—पापकारिणः, जन्मैव—उत्पत्तिरेव, वृथा—निष्फलं, भवति—सम्पद्यते; दुरात्मान एव यौवनमदमत्ताः सन्तः महापापं कृत्वा विफलजन्मानो भवन्ति, न तु सज्जनानामेषा रीतिरिति भावः। तथा चोक्तम्;—"यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥" इति। आर्य्या वृत्तम् ॥ ३९ ॥

सदसतोः पार्थक्यं दर्शयति, सन्त इति।—सन्तः,—सज्जनाः, उत्तमाङ्गात्—शिरसः, तृणोत्सारणं—तृणस्य अपनायनम् अपि, यदि केनचित् निजमस्तकपतिततृणम् उत्सार्य्यते, तदपि इत्यर्थः, सुवर्णकोट्यर्पणं—सुवर्णमुद्राकोटिदानं, तत्तुल्यमित्यर्थः, आमनन्ति—मन्यन्ते; [आ+म्ना+लट्-अन्ति] अल्पे उपकारे कृतेऽपि

उपकारश्चापकारो यस्य व्रजति विस्मृतिम् ।
पाषाणहृदयस्यास्य जीवतीत्यभिधा मुधा ॥ ४१ ॥
यथाऽङ्कुरः सुसूक्ष्मोऽपि प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत् काले तथा लोकः सुरक्षितः ॥ ४२ ॥
हिरण्यधान्यरत्नानि धनानि विविधानि च ।
तथाऽन्यदपि यत्किञ्चित् प्रजाभ्यः स्युर्महीभृताम् ॥४३॥

सज्जनाः महोपकारं मन्यन्ते इति भावः ; किन्तु खलाः,—दुर्जनाः, प्राणव्ययेन—निजप्राणदानेन अपि, कृतोपकाराः—कृतः उपकारः येषां ते तादृशा अपि, यदि कश्चित् प्राणदानेनापि खलस्योपकारं करोति तदा तस्य उपकर्त्तुरपि इत्यर्थः, परे इव—शत्रव इव, [ परशब्दः सर्व्वनाम ] वैरं—शत्रुताम्, उद्वहन्ति—कुर्व्वन्तीत्यर्थः ; [ उत्+वह+लट्-अन्ति ]। एष एव सज्जनदुर्जनयोर्विभेदः यत्, सज्जनाः स्वल्पोपकारेऽपि महोपकारं मन्यन्ते, दुर्ज्जनास्तु महोपकारेऽपि कृतघ्ना एव भवन्तीति भावः ; एतादृशः खलः पापश्च त्वं, यत् सिन्धुलनृपेण महोपकृतोऽपि अद्य तत्पुत्रं हत्वा प्रत्युपकारं कर्त्तुमिच्छसीत्याशयः । वृत्तमुपजातिः ॥ ४० ॥

अप्रतिकारिणो जीवनमेव वृथा इत्याह, उपकारेति ।—यस्य, जनस्य इति शेषः, उपकारः,—अन्यकर्त्तृकहितसाधनम्, अपकारश्च—अनिष्टाचरणञ्च, विस्मृतिं—विस्मरणं, व्रजति—प्राप्नोति, यः परकृतमुपकारमपकारञ्च विस्मरति, उपकारं नाद्रियते अपकारमपि न गणयतीत्यर्थः, पाषाणहृदयस्य—प्रस्तरकठिनमनसः, अस्य—एतादृशस्य जनस्य, जीवति—प्राणिति, जीवितोऽयमित्यर्थः, इत्यभिधा—एतत् अभिधानं, मुधा—निरर्थकम् ; तस्य जीवनमरणयोस्तुल्यत्वादिति भावः ॥ ४१ ॥

दृष्टान्तप्रदर्शनेन भोजात् भयस्यामूलकतां प्रदर्शयति, यथेति ।—यथा—यद्वत्, सुसूक्ष्मोऽपि—अतिक्षुद्रोऽपि, अङ्कुरः,—प्ररोहः, प्रयत्नेन—आदरातिशय्येन, अभिरक्षितः,—पालितः सन्, काले—उपयुक्तसमये, फलप्रदः,—फलदायकः, भवेत्—स्यात्, लोकः,—जनः, अपीति शेषः, यः कश्चित् जनोऽपीत्यर्थः, सुरक्षितः,—सम्यक् प्रतिपालितः, तथा—तद्वत्, काले फलप्रदो भवति इति पूर्व्वेणान्वयः ॥ ४२ ॥

प्रजा एव राज्ञां सर्वैश्वर्य्यनिदानम्, अतः प्रजारञ्जनमवश्यकर्त्तव्यमित्यभिप्रायेणाह, हिरण्येति ।—महीभृतां—राज्ञां, [ मही+भृ+क्विप् ६ष्ठी बहुव० ] हिरण्यधान्यरत्नानि—हिरण्यं—सुवर्णं, धान्यं—व्रीहिः, रत्नं—हीरकाद्युत्कृष्टवस्तुजातं तानि, विविधानि—नानाप्रकाराणि, धनानि च—सम्पदश्च, तथा अन्यदपि—अपरमपि,

राज्ञि धर्म्मिणि धर्म्मिष्ठाः पापे पापपराः सदा।
राजानमनुवर्त्तन्ते यथा राजा तथा प्रजाः" ॥ ४४ ॥

ततो रात्रावेव वह्निप्रवेशनं निश्चितवति राज्ञि सर्वे सामन्ताः पौराश्च मिलिताः। "पुत्रं हत्वा पापभयात् भीतो नृपति-र्वह्निं प्रविशति" इति (ब) किंवदन्ती च सर्वत्राजनि। ततः बुद्धिसागरः द्वारपालमाहूय "न केनापि भूपालभवनं प्रवेष्टव्यम्" इत्युक्त्वा नृपमन्तःपुरे निवेश्य सभायामेकाकी सन् उपविष्टः। ततो राजमरणवार्त्तां श्रुत्वा वत्सराजो सभागृहमागत्य बुद्धि-सागरं नत्वा शनैः प्राह,—"तात! मया भोजराजो रक्षितः" इति। बुद्धिसागरः कर्णे तस्य किमप्यकथयत्, तच्छ्रुत्वा वत्सराजश्च निष्क्रान्तः।

[ इति प्रबन्धावतारणा ]।

यत्किञ्चित्—वस्तुजातं, विद्यते, तत् सर्वम् इति शेषः, प्रजाभ्यः,—प्रकृतिसकाशादेव, स्युः,—भवेयुः ; प्रजाभ्य एव राज्ञां सर्वाः सम्पदः सम्भवन्ति, अतः प्रजाविरागः सर्वानर्थमूलमिति भावः ॥ ४३ ॥

राजा एव प्रजानामादर्शः, इत्यभिप्रेत्याह, राज्ञीति।—राजा यथा—यादृशः, भवति इति शेषः, प्रजाः अपि तथा—तादृश्य एव, भवन्ति इति शेषः, तथा हि, राज्ञि—नृपे, [ भावे ७मी ] धर्म्मिणि—धार्म्मिके सति, [ "प्रजाः" इत्यग्रत आकृष्य अन्वेतव्यम् ] धर्म्मिष्ठाः,—अत्यन्तधार्म्मिकाः, धर्म्माचरणशीला इत्यर्थः, [ अतिशयेन धर्म्मवन्तः इतीष्ठन्, मतुपो लुक् च ] पापे—राज्ञि पापिष्ठे सति, [ पापशब्दादर्श-आदित्वादच् ] पापपराः,—पापासक्ताः, प्रजाः, भवन्ति इति शेषः, प्रजाः, सदा—सर्व्वदा, राजानं—नृपम्, अनुवर्त्तन्ते—अनुसरन्ति। तथा चोक्तं श्रीमद्भगवद्गीतायाम्—"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥" इति ॥ ४४ ॥

(ब) किंवदन्ती—जनश्रुतिः।

# भोजराजस्य सिंहासनप्राप्तिः।

ततः मुहूर्त्तेन कोऽपि (क) करकलितदन्तीन्द्रदन्तदण्डो विरचितप्रत्यग्रजटाकलापः कर्पूरकरम्बितभसितोद्दर्त्तितसकलतनुः, मूर्त्तिमान् मन्मथ इव स्फटिककुण्डलमण्डितकर्णयुगलः, कौषेयकौपीनो मूर्त्तिमांश्चन्द्रचूड़ इव सभां कापालिकः समागतः। तं वीक्ष्य बुद्धिसागरः प्राह,—"योगीन्द्र! कुत आगम्यते? कुत्र ते (ख) निवेशश्च? अप्यस्ति कापालिके त्वयि चमत्कारकारी कलाविशेष औषधविशेषश्च?"। योगी प्राह,—

"देशे देशे भवनं भवने भवने तथैव भिक्षाऽन्नम्।
सरसि च नद्यां सलिलं शिव! शिव! तत्त्वार्थयोगिनां पुंसाम् ॥१॥

(क) करकलितदन्तीन्द्रदन्तदण्डः,—करेण—हस्तेन, कलितं—गृहीतं, दन्तीन्द्रस्य—महागजस्य, दन्तदण्डः,—दन्तेन रचिता यष्टिः येन सः। विरचितप्रत्यग्रजटाकलापः,—विरचितः,—कृतः, प्रत्यग्रः,—नूतनः, जटाकलापः,—जटाजूटः येन सः। कर्पूरकरम्बितभसितोद्दर्त्तितसकलतनुः,—कर्पूरेण करम्बितं—मिश्रितं, यद्वा—कर्पूरकरम्बितं—कर्पूरानुकारि, अतिशुभ्रमित्यर्थः, यत् भसितं—भस्म, तेन उद्दर्त्तिता—लिप्ता, सकला—सम्पूर्णा, तनुः,—देहः यस्य सः। स्फटिककुण्डलमण्डितकर्णयुगलः,—स्फटिककुण्डलाभ्यां—स्फटिकमणिनिर्म्मितकर्णभूषणाभ्यां, मण्डितं—भूषितं, कर्णयुगलं—कर्णद्वयं यस्य सः। कौषेयकौपीनः,—कौषेयं—कृमिकोषोत्थं वस्त्रं, कौपीनं—चीरखण्डं यस्य सः। मूर्त्तिमान्—नरदेहधरः। चन्द्रः चूड़ायां यस्य सः चन्द्रचूड़ः,—शिवः। कापालिकः,—तन्त्रमतानुसारी योगिविशेषः।

(ख) निवेशः,—आश्रम इत्यर्थः। अपि—सम्भावनायां, त्वत्सकाशे कलाविशेषः औषधविशेषश्च अस्तीति सम्भावयामीत्यर्थः।

"कुतस्ते निवेशः?" इत्यस्योत्तरमाह, देशे इति।—शिव! शिव!—इति अन्तराऽन्तरा ईश्वरनामोच्चारणमेव सन्न्यासिनां समाचारः प्रसिद्धः। तत्त्वार्थ-

ग्रामे ग्रामे कुटी रम्या निर्झरे निर्झरे जलम्।
भिक्षायां सुलभञ्चान्नं विभवैः किं प्रयोजनम्? ॥ २ ॥

देव! अस्माकं नैको देशः, सकलभूमण्डलं भ्रमामः, गुरूपदेशे तिष्ठामः, निखिलं भुवनतलं करतलाऽऽमलकवत् पश्यामः, सर्पदष्टं विषव्याकुलं रोगग्रस्तं शस्त्रभिन्नशिरस्कं कालशिथिलितं तात! तत्क्षणादेव विगतसकलव्याधिसञ्चयं कुर्म्मः" इति। राजाऽपि (ग) कुड्यान्तर्हित एव श्रुतसकलवृत्तान्तः सभामागतः कापालिकं दण्डवत् प्रणम्य—"योगीन्द्र! रुद्रकल्प! परोपकारपरायण! महापापिना मया हतस्य पुत्रस्य प्राणदानेन मां रक्ष" इत्याह।

योगिनां—तत्त्वं—ब्रह्म, तदेवार्थः,—परमं वस्तु, तत्र योगः,—मनोनिवेशः येषां तेषां, ब्रह्मपरायणानामित्यर्थः, पुंसां—पुरुषाणां, योगिनामिति यावत्, देशे देशे—सर्व्वदेशे इत्यर्थः, भवनं—गृहम्; योगिनां भवननियमो नास्ति, कृत्स्नमेव जगत् तेषां भवनमिति भावः; तथा—तद्वत्, देशे देशे भवनवदित्यर्थः, भवने भवने एव—प्रतिगृहे एव, [उभयत्रापि वीप्सायां द्विर्भावः] भिक्षाऽन्नं—भिक्षालब्धं खाद्यमित्यर्थः, सरसि—सरोवरे, तथा नद्यां च—सरिति च, सलिलं—पानीयं जलम्, अस्तीति क्रियापदं सर्व्वत्र शेषो बोध्यः; योगिनां वासभवनस्य अन्नपानादेश्च नास्ति सङ्कटः; यत्र यदा ते तिष्ठन्ति, तत्रैव तदा सर्वं लभन्ते इति भावः ॥ १ ॥

योगिनां निस्पृहतां प्रकटयति, ग्रामे इति।—ग्रामे ग्रामे—प्रतिग्रामं, रम्या—रमणीया, कुटी—आवासः; योगी यत्रैव गच्छति, तत्रैव ग्रामं रमणीयां कुटीं विविच्य सुखं तिष्ठतीति भावः; निर्झरे निर्झरे—प्रतिनिर्झरं, जलं—पानीयं, विद्यते इति शेषः, भिक्षायाञ्च अन्नं—भक्ष्यद्रव्यं, सुलभं—सुप्राप्यम्; गृहस्थानामतिथिपरायणत्वादिति भावः; अतः विभवैः,—सम्पद्भिः, किं प्रयोजनम्?—किमावश्यकम्? न किमपीत्यर्थः; निराशानामभावबोधाभावात् धनैश्वर्य्यादिकमकिञ्चित्करमिति भावः ॥ २ ॥

(ग) कुड्यान्तर्हितः,—कुड्येन—भित्त्या, गृहप्राचीरेणेत्यर्थः, अन्तर्हितः,—तिरोहितः, कुड्यान्तरालस्थित इत्यर्थः।

अथ कापालिकोऽपि—"राजन्! मा भैषीः, पुत्रस्ते न मरिष्यति, शिवप्रसादेन गृहमेष्यति। परं श्मशानभूमौ बुद्धि-सागरेण सह होमद्रव्याणि प्रेषय" इत्यवोचत्।

ततो राज्ञा—"कापालिकेन यदुक्तं, तत्सर्वं तथा कुरु" इति बुद्धिसागरः प्रेषितः। ततो रात्रौ गूढरूपेण भोजोऽपि (घ) तत्र नदीपुलिने नीतः, "योगिना भोजो जीवितः" इति प्रथा च समभूत्। ततो गजेन्द्रारूढो (ङ) वन्दिभिः स्तूयमानो भेरीमृदङ्गादिघोषैर्जगद्बधिरीकुर्वन् पौरामात्यपरिवृतो भोज-राजो राजभवनमगात्। राजा च तमालिङ्ग्य रुरोद। भोजोऽपि रुदन्तं मुञ्जं निवार्य्य अस्तौषीत्। ततः सन्तुष्टो राजा निजसिंहासने तस्मिन्निवेशयित्वा छत्रचामराभ्यां भूष-यित्वा तस्मै राज्यं ददौ। निजपुत्रेभ्यः प्रत्येकमेकैकं ग्रामं दत्त्वा परमप्रेमास्पदं जयन्तं (च) भोजनिकाशे निवेशयामास। ततः (छ) परलोकपरित्राणार्थी मुञ्जोऽपि निजपट्टराज्ञीभिः सह तपोवनभूमिं गत्वा परं तपस्तेपे। ततो भोजभूपालश्च देवब्राह्मणप्रसादाद्राज्यं पालयामास।

[ इति भोजराजस्य सिंहासनप्राप्तिप्रबन्धः ]।

(घ) तत्र—श्मशानसमीपस्थे इत्यर्थः। प्रथा—ख्यातिः, जनसमाजे प्रचार इत्यर्थः, ("प्रथा ख्यातौ" इत्यमरः)।

(ङ) वन्दिभिः,—स्तुतिपाठकैः।

(च) भोजनिकाशे—भोजसमीपे।

(छ) परलोकपरित्राणार्थी—नरकभयादात्मानं रक्षितुमभिलाषी सन्नित्यर्थः। निजपट्टराज्ञीभिः,—प्रधानमहिष्या सह [ गौरवे बहुत्वम् ]।

अथ प्रबन्धारम्भः ।

## विप्रभोजसंवादः ।

अथ मुञ्जे तपोवनं याते बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भोजराजभूपतिः । एवमतिक्रामति काले कदाचिद्राज्ञा क्रीड़ोद्यानं गच्छता कोऽपि धारानगरवासी विप्रो लक्षितः । स च राजानं वीक्ष्य नेत्रे निमील्य आगच्छन् राज्ञा पृष्टः,—"द्विज ! त्वं मां दृष्ट्वा न स्वस्तीति जल्पसि, विशेषेण लोचने निमीलयसि, तत्र को हेतुः ?" इति । विप्र आह,—"देव ! त्वं वैष्णवोऽसि, विप्राणां नोपद्रवं करिष्यसि, ततस्त्वत्तो न मे भीतिः ; किन्तु कस्मैचित् किमपि न प्रयच्छसि, तेन तव दाक्षिण्यमपि नास्ति, अतस्ते किमाशीर्वचसा ? किञ्च प्रातरेव कृपणमुखावलोकनात् परतोऽपि लाभहानिः स्यात्, इति लोकोक्त्या लोचने निमीलिते । अपिच—

> प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः ।
> न तं राजानमिच्छन्ति प्रजाः षण्डमिव स्त्रियः ॥ १ ॥

भङ्ग्या अदातारं भोजमधिक्षिपति द्वाभ्यां, प्रसाद इति ।—यस्य, राज्ञः इति शेषः, प्रसादः,—प्रसन्नता, अनुग्रह इत्यर्थः, निष्फलः,—विफलः ; पुरस्काराद्यदानादिति भावः ; कोपश्चापि—क्रोधश्चापि, निग्रहश्चापीत्यर्थः, निरर्थकः,—अकिञ्चित्करः ; अर्थव्ययभिया प्रतिकारचेष्टाऽकरणादिति भावः ; स्त्रियः,—कामिन्यः, षण्डं—क्लीवमिव, प्रजाः,—लोकाः, तं—तादृशं, विफलप्रसादकोपमिति यावत्, राजानं—नृपं, न इच्छन्ति—नाभिलषन्ति ॥ १ ॥

अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम्।
यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ २ ॥

देव! मत्पिता वृद्धः काशीं प्रति गच्छन् मया शिक्षां पृष्टः,—'तात! मया किं कर्त्तव्यमिति?' पित्रा चेत्यमभ्यधायि,—

'यदि तव हृदयं विद्वन्! सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः।
सचिवजितं षण्ढजितं युवतिजितञ्चैव राजानम् ॥ ३ ॥
पातकानां समस्तानां द्वे परे तात! पातके।
एकं दुःसचिवो राजा द्वितीयश्च तदाश्रयः ॥ ४ ॥

अप्रगल्भस्येति।—अप्रगल्भस्य—प्रगल्भता—प्रयोगनैपुण्यं, तदुक्तम्—"निःशङ्कत्वं प्रयोगेषु बुधैरुक्ता प्रगल्भता" इति। तद्रहितस्य, अधृष्टस्य इत्यर्थः, सभायां निःशङ्कं बहुभाषितुमशक्तस्येति यावत्, यद्वा—अप्रगल्भस्य—अप्रत्युत्पन्नमतेः, प्रतिभाविहीनस्येत्यर्थः, ("प्रगल्भः प्रतिभान्विते" इत्यमरः) या विद्या—शास्त्रज्ञानं, कृपणस्य च—व्ययकुण्ठस्य च, यत् धनं—सम्पत्, भीरोश्च—भयशीलस्य च, यत् बाहुबलं—भुजबलं, सामर्थ्यम् इत्यर्थः, एतत्त्रयं, भुवि—पृथिव्यां, व्यर्थं—निरर्थकम्; एषां विद्याऽर्थभुजबलेन स्वस्य अन्यस्य कस्यचिच्च किमपि प्रयोजनं न साध्यते इति भावः ॥ २ ॥

भङ्ग्या भोजस्य राजपदानर्हत्वं प्रतिपादयति द्वाभ्यां, यदीति।—हे विद्वन्!—हे धीर! यदि तव हृदयं—मनः, सुनयं—सुनीतिसम्पन्नं, भवेदिति शेषः, तर्हि स्वप्नेऽपि—निद्राकालेऽपि, किं पुनर्जागरे इत्यपिशब्दार्थः; सचिवजितम्—अमात्याधीनम्; न तु स्वयं विविच्य किमपि कर्त्तुं शक्यमिति भावः; षण्ढजितं—षण्ढैः,—क्लीबैः, पौरुषविहीनैः अत एव क्लीबसदृशैः धूर्तैरित्यर्थः, राज्ञः मिथ्याप्रशंसावादपरायणैः जनैरिति यावत्, जितम्—आयत्तीकृतं, तस्य मन्त्रणया चालितमिति यावत्, तथा युवतिजितञ्च—स्त्रीभिरायत्तीकृतञ्च, स्त्रैणमित्यर्थः, राजानं—नृपं, मास्म एव—नैव, सेविष्ठाः,—परिचरेः। [सेव+लुङ्-थास। "स्मोत्तरे लङ् च" (३।३।१७६ पा०) इति लुङ्। माङ्योगे अडागमाभावश्च]; ईदृशो हि राजा विवेकशून्यत्वात् किमपि लोकहितकरं कार्यं कर्त्तुं नैव शक्नोति, अतस्तत्सेवा आत्मावनत्यै एव इति भावः; त्वं खलु सचिवजितः इति वक्तुराशयः। आर्या वृत्तम् ॥ ३ ॥

पातकानामिति।—हे तात!—वत्स!, समस्तानां—सकलानां, पातकानां मध्ये,

अविवेकमतिर्नृपतिर्मन्त्री गुणवत्सु वक्रितग्रीवः।
यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः? ॥ ५ ॥
राजा सम्पत्तिहीनोऽपि सेव्यः सेव्यगुणाश्रयः।
भवत्याजीवनं तस्मात् फलं कालान्तरादपि' ॥ ६ ॥

अदातुः (क) दाक्षिण्यं न हि भवति; देव! पुरा कर्ण-दधीचिशिबिविक्रमप्रमुखाः क्षितिपतयो यथा परलोकमलङ्कुर्वाणाः निजदानसमुद्भूतदिव्यनवगुणैर्निवसन्ति महीमण्डले, तथा किमपरे राजानः?—

---

द्वे—द्विविधे, पातके—पापे, परे—श्रेष्ठे, भवतः इति शेषः। के ते द्वे? इत्याह, दुःसचिवः,—दुष्टमन्त्रिकः, राजा—नृपः, एकं, पातकमिति शेषः, तदाश्रयश्च—तादृशस्य राज्ञः आश्रयश्चेति, द्वितीयं, पातकमिति शेषः ॥ ४ ॥

दुर्नयस्य राज्ञः असेव्यत्वमाह, अविवेकेति।—यत्र—यस्मिन् देशे, नृपतिः,—राजा, अविवेकमतिः,—विवेकहीनबुद्धिः, तथा मन्त्री—अमात्यः, गुणवत्सु—गुणिषु जनेषु, वक्रितग्रीवः,—वक्रिता—वक्रीकृता, ग्रीवा—कन्धरा येन सः, विमुख इति यावत्, "मन्त्रिषु गुणवत्सु वक्रितग्रीवः" इति पाठान्तरम्। खलाश्च—दुर्जनाश्च, प्रबलाः,—बलवन्तः, स्वतन्त्रा इति यावत्, तत्र—तस्मिन् स्थाने राज्ये वा, सज्जनावसरः,—सज्जनानां—साधूनाम्, अवसरः,—स्थानं, कथम्?—केन प्रकारेण, सम्भवतीति शेषः; तत्रावस्थानेन धननाशावमाननादेः विशेषेण सम्भावनात् तादृशो देशः सर्व्वथैव साधुभिः परित्यज्य इति भावः। आर्य्या वृत्तम् ॥ ५ ॥

कीदृशो राजा आश्रयणीयः इत्याह, राजेति।—सेव्यगुणाश्रयः,—सेव्यानाम्—आश्रयार्हाणां, गुणानां—दयादाक्षिण्यादीनाम, आश्रयः,—अधिष्ठानं, राजा—नृपः, सम्पत्तिहीनोऽपि—धनविहीनोऽपि, सेव्यः,—आश्रयणीयः, जनैरिति शेषः, यतः तस्मात्—तादृशात् राज्ञः, कालान्तरादपि—भविष्यत्कालेऽपीत्यर्थः, आजीवनम्—आजीवः, जीविकासाधकमित्यर्थः, फलं भवति; भवान् सम्पद्युक्तोऽपि सेव्यगुणहीनत्वात् असेव्य एव, अतो गुणाश्रयः त्वया करणीय इति वक्तुराशयः ॥ ६ ॥

(क) दाक्षिण्यम्—उदारता। निजेति।—निजदानसमुद्भूतैः,—स्वीयदातृत्वेन ख्यातिमागतैः, दिव्यैः,—अलौकिकैः, नवैः,—अपूर्वैः, गुणैः,—यशःप्रभृतिभिः उपलक्षिताः सन्तः, [ इत्थम्भूतलक्षणे तृतीया ]।

देहे पातिनि का रक्षा ? यशो रक्ष्यमपातवत् ।
नरः पतितकायोऽपि यशःकायेन जीवति ॥ ७ ॥
पण्डिते चैव मूर्खे च बलवत्यपि दुर्बले ।
ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ ८ ॥
निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति ।
तस्माद्देहेष्वनित्येषु कीर्त्तिमेकामुपार्ज्जयेत् ॥ ९ ॥
जीवितं तदपि जीवितमध्ये
गण्यते सुकृतिभिः किमु पुंसाम् ।

---

यशस्विनः अमरत्वमाह, देहे इति ।—पातिनि—पतनशीले, विनश्वरे इत्यर्थः, देहे—शरीरे, रक्षा—पालनं, का ?—किमर्थम् ? नाशधर्म्मिणः शरीरस्य रक्षणचेष्टया किमपि फलं न साध्यते इति भावः ; पातः—पतनम् अस्यास्तीति पातवत्, न पातवत् अपातवत्—अविनाशीत्यर्थः, यशः,—कीर्त्तिः, रक्ष्यं—रक्षणीयं, नरः,—लोकः, पतितकायोऽपि—विनष्टदेहोऽपि, मृतोऽपीत्यर्थः, यशःकायेन—यशोरूपदेहेन, जीवति—जीवित इव वर्त्तते, यशस्विनां मरणेऽपि लोकैः तेषां यशः कीर्त्यते इत्यर्थः ; कीर्त्तिर्यस्य स जीवति इति भावः ॥ ७ ॥

मृत्योर्निरपेक्षतामाह, पण्डिते इति ।—पण्डिते च—विदुषि च, मूर्खे च—अज्ञे च, बलवत्यपि—बलिष्ठेऽपि, दुर्बले—हीनबले च, ईश्वरे च—धनिनि च, दरिद्रे च—निर्धने च, सर्व्वत्रैव—सकल एव लोके, मृत्योः,—यमस्य, तुल्यता—साम्यम्; कृतान्तः अविशेषेण सर्वानेव ग्रसिष्यति, न धनिदरिद्रभेदेन कस्यापि तस्मान्निष्कृतिरिति भावः ; ईश्वराणामपि यदा मरणमवश्यम्भावि, तदा मरणेऽपि अमरत्वकारणं यशः दानादिरूपसत्कर्म्मणा सर्वैरवश्यमेवार्ज्जनीयमित्याशयः ॥ ८ ॥

कीर्त्तिः सर्वैरेवार्ज्जनीयेत्याह, निमेषेति ।—ते—तव, गच्छत्—अतिक्रामत्, अविरतं क्षयमाप्नुवदित्यर्थः, [ गम + शतृ ] वयः,—जीवितकालः, प्राणधारणसमय इत्यर्थः, निमेषमात्रमपि—नेत्रपत्रनिमीलनोन्मीलनपरिमितसमयोऽपि, न तिष्ठति—नापेक्षते, तस्मात्—जीवितकालस्य अविरतं क्षीयमाणत्वात्, अनित्येषु—विनश्वरेषु, देहेषु—अस्मिन् शरीरेषु, आस्थां विहायेति शेषः, एकां—केवलां, कीर्त्तिं—यशः ; नित्यमिति भावः ; उपार्ज्जयेत्—सञ्चिनुयात् ॥ ९ ॥

कीर्त्यादिविहीनस्य जन्मैव विफलमित्याह, जीवितमिति ।—पुंसां—पुरुषाणां,

ज्ञानविक्रमकलाकुललज्जा-

त्यागभोगरहितं विफलं यत्" ॥ १० ॥ इति ।

राजाऽपि तेन वाक्येन (ख) पीयूषपूरस्नात इव, परब्रह्मणि लीन इव लोचनाभ्यां हर्षाश्रूणि मुमोच, प्राह च द्विजं—"विप्रवर ! शृणु,—

सुलभाः पुरुषा लोके सततं प्रियवादिनः ।

अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ११ ॥

मनीषिणः सन्ति न ते हितैषिणो

हितैषिणः सन्ति न ते मनीषिणः ।

यत् जीवितं—जीवनं, ज्ञानेन—विद्यया, विक्रमेण—पराक्रमेण, कलया—शिल्पादिरूपया चतुःषष्टिविधया, कुलेन—वंशगौरवेण, लज्जया—ह्रिया, त्यागेन—दानेन, भोगेन—विषयसेवनेन च, रहितं—हीनम्, अत एव विफलं—पश्वादि-जन्मवत् निरर्थकं, तदपि—तज्जीवितमपि, सुकृतिभिः,—पण्डितैः, जीवितमध्ये—जीवनमिति कृत्वा, गण्यते किमु ?—स्वीक्रियते किम् ? नैवेत्यर्थः ; ज्ञानादिः सर्वैरेवोपार्जनीय इति भावः । स्वागता वृत्तं,—"स्वागता रनभगैर्गुरुणा च" इति लक्षणात् ॥ १० ॥

( ख ) पीयूषपूरस्नात इव—पीयूषपूरेण—अमृतप्रवाहेण, स्नातः,—अभिषिक्त इव । परब्रह्मणि—परमात्मनि, लीन इव—विलयं गत इव, जीवब्रह्मणोरभेद-ज्ञानोदयात् सच्चिदानन्दमय इवेत्यर्थः ।

विप्रवाक्येन तुष्टो भोजः द्वाभ्यां स्वस्य न्याय्यवाक्यप्रियतां प्रकटयति, सुलभा इति ।—लोके—जगति, सततं—सदा, प्रियवादिनः,—प्रियभाषिणः, पुरुषाः,—लोकाः, सुलभाः,—सुप्रापाः, किन्तु अप्रियस्य—श्रुतिकटुनः, च—अथच, पथ्यस्य—हितस्य, वाक्यस्येति शेषः, वक्ता—कथयिता, तथा श्रोता च—आकर्णयिता अपि, दुर्लभः,—दुष्प्रापः ; त्वामन्तरा कोऽपि मामीदृशमप्रियहितवचनं नोक्तवान्, त्वमेव प्रथममेवमुक्तवान्, अतस्त्वं मे हितैषी इति भावः । तथा चोक्तं भारविणा—"हितं मनोहारि च दुर्लभं वचः ।" इति ॥ ११ ॥

मनीषिणः इति ।—मनीषिणः,—सुधियः, सन्ति—बहवः वर्त्तन्ते, किन्तु ते—मनीषिणः, न हितैषिणः,—न हिताकाङ्क्षिणः, [ हित + इष + णिनिः १मा बहुव० ]

सुहृच्च विद्वानपि दुर्लभो नृणां
यथौषधं स्वादु हितञ्च दुर्लभम्" ॥ १२ ॥

इति विप्राय लक्षं दत्त्वा—"किं ते नाम ?" इत्याह। (ग) विप्रः स्वनाम भूमौ लिखति "गोविन्दः" इति। राजा वाचयित्वा,—"विप्र ! प्रत्यहं राजभवनमागन्तव्यं, न ते कश्चिन्निषेधः, विद्वांसः कवयश्च (घ) कौतुकात् सभामानेतव्याः, कोऽपि विद्वान् न खलु दुःखभागी भवतु एनमधिकारं प्राप्य" इत्याह।

[ इति विप्रभोजसंवादः ]।

हितैषिणः,—शुभार्थिनः, च ये सन्ति, ते—हितैषिणः, न मनीषिणः, तथाहि स्वादु—सुमिष्टं, च—अथच, हितं—पथ्यम्, औषधं—भेषजं, यथा दुर्लभं—दुष्प्रापं, तथा सुहृत्—मित्रं, च—अथच ; विद्वान्—सुबोधः, तादृशोऽपि ; उभयगुणसम्पन्न इति भावः ; नृणां—मनुष्याणां, दुर्लभः,—दुष्प्रापः ; सुकृतिवशात् मया विद्वान् सुहृत् भवान् लब्धः इति वक्तुराशयः। वंशस्थविलं वृत्तं,—"वदन्ति वंशस्थविलं जतौ जरौ" इति तल्लक्षणात् ॥ १२ ॥

(ग) विप्र इति।—विप्रस्य स्वनामधेयानुच्चारणे भूमिलिखने च शास्त्रनिषेध एव हेतुः, यदुक्तम्—"आत्मनाम गुरोर्नाम नामापि कृपणस्य च। आयुष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः ॥" इति।

(घ) कौतुकात्—इच्छातः, स्वेच्छानुसारादित्यर्थः, आनन्दसहकारिणेत्यर्थो वा। ("कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि।" इति विश्वः)। अधिकारं—मदीयशासनाधीनं राज्यमित्यर्थः। [ "एनमधिकारं पालय" इति पाठे—अधिकारं—प्रभुत्वं, विदुषां दुःखमोचनाय राजसाक्षात्करणेन अर्थदापनकर्तृत्वमित्यर्थः। पालय—रक्ष, गृहाणेत्यर्थः ] ।

# अथ कृपणसचिवशासनसंवादः।

एवं गच्छत्सु कतिपयदिवसेषु राजा विद्वत्प्रियः (क) दानवित्तेश्वर इति प्रथामगात्। ततो राजानं दिदृक्षवः कवयो नानादिग्भ्यः समागताः। एवं वित्तादिव्ययं कुर्वाणं राजानं प्रति कदाचित् मुख्यामात्येनेत्थमभ्यधायि,—"देव! राजानः कोशबलयुता एव विजयिनो नान्ये। तथाहि,—

स जयी वरमातङ्गा यस्य तस्यास्ति मेदिनी।
कोशो यस्य स दुर्द्धर्षो दुर्गं तस्य सुदुर्जयम्॥ १॥

देव! लोकं पश्य,—

प्रायो धनवतामेव धने तृष्णा गरीयसी।
पश्य कोटिद्वयासक्तं लक्षाय प्रवणं धनुः"॥ २॥ इति।

---

(क) दानवित्तेश्वरः,—दानेन वित्तः,—प्रथितः, स चासौ ईश्वरः,—राजा इति, दानवीरनृप इत्यर्थः। दानवित्तेषु—दातृत्वगुणेन विख्यातेषु, ईश्वरः,—श्रेष्ठः इति वा विग्रहः। अगात्—प्रापत्। [इ+लुङ्-द। "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः]।

राज्ञां बलसम्पदं दर्शयति, स इति।—यस्य, राज्ञः इति शेषः, वरमातङ्गाः,—प्रशस्तगजाः, सन्ति इति शेषः, स जयी—जयशीलः, मेदिनी—पृथिवी, तस्य—राज्ञः, अस्ति—वशे वर्त्तते इत्यर्थः, यस्य—राज्ञः, कोशः,—धनागारं, विद्यते इति शेषः, सः,—नृपः, दुर्द्धर्षः,—दुःखेन धृष्यते—आक्रम्यते यः सः, दुर्जेय इत्यर्थः, तस्य—राज्ञः, दुर्गं—सेनानिवासः, सुदुर्जयं—जेतुमशक्यं, भवतीति शेषः। ["दुर्गं यस्य स दुर्जयः" इति पाठान्तरम]॥ १॥

"आशावधिं को गतः?" इत्युपजीव्याह, प्राय इति।—प्रायः,—बाहुल्येन, धनवतामेव—धनिनामेव, धने—धनलाभे, गरीयसी—महती, [गुरु+ईयसु+ङीप्] तृष्णा—अभिलाषः, जायते इति शेषः; पश्य—अवलोकय, लोकमिति शेषः, कोटिद्वयासक्तं—कोटिद्वये—अटन्योः, प्रान्तभागयोरित्यर्थः, आसक्तं—बद्धं, ज्यायुक्तमित्यर्थः,

राजा च तमाह,—

"दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते।
पुंसां समाहिता लक्ष्मीरलक्ष्मीः क्रमशो भवेत्" ॥ ३ ॥

इत्युक्त्वा राजा तं मन्त्रिणं निजपदाद् दूरीकृत्य तत्पदेऽन्यं निवेशयामास, आह च तम्,—

"लक्षं महाकवेर्देयं तदर्द्धं विबुधस्य च।
देयं ग्रामैकमर्द्धस्य तस्याप्यर्द्धं तदर्थिनः ॥ ४ ॥

यश्च मे अमात्यादिषु वितरणनिषेधमनाः, स हन्तव्यः।

उक्तञ्च,—

यद्ददाति यदश्नाति तदेव धनिनां धनम्।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ ५ ॥

धनुः,—चापः, लक्षाय—शरव्याय, वेध्याय इत्यर्थः, ("लक्षं व्याजशरव्ययोः। संख्यायामपि" इति हैमः) प्रवणम्—उन्मुखं, भवतीति शेषः; अथच कोटिद्वये—कोटिद्वयसङ्ख्याके धने, आसक्तम्—अनुरक्तं, जनमिति शेषः; लक्षाय—लक्षमुद्रालाभाय, प्रवणम्—उद्युक्तम्; यथा कश्चित् कोटीश्वरः अपरकोटिपूरणाय लक्षमुद्रासंग्रहार्थं पुनः यतते, तद्वत् अचेतनं धनुरपि इति श्लेषेण ध्वन्यते ॥ २ ॥

दानभोगादिविहीनं धनं न धनपदवाच्यम् इत्यभिप्रायेणाह, दानेति।—पुंसां—नृणां, या लक्ष्मीः,—सम्पत्, दानोपभोगवन्ध्या—दानेन उपभोगेन च, वन्ध्या—हीना, सुहृद्भिः,—बन्धुभिश्च, या—लक्ष्मीः, न भुज्यते—न सेव्यते, सा लक्ष्मीः, समाहिता—सञ्चिता, अपीति शेषः, क्रमशः,—अव्यवहारेण शनैः शनैः, अलक्ष्मीः,—अश्रीका, अमङ्गलजननीत्यर्थः, भवेत्; तद्दर्शनेन तस्करादिभिः जिघृक्षुभिरनिष्टाचरणसम्भवादिति भावः ॥ ३ ॥

लक्षमिति।—महाकवेः,—प्रधानकवेः, लक्षं—लक्षमुद्रा, विबुधस्य च—पण्डितस्य च; कवित्वशक्तिरहितस्य विदुष इति भावः; तदर्द्धं—लक्षार्द्धम्, अर्द्धस्य—अर्द्धशिक्षितस्येत्यर्थः, ग्रामैकम्—एकः ग्रामः, तदर्थिनः,—ज्ञानार्थिनः इत्यर्थः, ["तदङ्घ्रिनः" इति पाठान्तरे—पादशिक्षितस्येत्यर्थः]; तस्याप्यर्द्धं—ग्रामार्द्धमित्यर्थः, देयं—दातव्यम्। [सर्व्वत्र विवक्षया षष्ठी] ॥ ४ ॥

कीदृशेनोपयोगेन धनस्य सार्थक्यं भवति, तदाह, यदिति।—यत्—धनं,

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः ।
अयच्छन् काङ्क्ष्यते लोकैर्वारिदो न तु वारिधिः ॥ ६ ॥
सङ्ग्रहैकपरः प्रायः समुद्रोऽपि रसातले ।
दातारं जलदं पश्य गर्जन्तं भुवनोपरि" ॥ ७ ॥

[ इति कृपणसचिवशासनसंवादः ]।

ददाति—सत्पात्रे अर्पयति, यत्—धनम्, अश्नाति—स्वयम् उपभुङ्क्ते, धनिनां—धनवतां, तदेव—दानभोगोपलक्षितमेवेत्यर्थः, धनं—धनपदवाच्यं, सार्थकमित्यर्थः, यतः मृतस्य, जनस्य इति शेषः, दारैरपि—कलत्रैरपि, तथा धनैरपि—अर्थैश्चापि, अन्ये—अपरे जनाः, क्रीडन्ति—खेलन्ति, यथेच्छं व्यवहरन्तीत्यर्थः ; अतो दानोपभोगौ धनस्य अवश्यमेव विधेयावित्याशयः ॥ ५ ॥

दातृकृपणयोः भेदं द्वाभ्यां दर्शयति, प्रिय इति ।—दाता एव—दानशील एव, प्रजानां—लोकानां, प्रियः,—प्रीतिपात्रं, भवतीति शेषः, द्रविणेश्वरः,—द्रविणानां—धनानाम्, ईश्वरः,—स्वामी, धनपतिः ; केवलसञ्चयशीलः न तु दाता इति भावः ; ( "द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥" इत्यमरः ) पुनः न, प्रिय इति शेषः, लोकैः,—जनैः, वारिदः,—जलदः, काङ्क्ष्यते—प्रार्थ्यते ; अयाचितस्यैव तस्य दातृत्वादिति भावः ; किन्तु अयच्छन्—अदाता, [ न+दा+शतृ "पाघ्राध्मास्था—" ( ७।३।७८ पा० ) इति "दाण् दाने" इत्यस्य यच्छादेशः ]। वारिधिः,—समुद्रः ; [ वारीणि धीयन्ते अत्र इति "कर्मण्यधिकरणे च" ( ३।३।९३ पा० ) इति वारि+धा+किः ] केवलसञ्चयी न तु त्यागीति भावः ; न, काङ्क्ष्यते इति अन्वयः ; समुद्रो हि जलं सञ्चिनोति, घनो वितरतीत्युभयोः पार्थक्यादिति भावः ॥ ६ ॥

सङ्ग्रहेति ।—समुद्रः,—वारिधिः, सङ्ग्रहैकपरोऽपि—सञ्चयमात्रपरायणोऽपि, प्रायः रसातले—पाताले, सर्व्वलोकाधः इति यावत्, वर्त्तते इति शेषः ; कृपणत्वादिति भावः ; दातारं—दानशीलं, जलदं—मेघं, भुवनोपरि—स्वर्गे, सर्वोपरि इति यावत्, गर्ज्जन्तं—नदन्तं, पश्य—अवलोकय ; अवलोक्य ज्ञानं लभस्व यत् दातुरेव सम्मानं, सर्व्वलोकोपरिवर्त्तनञ्च, नादातुरित्यभिप्रायः । महाधनो अपि कृपणश्चेत् लोकैर्नाद्रियते, अतो दातृत्वमेव वरमिति निष्कृष्टार्थः ॥ ७ ॥

# भोज-कविसंवादः।

एवं वितरणशालिनं भोजराजं श्रुत्वा कश्चित् कलिङ्गदेशात् कविरुपेत्य मासमात्रं तस्थौ ; न च (क) क्षौणीन्द्रदर्शनं भवति, आहारार्थं पाथेयमपि नास्ति। ततः कदाचिद्राजा मृगयाऽभिलाषी बहिर्निर्गतः। स कविर्दृष्ट्वा राजानमाह,—

"दृष्टे श्रीभोजराजेन्द्रे गलन्ति त्रीणि तत्क्षणात्।
शत्रोः शस्त्रं कवेः कष्टं नीवीबन्धो मृगीदृशाम्" ॥ १ ॥

राजा लक्षं ददौ। ततस्तस्मिन् (ख) मृगयारसिके राजनि कश्चन पुलिन्दपुत्रो गायति; तद्गीतमाधुर्य्येण तुष्टो राजा तस्मै पुलिन्दपुत्राय पञ्चलक्षं ददौ। तदा कविः तद्दानम् (ग) अत्युन्नतं किरातपोतस्य दृष्ट्वा नरेन्द्रपाणिकमलस्थपङ्कजमिषेण राजानं वदति,—

---

(क) क्षौणीन्द्रेति।—क्षौणीन्द्रस्य—भूपतेः, दर्शनम्—अवलोकनं, राजसाक्षात्कारमित्यर्थः। आहारार्थं पाथेयमपि—पथि सम्बलमपि, पथि भोज्यद्रव्यक्रयोपयोगि धनमपि, किं पुनः ग्रामादिव्ययनिर्वाहार्थं धनमित्यपिशब्दार्थः। [पथि साधु इत्यर्थे "पथ्यतिथिवसतिस्वपतेर्ढञ्" (४।४।१०४ पा०) इति पथिन्+ढञ्]।

भोजस्य प्रशंसामाह, दृष्टे इति।—श्रीभोजराजेन्द्रे—महाराजे श्रीभोजे, दृष्टे सति तत्क्षणात्—दर्शनसमकालमेव, शत्रोः,—रिपोः, शस्त्रम्—अस्त्रं, कवेः,—कवयितुः, रचनापटोर्विदुष इति यावत्, कष्टं—दुःखं, दारिद्र्यमिति यावत्, तथा मृगीदृशां—नारीणां, नीवीबन्धः,—जघनवस्त्रग्रन्थिश्च, एतानि त्रीणि गलन्ति—स्खलन्ति, अपयान्तीत्यर्थः; महावीरः दाता अप्रतिमसौन्दर्य्यश्च भोज इति वक्तुराशयः॥ १॥

(ख) मृगयारसिके—मृगवधव्यापारासक्ते। [भावे ७मी]। पुलिन्दपुत्रः,—पुलिन्दः,—म्लेच्छजातिविशेषः, तस्य पुत्रः। गानञ्चात्र गीतासक्तमृगाणां मृगयायामानयनार्थं बोध्यम्।

(ग) अत्युन्नतम्—अतिप्रभूतम्; नीचपात्रपुलिन्दस्यानुपयोगि इति भावः।

"एते हि गुणाः पङ्कज! सन्तोऽपि न ते प्रकाशमायान्ति।
यल्लक्ष्मीवसतेस्तव मधुपैरुपभुज्यते कोषः" ॥ २ ॥

भोजस्तमभिप्रायं ज्ञात्वा पुनर्लक्षमेकं ददौ। ततो राजा ब्राह्मणमाह,—

"प्रभुभिः पूज्यते विप्र! कलैव न कुलीनता।
कलावान् मान्यते मूर्ध्नि सत्सु देवेषु शम्भुना" ॥ ३ ॥

किरातपोत—क्षुद्रपुलिन्दबालम्; एतादृशात्यल्पतदानस्य सम्पूर्णायोग्यमिति भावः। नरेन्द्रेति।—नृपतिकरपद्मस्थितपद्मव्याजेन, राजहस्तस्थपद्मं लक्ष्मीरुक्त्येत्यर्थः।

अपात्रे दानं दृष्ट्वा वाक्छलेन भोजमधिक्षिपति, एते इति।—हे पङ्कज!—पद्म!, तव सन्तोऽपि—विद्यमाना अपि, एते—इमे, गुणाः,—एकत्र—सौरभ्यमधुमत्त्वादयः, अन्यत्र—दातृत्वादयः, प्रकाशं—प्रकटतां, न आयान्ति हि—नैव प्राप्नुवन्ति, यत्—यस्मात्, लक्ष्मीवसतेः,—लक्ष्मीनिवासस्य; एकत्र—लक्ष्म्या आवासभूतत्वात्, अन्यत्र—महैश्वर्य्यवत्त्वादित्यर्थः; "लक्ष्मीः पद्मालया पद्मा" इत्यमरोक्त्या लक्ष्म्याः पद्मालयेति नामान्तरत्वात् इति भावः; तव, कोषः,—कुड्मलं, कुड्मलाभ्यन्तरस्थं मधु इत्यर्थः, अन्यत्र—अर्थसमूहं, ("कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः।" इत्यमरः)। मधुपैः,—भ्रमरैः, अन्यत्र—मधुपसदृशैः शाट्वादिभिरित्यर्थः, ["आतोऽनुपसर्गे कः" (३।२।३ पा०) इति मधु+पा+कः] उपभुज्यते—पीयते; [उप+भुज+कर्म्मणि लट्-ते]। ईदृशसद्गुणसम्पन्नस्यापि पद्मस्य तव मधु यत् क्षुद्रभ्रमरैः ·उपभुज्यते, तदतीव दुःखकरमिति भावः। आर्य्या वृत्तम् ॥ २ ॥

वाक्यज्ञो राजा विप्राभिप्रायं ज्ञात्वा छलेन यथोपयुक्तं प्रत्युत्तरति, प्रभुभिरिति।—हे विप्र!—ब्राह्मण!, प्रभुभिः,—प्रभवद्भिः राजभिः, कलैव—शिल्पादिचतुःषष्टिविधा विद्यैव, पूज्यते—आद्रियते, कुलस्य—प्रशस्तवंशस्य अपत्यं, तस्य भावः कुलीनता—कौलीन्यं, वंशगौरवमिति यावत्, ["कुलात् खः" (४।१।१३९ पा०) इति कुल+खः] न, पूज्यते इति शेषः; तत्र दृष्टान्तमाह, कलावानिति।—देवेषु—सर्वेषु अमरेषु, इन्द्रादिषु महागौरववत्सु लोकपालेषु इति यावत्, सत्सु—विद्यमानेष्वपि, कलावान्—चन्द्रः; अतिक्षीणः गौरवमात्रविहीनोऽपीति भावः; (अथ च कलाविद्यानिपुणः इति ध्वनिः) शम्भुना—महादेवेन, मूर्ध्नि—मस्तके, मान्यते—समादरेण

एवं वदति भोजे कुतोऽपि (घ) पञ्चषाः कवयः समागताः ; तान् दृष्ट्वा राजा विलक्षण इवासीत्,—"अद्यैव मया एतावद्वित्तं दत्तम्" इति। ततः कविस्तमभिप्रायं ज्ञात्वा नृपं पद्ममिषेण पुनः प्राह,—

"किं कुप्यसि कस्मैचन ? सौरभसाराय कुप्य निजमधुने।
यस्य कृते शतपत्र ! प्रतिपत्रं तेऽद्य मृग्यते भ्रमरैः" ॥ ४ ॥

ततः प्रभुं प्रसन्नवदनमवलोक्य प्रकाशेन प्राह,—

धार्य्यते इत्यर्थः ; यदा देवादिदेवस्य आशुतोषस्यापि ईदृशः स्वभावः, तदा नरदेवस्य कलाप्रसमादरे किं वक्तव्यमिति भावः। उक्तञ्च भवभूतिना—"गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।" इति ॥ ३ ॥

(घ) पञ्चषाः,—पञ्च षट् वा संख्या येषां ते, पञ्चसंख्यकाः षट्संख्यका वेत्यर्थः। [ "बहुव्रीहौ संख्येये डजबहुगणात्" (५।४।७३ पा०) इति डच्प्रत्ययः ]। विलक्षणः,—विशिष्टं लक्षणमस्य इति, विभिन्नलक्षण इत्यर्थः ; अप्रसन्नमुखाकृतिरिति भावः। ("विलक्षः" इति पाठे—विस्मित इत्यर्थः)। 'एतावद्वित्तम्' इयदधिकसंख्यकं धनम्, अद्यैव मया इयत् प्रभूतं धनं दत्तं, पुनरपि बहवोऽर्थिनः समागताः, एतेभ्योऽपि दातुं भविष्यति इति विविच्य अप्रसन्नाकारः सञ्जात इति बोध्यम।

राज्ञः मुखाकारेण व्यग्रकुण्ठोऽयमित्यनुमाय तस्य दानशक्तिप्रबोधाय पुनस्कविर्नाऽऽह, किमिति।—हे शतपत्र !—पद्म, ("वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्। सहस्रपत्रं कमलं शतपत्रं कुशेशयम्॥" इत्यमरः) किं—कथं, कस्मैचन—यस्मै कस्मैचित्, कुप्यसि ?—क्रुध्यसि ? यस्य ; मधुनः इति भावः ; कृते—निमित्तम्, अद्य—इदानीं, ते—तव, प्रतिपत्रं—प्रतिदलेषु, भ्रमरैः,—भृङ्गैः, मृग्यते,—अन्विष्यते, [ मृग + णिच् + कर्म्मणि लट् ते ] तस्मै, सौरभसाराय—सौरभं —गन्धः सारो यस्य तादृशाय, निजमधुने—निजगुणरूपमकरन्दाय, [ "क्रुधद्रुहेर्ष्या—" (१।४।३७ पा०) इति चतुर्थी ] कुप्य—तत् प्रति कोपं कुरु ; [ कुप + लोट्-हि ] ; यदि ते मधु न स्यात्, तदा भ्रमरा अपि नागच्छेयुः, अतः तस्मै कुप्य, नान्यस्मै इति भावः ; यदि ते दातृत्वं गुणग्राहिता च न स्यात्, तदा कोऽप्यर्थी पण्डितश्च नागच्छेत्, अतो निजगुणगणेभ्य एव कोपं कुरु, नार्थिभ्यः इति गूढाशयः। गीतिश्छन्दः ॥ ४ ॥

"न दातुं नोपभोक्तुञ्च शक्नोति कृपणः श्रियम्।
किन्तु स्पृशति हस्तेन नपुंसक इव स्त्रियम्॥ ५॥
याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान् भवेत्।
तं दृष्ट्वाऽप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात्"॥ ६॥

ततस्तुष्टो राजा पुनरपि कलिङ्गदेशवासिकवये लक्षं ददौ। ततः (ङ) पूर्वकविः पुरःस्थितान् षट्कवीन्द्रान् दृष्ट्वाऽऽह,—"हे कवयः! अत्र महासरःसेतुभूमौ वासी राजा यदा भवनं गमिष्यति, तदा किमपि ब्रूत" इति। ते च सर्वे महाकवयोऽपि सर्वं राज्ञः (च) प्रथमचेष्टितं ज्ञात्वाऽवर्त्तन्त; तेष्वेकः सरोमिषेण नृपं प्राह,—

कृपणानां प्रकृतिं वर्णयति, नेति।—कृपणः,—व्ययकुण्ठः जनः, श्रियं—सम्पदं, दातुं—वितरितुं, न, उपभोक्तुञ्च—स्वदितुञ्च, न शक्नोति, किन्तु नपुंसकः,—क्लीवः, स्त्रियमिव—नारीमिव, केवलं हस्तेन—करेण, स्पृशति—परामृशति; स्पर्शमात्रेणैव सुखमनुभवति, न तु भोगेन दानेन वा इति भावः। ("दिव्यस्त्रीमान् यथा निशि" इति पाठान्तरम्। तत्र "भान्" क्लीवः। अन्यत् समानम्)॥ ५॥

दातुः गौरवं प्रदर्शयति, याचित इति।—यः याचितः,—मह्यमेतद्देहीति केनापि प्रार्थितः सन्, प्रहृष्येत—हृष्टो भवेत्, [ प्र + हृष + विधिलिङ्-ईत। अत्र आत्मनेपदं चिन्त्यम् ] दत्त्वा च—अर्पयित्वा च; सत्पात्रे इति भावः; प्रीतिमान्—सन्तुष्टः, भवेत्—स्यात्, नरः,—लोकः, तं—तादृशं जनं, दृष्ट्वा—विलोक्य, अथवा श्रुत्वाऽपि—तस्य नाम आकर्ण्यापि, स्वर्गम् अवाप्नुयात्—लभेत॥ ६॥

(ङ) पूर्व्वकविः,—गोविन्दाख्यः प्रथमपरिचितः कविः। महासरःसेतुभूमौ—महासरसः,—बृहज्जलाशयस्य, सेतुभूमौ—आलिप्रदेशे। वासी—वासकारी; वसतीत्यर्थः। [ वस + णिनिः ]। राजेदानीम् अभावजलधिकूले वर्त्तते, मृगयार्थं समागतस्यास्य अत्रारण्ये धनादिकं यत् किञ्चित् स्थितं; तत् सर्वं निःशेषितं जातं, राजधानी च दूरे वर्त्तते, अतोऽधुना काऽपि आशा नास्तीति वक्तुराशयः।

(च) प्रथमचेष्टितम्—अभिनवोद्यमं, दानादिभिः यशःसञ्चयप्रयत्नमचिरकालिकमिति यावत्; अप्रथमचेष्टितस्य कदा कियद्धनस्य प्रयोजनमापतिष्यति इति प्रभूतधनागयनसम्भावनादिति भावः। अवर्त्तन्त—तूष्णीमतिष्ठन् इत्यर्थः।

"आगतानामपूर्णानां पूर्णानामपि गच्छताम्।
यदध्वनि न सङ्घट्टो घटानां तत् सरो वरम्" ॥७॥ इति।

तस्मै राजा लक्षं ददौ। ततो गोविन्दपण्डितस्तान् कवीन्द्रान् दृष्ट्वा चुकोप। तस्य कोपाभिप्रायं ज्ञात्वा द्वितीयः कविराह,—

"कस्य तृषं न क्षपयसि पिबति न कस्तव पयः प्रविश्यान्तः?।
यदि सन्मार्गसरोवर! नक्रो न क्रोडमधिवसति" ॥ ८ ॥

लब्धालब्धकामानर्थिनो लक्ष्यीकृत्य राज्ञो दातृत्वे किञ्चित्कटाक्षयति, आगतानामिति।—हे सरः!—सरोवर! अगाधजलाशयतुल्य इत्यर्थः; सरो यथा प्रभूतजलेन परिपूर्णं पिपासातुराणां पानेच्छामपनयति, तथा प्रभूतधनशाली त्वमपि धनपिपासूनां तन्निवारणसमर्थोऽसि इति भावः; (सरो यथा कांश्चिदप्यर्थिनः न विमुखयति, तथापि तथा भवितुमुचितमिति सरःशब्देन व्यज्यते); यदध्वनि—यस्य—सरसः, अध्वनि—आगमनमार्गे, अपूर्णानां—जलशून्यानाम्, अत एव आगतानां—जलार्थमुपस्थितानां, तथा पूर्णानां—जलभरितानाम्, अत एव गच्छतामपि—जलं गृहीत्वा प्रत्यावर्त्तमानानाञ्च, घटानाम्—कलसानाम्, (अर्थिनामिति च ध्वनिः) सङ्घट्टः,—घर्षणं, परस्परप्रतिघात इत्यर्थः, न, भवतीति शेषः, तत्—तादृशं, सरः, वरं—श्रेष्ठम्; भवदन्तिके भिक्षार्थमागच्छतां भिक्षां लब्ध्वा गच्छताञ्च येन अन्योऽन्यसङ्घर्षो न जायेत, तथा त्वया कर्त्तव्यमिति भावः॥ ७॥

गोविन्दपण्डितस्य दानप्रतिबन्धकाचरणरूपदूरभिसन्धिं बुद्ध्वा छलेन द्वितीयकविराह, कस्येति।—मार्गसरोवरः,—मार्गस्थितः सरोवरः, सतां—विदुषां, मार्गसरोवर इव तादृशः, तत्सम्बोधने, हे सन्मार्गसरोवर!—पथिपार्श्वस्थसरोवरधर्म्म!, आतपतप्ता हि पान्थाः मार्गसरोऽम्बुना तृष्णामपनयन्ति, दारिद्र्योपहता विद्वांसोऽपि त्वद्दत्तार्थेनात्मानं पोषयन्तीति राज्ञः तथाऽऽमन्त्रणम्। यद्वा—सन्—प्रशस्तः, सुखेनावतरणार्ह इति यावत्, मार्गः—पन्थाः, सोपानावलीत्यर्थः, यस्य तादृशः, सरोवरः,—जलाशयः, तत्सम्बोधने, सर्वेषामेवाक्लेशेनावगाहनार्हसरोवरसदृश! इत्यर्थः; बद्धसोपाने सरसि यथा सर्वे सुखमवतरितुं शक्नोति, तथैव औदार्य्यादिसद्गुणनिचयेन त्वमपि सर्वेषामेव लोकानां सुखाश्रय इति भावः; यदि—चेत्, नक्रः,—दुष्टमत्स्यादिरूपः कुम्भीरः, तं क्रोडम्—उत्सङ्गम्, एकदेश—पार्श्वमित्यर्थः, अभ्यन्तर—मध्यमित्यर्थः, न अधि-

राजा (क) तस्मै लक्षद्वयं ददौ ; तञ्च गोविन्दपण्डितं व्यापारपदात् दूरीकृत्य "त्वयाऽपि सभायामागन्तव्यं, परन्तु केनापि दौष्ट्यं न कर्त्तव्यम्" इत्युक्त्वा ततस्तेभ्यः प्रत्येकं लक्षं दत्त्वा स्वनगरमागतः। ते च यथायथं गताः। ततः कदाचिद्राजा मुख्यामात्यं प्राह,—

"विप्रोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान स तिष्ठतु पुरे मम" ॥ ८ ॥ इति।

अतः कोऽपि न मूर्खोऽभूत् धारानगरे।

[ इति भोज-कविसंवादः ]।

---

वसति—न अधितिष्ठति, तदा त्वं कस्य—जनस्य इत्यर्थः, तृषं—तृष्णाम् ; एकत्र—धनस्य, अन्यत्र—जलस्य इत्यर्थः ; न अपनयसि ?—नापनयसि ? को वा जनः तव अन्तः,—मनः, अन्यत्र—अभ्यन्तरं, प्रविश्य—अवगाह्य, पयः,—धनादिरूपं जलं, न पिबति ?—अपि तु सर्व्व एव पिबतीत्यर्थः ; स्वच्छसरोवरोऽपि यदि कुम्भीराश्रयः स्यात्, तर्हि केषामपि ग्राह्यजलो यथा न स्यात्, तथा कृपणाः क्रूराश्च मन्त्रिणो यावत् ते मन्त्र-दातारो वर्त्तेरन्, तावत् त्वमपि सतामनाश्रयणीयः अर्थिनामभावपूरणाक्षमश्च इति भावः ; यशोऽर्थिना स्वान्तिके खलप्रकृतिः नैव स्थापनीया इत्याशयः। आर्य्या वृत्तम् ॥८॥

(क) तस्मै—द्वितीयकवये। व्यापारपदात—स्वनियोगादित्यर्थः, [ अपादाने ५मी ]। दूरीकृत्य—अपसार्य्य, स्वाधिकारादन्यांकन् निम्नतमाधिकारे अवनमय्य इत्यर्थः, सर्वथा विताड्य इत्यर्थो वा। त्वयाऽपि—भवता द्वितीयकविनाऽपि इत्यर्थः। केनापि, सहेति शेषः। दुष्टस्य कर्म्म दौष्ट्यं—दौर्जन्यं, दुष्टव्यवहार इत्यर्थः। तेभ्यः,—कविभ्यः।

विप्र इति।—यः, जनः इति शेषः, विप्रोऽपि,—ब्राह्मणः सन् अपि, वर्णश्रेष्ठोऽपि इति भावः ; मूर्खः,—अज्ञः, भवेत्—स्यात, स मे—मम, पुरात्—नगरात्, बहिरस्तु—बहिर्यातु, दूरीभवतु इत्यर्थः ; तद्दृष्टान्तेन अन्येषामपि मूर्खत्वसम्भावनया इति भावः ; यश्च कुम्भकारः,—कुलालः सन् अपि, हीनकर्म्मनिरतोऽपीति भावः ; [ "कर्म्मण्यण्" (३।२।१ पा०) इति कुम्भ+कृ+अण् ], विद्वान्—पण्डितः, स मम पुरे—नगरमध्ये, तिष्ठतु—वर्त्तताम् ; नगरवासिनः सर्व्व एव पण्डिता भवन्तु, नैतत् मूर्खावासयोग्यमित्यभिप्रायः ॥ ९ ॥

# भोज-शङ्करकविसंवादः।

ततः क्रमेण पञ्चशतानि विदुषां वररुचि-बाण-मयूर-रेफण-हरि-शङ्कर-कलिङ्ग-कर्पूर-विनायक-मदन-विद्याविनोद-कोकिल-तारेन्द्रमुख्याः सर्वशास्त्रविचक्षणाः सर्वे सर्वज्ञाः श्रीभोजराजसभामलञ्चक्रुः। एवं स्थिते कदाचिद्द्विरदवृन्दवन्दिते सिंहासनासीने कविशिरोमणौ कवित्वप्रिये विद्वत्प्रियबान्धवे भोजेश्वरे द्वारपाल एत्य प्रणम्य व्यजिज्ञपत्,—"देव! कोऽपि विद्वान् द्वारि तिष्ठति" इति। अथ राज्ञा "प्रवेशय तम्" इति भाषिते सोऽपि दक्षिणेन पाणिना समुन्नतेन विराजमानो विप्रः प्राह,—"राजन्नभ्युदयोऽस्तु"

राजा। शङ्करकवे! किं पत्रिकायामिदम्?

कविः। पद्यं

राजा। कस्य?

कविः। तवैव भोजनृपते!

राजा। तत् पठ्यतां

कविः। पठ्यते।

एतासामरविन्दसुन्दरदृशां द्राक्‌चामरान्दोलना-
दुद्वेल्लद्भुजवल्लिकङ्कणझणत्कारः क्षणं वार्य्यताम्॥ १॥

राजन्निति।—हे राजन्! अभ्युदयः,—उन्नतिः, अस्तु—भवतु, उत्कर्षेण वर्त्ततामित्यर्थः। कवेरुक्तिरियम्। हे शङ्करकवे! पत्रिकायां—पत्रे, इदं किम्? इति राजोक्तिः। कविराह—पद्यं—श्लोकः। राजाऽऽह—कस्य? कविराह—हे भोजनृपते!—भोजराज! तवैव। राजाऽऽह—तत्—तर्हि, पठ्यताम्—उच्यताम्। कविराह—पठ्यते। राजादेशेन स्वकविताश्रावणाय समुद्यतः कविः व्यजनकारिणीनां चामरान्दोलनकालिककङ्कणशब्दस्य वैमनस्यजनकतया श्रुतिप्रतिबन्धकतया च तन्निवारणं याचते, एतासामिति।—अरविन्दसुन्दरदृशां—पद्मपलाशलोचनानाम्, एतासां—चामरग्राहि-

यथा यथा भोजयशो विवर्द्धते
सितां त्रिलोकीमिव कर्त्तुमुद्यतम्।
तथा तथा मे हृदयं विदूयते
प्रियाऽलकाऽऽली-धवलत्वशङ्कया"॥ २॥

ततो राजा शङ्करकवये द्वादशलक्षं ददौ। सर्वे विद्वांसश्च (क) विच्छायवदना बभूवुः, परं कोऽपि राजभयान्नावदत्। राजा च कार्य्यवशात् गृहं गतः।

[ इति भोज-शङ्करसंवादः ]।

णीनां, द्राक्—झटिति, चामरान्दोलनात्—चामरचालनवशात् हेतोः, उद्वेल्लतां—प्रचलतां, भुजवल्लिकङ्कणानां—बाहुलतास्थवलयानां, झणत्कारः,—झणदित्याकारकः शब्दः, क्षणं—कियत्कालं, वार्य्यतां—निषिध्यताम्; भूषणशिञ्जितानामतीव चित्ताकर्षकतया काव्यान्तरप्रतिबन्धकत्वादिति भावः। तथा चोक्तं—"काव्येन हन्यते शास्त्रं काव्यं गीतेन हन्यते। गीतन्तु स्त्रीविलासेन सर्वं हन्ति दरिद्रता॥" काव्यरसास्वादकाले गीतासक्तिस्त्रीविलासादिकं सर्व्वथा परिहरणीयमित्याशयः। शार्द्दूलविक्रीडितं वृत्तम्॥ १॥

भोजं स्तौति, यथेति।—त्रिलोकीं—त्रिभुवनं, सितां—शुभ्रां, कर्त्तुमिव—विधातुमिव, उद्यतम्—उद्युक्तं, भोजयशः,—भोजराजस्य कीर्त्तिः; आलङ्कारिकैः यशसः शुभ्रत्वेनोत्कीर्त्तनात् इति भावः, तथा च दर्पणे—"यशसि धवलता वर्ण्यते हासकीर्त्त्योः" इति; यथा यथा—यावद्यावत्, विवर्द्धते,—आप्यायते, मे—मम, हृदयं—मनः, तथा तथा—तावत्तावत, प्रियाऽलकालीधवलत्वशङ्कया—प्रियायाः,—भार्य्यायाः, अलकालीनां—चूर्णकुन्तलावलीनां, धवलत्वशङ्कया—शुभ्रत्वभयेन, विदूयते—परितपति; भोजस्य अतिविशदयशसा त्रिभुवनस्य धवलताऽऽपत्त्या त्रिभुवनान्तर्गतायाः स्वप्रियायाः अपि जराऽऽगमनसूचककेशशौक्ल्यभिया मनस्तापः सञ्जातः, प्रियावार्द्धक्यस्य सर्वेषामेव दुःखकरत्वादिति भावः। वंशस्थविलं वृत्तम्॥ २॥

(क) विच्छायवदनाः,—विच्छायं—विगतकान्तिकं, वदनं येषां ते, ईर्ष्यया मलिनमुखाः।

# भोज-कालिदाससंवादः ।

ततो (क) वि-भूपालां सभां दृष्ट्वा विबुधगणास्तं निनिन्दुः,—"अहो नृपतेरज्ञता !! किमस्य सेवया ? वेदशास्त्रविचक्षणेभ्यः स्वाश्रयकविभ्यः केवलं लक्षमदात्; किमनेन वितुष्टेनापि ? असौ च केवलं ग्राम्यः कविः शङ्करः, किमस्य प्रागल्भ्यम् ?" इति ।

एवं कोलाहलरवे जाते कश्चिदभ्यगात् (ख) कनकमणि-कुण्डलशाली दिव्यांशुकप्रावरणो नृपकुमार इव मृगमदपङ्क-कलङ्कितगात्रो नवकुसुमसमभ्यर्चितशिराश्चन्दनाङ्गरागेण विलोभयन् विलास इव मूर्त्तिमान् कवितेव तनुमाश्रितः शृङ्गाररसस्य स्यन्द इव सस्यन्दो महेन्द्र इव महीवलयं प्राप्तो विद्वान् । तं दृष्ट्वा

---

(क) विभूपालां—विगतः भूपालो यस्यास्तां, नरपतिशून्याम् । अस्य—भोजनृपतेः । वितुष्टेन—असन्तुष्टेन । ग्राम्यः,—प्राकृतः, साधारण इत्यर्थः । प्रागल्भ्यं—प्रतिभासमन्वितत्वं, प्रत्युत्पन्नमतित्वमित्यर्थः । किम् ?—किमपि नास्तीत्यर्थः; प्रतिभाविहीनत्वादस्य विद्या निष्फलैवेति भावः । तथा चोक्तं—"प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते । न तुष्टिमुत्पादयते शरीरे ह्यन्धस्य दारा इव दर्शनीयाः ॥" इति ।

(ख) कनकेति ।—कनकमणी: कुण्डलाभ्यां—उत्कृष्टस्वर्णनिर्म्मितकर्णभूषणाभ्यां, रत्नखचितसुवर्णमयकर्णभूषणाभ्यां वा, शालते,—शोभते इति तथोक्तः । दिव्येति ।—दिव्यम्—उत्कृष्टं, सूक्ष्ममित्यर्थः, अंशुकं—वस्त्रं, प्रावरणम्—उत्तरीयं यस्य सः । मृगेति ।—मृगमदः,—कस्तूरी, तस्य पङ्केन—कर्दमेन, घर्षणेन पङ्कीकारीकृतकस्तूरिकया इत्यर्थः, कलङ्कितम्—अङ्कितं, सुरभितमिति यावत्, गात्रं यस्य सः । नवकुसुमसमभ्यर्चितशिराः,—नवकुसुमैः,—अभिनवैः पुष्पैः, समभ्यर्चितं—शोभितं, शिरः—मस्तकं यस्य सः; "शिरः सपुष्पं चरणौ सुपूजितौ" इत्युक्त्या शिरसि प्रत्यग्रकुसुमधारणस्य लक्ष्मीप्रसादकत्वादिति भावः । शृङ्गाररसस्य स्यन्दः,—प्रवाह इव । सस्यन्दः,—प्रवाहवत् सवेग इत्यर्थः । महेन्द्रः इव—देवराज इव । महीवलयं—भूमण्डलम् ।

ततः कोऽपि राजपुरुषः तद्विद्वत्स्वरूपं द्राक् राज्ञे निवेदयामास। राजा च स्वमभिप्रायं साक्षाद्विदितवन्तं तं महेशमिव महापुरुषं मन्यमानः सभामभ्यगात्। स च "स्वस्ति" इत्याह राजानम्। राजा च तमालिङ्ग्य प्रणम्य निजकरकमलेन तत्करकमलमवलम्ब्य सौधान्तरं गत्वा प्रोत्तुङ्गगवाक्षे उपविष्टः प्राह,—"विप्र! भवन्नाम्ना काव्याक्षराणि (च) सौभाग्यावलम्बितानि? कस्य वा देशस्य भवद्विरहः सुजनान् बाधते?" इति। ततः कविर्लिलेख राज्ञो हस्ते "कालिदासः" इति। राजा वाचयित्वा पादयोः पपात। ततस्तत्रासीनयोः कालिदासभोजराजयोरासीत् सन्ध्या। राजा—"सखे! सन्ध्यां वर्णय" इत्यवादीत्। कविः प्राह,—

"व्यसनिन इव विद्या क्षीयते पङ्कजश्रीः
गुणिन इव विदेशे दैन्यमायान्ति भृङ्गाः।
कुनृपतिरिव लोकं पीड़यत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः" ॥ १ ॥

मैकादशरुद्राय देवाय शङ्कराय प्रत्येकमेकैकलक्षं दत्तवान्, अतो न भवद्भिः कोपितव्यमिति निष्कृष्टार्थः। शङ्करकविः साक्षात् शङ्कर एव इति वक्तुराशयः।

(च) सौभाग्यावलम्बितानि—सौभाग्ययुक्तानि, सार्थकानीत्यर्थः; भवदीयनामावयवत्वात् तेषामक्षराणां सौभाग्यम् अहं मन्ये इति भावः। बाधते—पीडयति।

प्रदोषं वर्णयति, व्यसनिन इति।—व्यसनिनः,—व्यसनासक्तस्य, विद्या इव—शास्त्राभ्यास इव, पङ्कजश्रीः,—पद्मशोभा, क्षीयते—क्षयं गच्छति, म्लाना भवतीत्यर्थः, [क्षि + कर्मकर्त्तरि लट् ते], विदेशे—प्रवासे, गुणिन इव—पण्डिता इव, भृङ्गाः,—भ्रमराः, दैन्यं—दीनभावम्, आयान्ति—प्राप्नुवन्ति, अन्धकारः,—तमः, कुनृपतिरिव—कुराजेव, लोकं—भुवनं, जनसमूहञ्च, पीडयति—क्लेशयति, तथा चक्षुः,—नयनं, कृपणस्य धनमिव, व्यर्थतां—निष्फलत्वम्, एति—प्राप्नोति; कृपणस्य सदपि धन यथा किमपि प्रयोजनं न साधयति, तथा दृष्टिशक्तिसम्पन्नमपि

पुनश्च राजानं स्तौति कविः,—

"उपचारः कर्त्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः ।
उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥ २ ॥

दत्ता तेन कविभ्यः पृथ्वी सकलाऽपि कनकसम्पूर्णा ।
दिव्यां सुकाव्यरचनां क्रमं कवीनाञ्च यो विजानाति ॥ ३ ॥

सुकवेः शब्दसौभाग्यं सत्कविर्वेत्ति नापरः ।
बन्ध्या न हि विजानाति परां दौहृदसम्पदम्" ॥ ४ ॥

इति ।

नयनम् अन्धकारेण किमपि द्रष्टुमशक्यत्वात् दृष्टिशक्तिविरहितमिव भवतीति भावः । मालिनी वृत्तम ॥ १ ॥

राज्ञः स्तुतिप्रारम्भे स्वं प्रति तस्याशयः कीदृगिति ज्ञातुमाह, उपचार इति ।—पुरुषाः,—जनाः, यावत्—यत्कालपर्य्यन्तम्, अनुत्पन्नसौहृदाः,—न उत्पन्नं सौहृदं—मित्रता येषां ते, अजातमित्रभावाः इत्यर्थः, तावत् उपचारः,—मिष्टसम्भाषणादिः, परस्परमिति शेषः, कर्त्तव्यः,—विधेयः, उत्पन्नसौहृदानां—सञ्जातमित्रभावानां जनानां पक्षे, उपचारः, कैतवं—छलं, कपटताव्यञ्जकमित्यर्थः ; चाटुकारिता इति भावः ; भवति ; उत्पन्नसौहृदानां स्वच्छन्दालाप एव विधेयः, न तु चेतोरञ्जनं प्रकृताप्रकृतगुणवर्णनादिकमिति भावः ; भवता सह मम मैत्री सञ्जाता चेत् तव गुणवर्णनादिकं निष्प्रयोजनमिति वक्तुराशयः । आर्य्या वृत्तम् ॥ २ ॥

कवीनां मानयिता कवितारसज्ञश्च त्वं स्वयमपि सुकविरिति भङ्ग्या राजानं स्तौति द्वाभ्यां, दत्तेति ।—यः, जनः इति शेषः, दिव्याम्—उत्कृष्टां, गुणालङ्कारादि-समन्वितां भावसुभगाञ्चेत्यर्थः, सुकाव्यरचनां—सत्काव्यप्रणयनं, कवीनां क्रमञ्च—रचनापरिपाटीञ्च, विजानाति—विशेषेण वेत्ति, तेन, जनेन इति शेषः, सकला—समग्रा, कनकसम्पूर्णा—सुवर्णपरिपूरिता, पृथ्वी अपि—मेदिनी अपि, किं पुनः हिरण्यरत्नादिकमिदं यत्किञ्चिदर्थजातमित्यपेरर्थः ; कविभ्यः दत्ता—अर्पिता ; श्रीमतां दानशौण्डतया निश्चिनोमि यत् स्वयमपि महाकविर्भवान्, यतः कवित्वरसज्ञस्य न किमप्यदेयं कविभ्यः इति भावः । गीतिश्छन्दः ॥ ३ ॥

सुकवेरिति ।—सत्कविः,—सुकविरेव, सुकवेः,—सत्कवेः, शब्दसौभाग्यं—शब्द-सौष्ठवं, रचनानैपुण्यमिति यावत्, वेत्ति—जानाति, अपरः,—अन्यः, अकवि-

ततः क्रमेण भोजकालिदासयोः प्रीतिरजायत।

ततः कालिदासं वेश्यालम्पटं ज्ञात्वा तस्मिन् सर्वे द्वेषं चक्रुः, न कोऽपि तं स्पृशति। अथ कदाचित् सभामध्ये कालिदासमालोक्य भोजेन मनसा चिन्तितं,—"कथमस्य प्राज्ञस्यापि (छ) स्मरपीड़ाप्रमादः" इति। सोऽपि तदभिप्रायं ज्ञात्वा प्राह,—

"चेतोभुवश्चापलताप्रसङ्गे का वा कथा मानुषलोकभाजाम्।
यद्दाहशीलस्य पुरां विजेतुः तथाविधं पौरुषमर्द्धमासीत्" ॥५॥

रमत्कवित्वं इत्यर्थः, न वेत्तीति शेषः, तथा हि वन्ध्या—गर्भग्रहणशक्तिविरहिता, अजातपुत्रा नारीत्यर्थः, पराम्—उत्कृष्टां, दौहृदसम्पर्द—गर्भिणीमनोरथरूपां सम्पत्तिं, न हि—नैव, विजानाति—अवगच्छति ; भवान् सत्कवित्वाशास्माहं, मन कवितायाः अपि प्रकृतरसास्वादं गुणवत्ताञ्च मे भवानेव विज्ञातुं शक्नोतीत्याशयः ॥ ४ ॥

(छ) स्मरेति।—स्मरपीड़ा—कामासक्तिरेव, प्रमादः,—अनवधानता, अविमृष्यकारितेत्यर्थः।

इङ्गितज्ञः कविः राज्ञो मुखाकारेण तदाशयं ज्ञात्वा यथोचितं प्रत्युत्तरति, चेत इति।—यत्—यस्मात्, दाहशीलस्य—कन्दर्पदाहकस्य, नयनाग्निना कामस्य भस्मीकर्त्तुरित्यर्थः, पुरां विजेतुः,—त्रिपुरविजयिनः शिवस्य, तथाविधं—तादृशं, सर्वलोकविदितमित्यर्थः, पौरुषं—पुरुषकारः, अर्द्धं—हरगौरीरूपेण भागद्वयात्मकम्, आसीत्—अभूत्, अतः मानुषलोकभाजां—मर्त्यवासिनां मनुष्याणां सम्बन्धे, चेतोभुवः,—कामस्य, चापलताप्रसङ्गे—चञ्चलताकीर्त्तने, का वा कथा?—किमुदाहरणम्? अकिञ्चित्करमित्यर्थः ; यद्वा—चेतोभुवः,—मनसिजस्य कामस्य, चापलताप्रसङ्गे—चापल्यविषये, मानुषलोकभाजां—रिपुषट्काधीनविषयिमानवानामित्यर्थः, सम्बन्धे, का वा कथा?—किं वक्तव्यम्? अवशीभूतेन्द्रियाणां मानवानां कामासक्तित्वं किमप्याश्चर्यजनकत्वं नास्तीत्यर्थः। कथं नास्तीत्याह, यदिति।—यद्दाहशीलस्य—यस्य—कामस्य, दाहशीलस्य—दाहकर्त्तुः, पुरां विजेतुः,—शिवस्य, तथाविधं—तादृशं, जगति सुप्रसिद्धमित्यर्थः, अर्द्धम्—अर्द्धाङ्गमात्रं, पौरुषं—पुरुषसम्बन्धि ; अपराङ्गस्य स्त्र्यात्मकत्वादिति भावः ; आसीत् ; अरहरोऽपि यदा स्मरवशीभूतः सन्

ततस्तुष्टो भोजराजः प्रत्यक्षरलक्षं ददौ। ततः कालिदासः भोजं स्तौति,—

"महाराज! श्रीमन्! जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते।
कपर्दी कैलासं करिवरमभौमं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना॥ ६॥

नीरक्षीरे गृहीत्वा निखिलखगततीर्याति नालीकजन्मा
तक्रं धृत्वा तु सर्वानटति जलनिधींश्चक्रपाणिर्मुकुन्दः।
सर्वानुत्तुङ्गशैलान् दहति पशुपतिर्भालनेत्रेण पश्यन्
व्याप्ता त्वत्कीर्त्तिकान्ता त्रिजगति नृपते! भोजराज! क्षितीन्द्र!॥७॥

---

अर्द्धनारीश्वररूपं परिगृह्य सदैव गौर्य्या रमते, तदा अजितेन्द्रियाणां मानुषाणां स्वाधीनत्वे कथैव नास्तीति समुदितार्थः। इन्द्रवज्रा वृत्तम्॥ ५॥

भोजस्तुतिमाह, महाराजेति।—हे श्रीमन्!—सुलक्षीक!, महाराज!—नृपेन्द्र! ते—तव, यशसा—कीर्त्त्या, जगति—पृथिव्यां, धवलिते—शुभ्रीभूते सति, अयं—सुप्रसिद्धः क्षीरोदशायी, परमपुरुषः,—विष्णुः, अधुना—इदानीमपि, शब्दोऽयं कपर्द्यादिष्वपि एवं योजनीयः; पयःपारावारं—दुग्धाब्धिं, मृगयते—अन्विष्यति, कपर्द्दी—शिवः, कैलासं—तदाख्यं पर्वतं, कुलिशभृत्—वज्रधरः इन्द्रः, अभौमं—स्वर्गीयं, करिवरं—गजेन्द्रम्, ऐरावतमित्यर्थः, राहुः,—विधुन्तुदः, कलानाथं—चन्द्रं, तथा कमलभवनः,—पद्मासनः ब्रह्मा, हंसं—निजवाहनं, मृगयते इति क्रियापदं सर्व्वत्र सम्बध्यते; अतिविशदेन ते यशसा जगतः श्वेतमयत्वात् शुभ्रत्वेन प्रथितानां दुग्धसागरादीनां दुर्ज्ञेयतया स्वस्वावासवाहनादीनामन्वेषणमिति भावः; अहो! ते सुविमलं दिगन्तपूरितं यशःप्राकर्ष्यं, येन शौक्ल्यनिदर्शनानि क्षीरोदसागरादीन्यपि कुक्षिस्थीकृतानीत्यद्भुतकीर्त्तिमांस्त्वमित्याशयः। शिखरिणी वृत्तम्॥ ६॥

नीरक्षीरे इति।—हे भोजराज! हे क्षितीन्द्र!—पृथिवीश्वर!, हे नृपते!—नरनाथ!, त्वत्कीर्त्तिकान्ता—कमनीयकामिनीरूपा तव दानादिजनिता ख्यातिः, "दानादिप्रभवा कीर्त्तिः शौर्य्यादिप्रभवं यशः" इति स्मरणात्; त्रिजगति—त्रिभुवने, व्याप्ता—विस्तृता, त्रिभुवनं व्याप्य अवस्थिता इत्यर्थः, अत एव नालीकजन्मा—नालीकात्—अब्जपद्मात्, कमलसमूहात् इत्यर्थः; तथाच विष्णुनाभिकमलात् इति

विद्वद्राजशिखामणे ! तुलयितुं धाता त्वदीयं यशः
कैलासञ्च निरीक्ष्य तत्र लघुतां निक्षिप्तवान् पूर्त्तये ।
उक्षाणं तदुपर्य्युमासहचरं तन्मूर्ध्नि गङ्गाजलं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥ ८ ॥

भावः ; ("नालीकः शरशल्यास्त्रेऽप्यब्जपङ्क्ते नपुंसकम्" इति मेदिनी) जन्म यस्य सः, पद्मभूः ब्रह्मा, नीरक्षीरे—जलं दुग्धञ्च, गृहीत्वा—आदाय, निखिलखगततीः,—सकलान् पक्षिणः ; जगद्वासिनां सर्वेषां पक्षिणां हंसवत् शुभ्रत्वात् निजवाहनं हंसं निश्चेतुमक्षमतया इति भावः ; याति—तत्तत्सकाशं गच्छति ; हंसा हि सजलदुग्धात् जलभागं विहाय दुग्धमेव पिबन्ति इति निखिलखगेषु ये तथाविधं दुग्धं पिबन्ति, तेषामेव हंसत्वेनावधारणार्थमिति भावः ; चक्रपाणिः,—चक्रधारी, मुकुन्दस्तु—विष्णुस्तु, तक्रं—घोलं, धृत्वा—गृहीत्वा ; चक्रपाणिः निजास्त्रं चक्रं विहाय तक्रपाणिः सन् इति भावः ; ("तक्रम्" इत्यत्र "चक्रम्" इति पाठान्तरम्) सर्वान्—सकलान्, जलनिधीन्—समुद्रान्, सप्तापि सागरान् इति यावत्, अटति—भ्रमति, यस्य समुद्रस्य पयः तक्रसंयोगेन विकृतं सत् कूर्चिकारूपेण (छाना) परिणंस्यते, तस्यैव क्षीरसमुद्रत्वेनावधारणार्थमिति भावः ; तथा पशुपतिः,—शिवः, भालनेत्रेण—ललाटलोचनेन, तृतीयचक्षुषा इत्यर्थः, पश्यन्—अवलोकयन्, सर्वान्—सकलान्, उत्तुङ्गशैलान्—उन्नतपर्वतान् ; शौक्ल्ये सर्वेषां साम्येऽपि उन्नततायां कैलास एव सर्वशैलेभ्यः श्रेष्ठ इति को हि एतेषु अत्युन्नतः, इति निर्णयार्थमित्याशयः ; दहति—भस्मीकरोति ; भाललोचनस्य अग्निमयत्वात् संहारकत्वाच्च इति भावः । स्रग्धरा वृत्तम् ॥ ७ ॥

सर्वेभ्यो गौरववद्वस्तुभ्योऽपि भवद्यशो गरीयः इति वक्तुमाह, विद्वदिति ।—हे विद्वद्राजशिखामणे !—विदुषां—पण्डितानां, राज्ञां—नृपाणाञ्च, शिखामणिः,—शिरोमणिः, तत्सम्बोधने । ("विद्वन् !" इति व्यस्तपाठे—हे विद्वन् ! हे राजशिखामणे ! इत्येवमन्वयः कार्य्यः)। धाता—ब्रह्मा, त्वदीयं—भवदीयं, यशः,—कीर्त्तिं, कैलासञ्च—तदाख्यपर्वतञ्च, तुलयितुं—समीकर्त्तुम्, अनयोः कोऽधिको गुरुः इति तुलादण्डेन परिमातुमित्यर्थः, प्रवृत्त इति शेषः, तत्र—कैलासे, लघुतां—लाघवं, शौक्ल्ये गौरवे च इति भावः ; निरीक्ष्य—दृष्ट्वा, भवद्यशसोऽपेक्षया मलिनं स्वल्पभारवत्त्वञ्चावलोक्य इत्यर्थः, पूर्त्तये—शुक्लत्वगुरुत्वपूरणाय, परस्परं साम्यसम्पादनायेत्यर्थः, उक्षाणं—वृषभं, परस्मिन् भागे कैलासोपरि हरवाहनं वृषमित्यर्थः, तदुपरि—वृषोपरि, उमासहचरं—गौरीसहितं शिवं, तन्मूर्ध्नि—शिवमस्तके, गङ्गाजलं—गङ्गादेवीं

स्वर्गाद्गोपाल ! कुत्र व्रजसि ? सुरमुने ! भूतले कामधेनो:
वत्सस्यानेतुकामस्तृणचयमधुना मुग्ध ! दुग्धं न तस्याः ?।
श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा
व्यर्थो हि स्यात् प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम्" ॥९॥

तुष्टो राजा प्रत्यक्षरलक्षं ददौ।

[ इति भोज-कालिदाससंवादः ]।

---

तज्जलश्च इत्यर्थः ; हरस्य गङ्गाधरत्वादिति भावः ; तस्याग्रे—गङ्गाप्रवाहसमीपे, फणि-पुङ्गव—सर्पराजं वासुकिं, तदुपरि—वासुकेश्चोपरिभागे, स्फारं—विपुलं, प्रभाप्रचुर-मित्यर्थः, सुधादीधितिं—चन्द्रञ्च, निक्षिप्तवान्—निहितवान् ; शौक्ल्येन गुरुत्वेन च प्रधानस्यापि कैलासस्य भवद्यशोऽपेक्षया मालिन्यं लाघवञ्च दृष्ट्वा धाता तभर्यो: साम्य-विधानाय अनुक्रमेण कैलासोपरि सुशुभ्र हराादिकं निधायापि तं भवद्यशसा समीकर्तुं नाशक्नोत्, इत्यहो ! ते यशसो वैशद्यं गौरवं पावित्र्यमचाल्यत्वञ्चेति भावः। शार्दूल-विक्रीडितं वृत्तम् ॥ ८ ॥

नारदसुरगोदुहोरुक्तिप्रत्युक्तिच्छलेन स्वर्गवासिभिरपि भवद्यशः गीयते इत्याह, स्वर्गादिति।—हे गोपाल ! स्वर्गात्—स्वर्गं विहाय, [ल्यब्लोपे पञ्चमी] कुत्र व्रजसि ? —गच्छसि ?। इति नारदस्योक्तिः। हे सुरमुने !—देवर्षे ! कामधेनोः,—तदाख्यया प्रसिद्धाया गोः, वत्सस्य—शावकस्य, तद्भक्षणार्थमित्यर्थः, तृणचयं—घासकदम्बम्, आनेतुकामः,—आनयनेच्छुः सन्, भूतले—पृथिव्या, यामीति शेषः। इति गोपा-लोक्तिः। हे मुग्ध !—मूढ़ ! तस्याः,—कामधेनोः, अधुना—इदानीं, दुग्धं—पयः, न ?—नास्ति किम् ? इति मुनेरुक्तिः। सा—कामधेनुः, श्रीभोजराजस्य प्रचुरवितरणं —प्रभूतदानं, श्रुत्वा—आकर्ण्य, व्रीड़शुष्कस्तनी—व्रीड़ेन—लज्जया, ( व्रीडाशब्दः पुंलिङ्गोऽप्यस्ति "व्रीडोऽस्त्रीवे त्रपा लज्जा" इति रभसदर्शनात् ) शुष्काः स्तना यस्याः सा तादृशी, जातेति शेषः ; पृथिव्यां भोजे तिष्ठति न कोऽपि प्रार्थयितुं ममान्तिकमा-गमिष्यति इति चिन्तया लज्जया च शरीरकार्श्यात् स्तनयोः कृशता, तेन च दुग्धाभाव इति बोध्यम् ; इति गोपालोक्तिः। प्रयासः,—तव भूतलगमनप्रयत्नः, व्यर्थः,—विफलः, स्यात्—भवेत्, हि—यतः, उर्व्यां—पृथिव्यां, तदरिभिः,—भोजशत्रुभिः, तत् सर्वमपि—सकलमेव तृणं, चर्वितं—भक्षितम् ; भोजेन हृतसम्पत्कानाम् अत एव श्रीभ्रष्टानां दीनानां तेषां भक्ष्यान्तराभावादिति भावः। स्रग्धरा वृत्तम् ॥ ९ ॥

## भोज-अकविपण्डितसंवादः ।

ततः कदाचित् श्रुतिस्मृतिपारं गताः केचिद्राजानं कवित्वप्रियं ज्ञात्वा कश्चिन्नगराद्बहिः "भुवनेश्वरीप्रसादेन कवित्वं करिष्यामः" इत्युपविष्टाः । तेष्वेकेन पण्डितम्मन्येन एकचरणोऽपाठि,—

"भोजनं देहि राजेन्द्र !"

इति । अन्येनापाठि,— "घृतसूप समन्वितम् ।"

इति । उत्तरार्द्धन्तु न स्फुरति । तदा देवताभवनं कालिदासः प्रणामार्थमगात् । तं वीक्ष्य द्विजा ऊचुः,—"अस्माकं समग्रवेदविदामपि भोजः किमपि नार्पयति, भवादृशां हि यथेष्टं दत्ते, ततोऽस्माभिः कवित्वविधानधियाऽत्रागतम् ; चिरं विचार्य्य पूर्वार्द्धम् (क) अभ्यधायि, उत्तरार्द्धं कृत्वा देहि ; ततोऽस्मभ्यं किमपि प्रयच्छति" इत्युक्ता तत्पुरस्तादर्द्धमभाणि । स च तच्छ्रुत्वा,—

"माहिषञ्च शरच्चन्द्रचन्द्रिकाधवलं दधि" ॥ १ ॥

इत्याह ।

ते च राजभवनं गत्वा दौवारिकानूचुः,—"वयं कवितां

(क) अभ्यधायि—अवादि, अकारि इत्यर्थः । [ अभि + धा + कर्म्मणि लुङ्-त ] तदिति ।—तस्य—कालिदासस्य, पुरस्तात्—अग्रे । अभाणि—अवाचि । [ भण + कर्म्मणि लुङ्-त ] ।

माहिषमिति ।—शरच्चन्द्रचन्द्रिकाधवलं—शरच्चन्द्रस्य—शरत्कालिकसुधांशोः, या चन्द्रिका—ज्योत्स्ना, तद्वत् धवलं—शुभ्रं, माहिषं—महिषसम्बन्धि, दधि च, देहीत्यन्वयः ॥ १ ॥

ज्ञात्वा समागताः, राजानं दर्शयत” इति। ते च कौतुकात् हसन्तो गत्वा राजानं प्रणम्य प्राहुः,—

“राजमाषनिभैर्दन्तैः कटिविन्यस्तपाणयः।
द्वारि तिष्ठन्ति राजेन्द्र! छान्दसाः श्लोकशत्रवः” ॥ २ ॥

इति।

ततो राज्ञा प्रवेशितास्ते (ख) दृष्टराजसंसदो मिलिताः सन्तः कवितां पठन्ति स्म। राजा तच्छ्रुत्वा उत्तरार्द्धं कालिदासेन कृतमिति ज्ञात्वा विप्रानाह,—“येन पूर्वार्द्धं कारितं, तन्मुखात् कवित्वं कदाचिदपि न करणीयम्, उत्तरार्द्धस्य किञ्चिद्दीयतां, न पूर्वार्द्धस्य” इत्युक्त्वा प्रत्यक्षरलक्षं ददौ। तेषु च दक्षिणामादाय गतेषु कालिदासं वीक्ष्य राजा प्राह,—“कवे! उत्तरार्द्धं त्वया कृतम्” इति।

कविराह,—

“अधरस्य मधुरिमाणं कुचकाठिन्यं दृशोश्च तैक्ष्ण्यं वा।
कवितायां परिपाकं ह्यनुभवरसिको विजानाति” ॥३॥

राजेति।—हे राजेन्द्र!—नृपवर!, राजमाषनिभैः,—राजमाषाः,—स्थूलमाषाः, (“बरबटी” इति भाषा) तन्निभैः,—तत्सदृशपाण्डुवर्णैः, यद्वा—राजमाषनिभैः,—“माषकलाय” इति ख्यातस्थूलकृष्णवर्णमाषविशेषतुल्यैः, श्यामवर्णैरित्यर्थः, दन्तैः,—दशनैः उपलक्षिताः, [इत्थम्भूतलक्षणे तृतीया] कटिविन्यस्तपाणयः,—कट्यां—मध्यदेहे, विन्यस्तः,—स्थापितः, पाणिः,—हस्तः यैः ते, श्लोकशत्रवः,—कवितारिपवः; वेदशास्त्रपरायणानां कवितारसज्ञत्वाभावादिति भावः; छान्दसाः,—वेदज्ञाः केचित्, द्वारि तिष्ठन्ति—अपेक्षन्ते ॥ २ ॥

(ख) दृष्टेति।—दृष्टा—प्रत्यक्षीकृता, राजसंसद्—राजसभा यैस्ते।

भङ्ग्या भोजस्य कवितारसमर्म्मग्रहणे नैपुण्यमाह, अधरस्येति।—अधरस्य—दन्तच्छदस्य, मधुरिमाणं—माधुर्य्यं, [मधुर+अतिशयार्थे इमन्] कुचकाठिन्यं—कुचयोः,—स्तनयोः, काठिन्यं—कठिनतां, दृशोश्च—चक्षुषोश्च, तैक्ष्ण्यं वा—तीक्ष्णतां वा, हृदयवेधिकटाक्षवर्षणमित्यर्थः, सर्व्वमेव स्त्रीणामित्यध्याहार्य्यम्; तथा कवितायां

राजा च,—"सुकवे ! सत्यं वदसि,—

अपूर्वो भाति भारत्याः काव्यामृतफले रसः ।
चर्वणे सर्वसामान्ये स्वादवित् केवलं कविः ॥ ४ ॥

सञ्चिन्त्य सञ्चिन्त्य जगत् समस्तं
त्रयः पदार्था हृदयं प्रविष्टाः ।
इक्षोर्विकारा मतयः कवीनां
मुग्धाङ्गनाऽपाङ्गतरङ्गितानि" ॥ ५ ॥

[ इति भोज-सुकविपरिच्छित्तसंवादः ] ।

—स्त्रीकाविषये, परिपाकस्य—परिपक्वभावस्य, सौन्दर्य्यमित्यर्थः, एतत् सर्वम् अनुभव-रसिकः हि—भावबोधचतुरः जनः एव, विजानाति—बुध्यते, नान्य इत्यर्थः ; भवान् खलु निपुणः कविः रसज्ञश्च, अतः श्रवणमात्रेणैव कवयितुः परिश्रमोऽपि त्वया ज्ञायते इति भावः। आर्या वृत्तम् ॥ ३ ॥

अपूर्वेति ।—भारत्याः,—वाण्याः ; अमृतलतिकाया इति भावः ; काव्यामृतफले—काव्यरूपामृतास्वादवत्फले, रसः,—स्वादः, अपूर्वः,—विचित्रः, भाति—विराजते,तथा हि, चर्वणे—अस्य फलस्य भक्षणे, सर्वसामान्ये—सर्वसाधारणे सत्यपि, स्वादग्रहणे सर्वेषां समानप्रयत्नवत्त्वेऽपीति यावत्, केवलं कविः,—कविरेव, स्वादवित्—आस्वादज्ञः, माधुर्य्यवेत्ता इत्यर्थः ; ("स्वादुवित्" इति पाठान्तरम्) सर्वं एव काव्यं पठति, किन्तु कविरेव अस्य प्रकर्षत्वाप्रकर्षत्वनिर्णये समर्थः, नान्य इति भावः ॥ ४ ॥

सुकवेः प्रतिभायाः झटिति हृदयग्राहित्वमाह, सञ्चिन्त्येति ।—समस्तं—सकलं, जगत्—ब्रह्माण्डं, सञ्चिन्त्य सञ्चिन्त्य—पुनः पुनरनुसन्धाय, इक्षोर्विकाराः,—खण्ड-शर्करादयः, कवीनां मतयः,—बुद्धयः, प्रतिभा इत्यर्थः, तथा मुग्धाङ्गनाऽपाङ्गतरङ्गितानि—मुग्धाङ्गनानां—सुन्दरीणाम्, अपाङ्गतरङ्गितानि—कटाक्षस्य चञ्चलविल-सितानि च, त्रयः पदार्थाः,—एतानि त्रीणि वस्तूनि, हृदयं प्रविष्टाः,—चित्त-मधिकृत्य अवस्थिता इत्यर्थः ; चित्ताकर्षकवस्तुषु एते त्रय एव सर्वोत्कर्षेण वर्तन्ते, अत एव रसज्ञः श्रवणमात्रमेव काव्यं चेतसि निधाय तस्य रचयितारं विजानाति इति भावः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ ५ ॥

# भोज-लक्ष्मीधर-कुविन्दसंवादः ।

ततः कदाचित् द्वारपालः प्रणम्य भोजं प्राह,—"राजन्! द्राविड़देशात् कोऽपि लक्ष्मीधरनामा कविः (क) द्वारमध्यास्ते" इति। राजा "प्रवेशय" इत्याह। प्रविष्टमेव सूर्य्यमिव (ख) विभ्राजमानं चिरादप्यविदितवृत्तान्तं प्रेक्ष्य राजा विचारयामास, आह च,—

"आकारमात्रविज्ञानसम्पादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनाः क्वाप्यर्थिनां गिरः" ॥ १ ॥

स चागत्य तत्र राजानं "स्वस्ति" इत्युक्त्वा तदाज्ञयोपविष्टः

(क) द्वारं—द्वारि इत्यर्थः। [ "अधिशीङ्स्थासां—" ( १।४।४६ पा० ) इति अधिकरणस्य कर्म्मत्वम् ]। अध्यास्ते—अधितिष्ठति। [ अधि + आस् + लट्·ते ]।

(ख) विभ्राजमानं—देदीप्यमानम्। [ वि + भ्राज + शानच् ] अविदितवृत्तान्तमपि—अज्ञातपरिचयमपीत्यर्थः; प्रवेशानन्तरं दीर्घकालं व्याप्य तूष्णीमवस्थानात् इति भावः। चिरात् प्रेक्ष्य—बहुक्षणमवलोक्य।

उपस्थितकवेस्तेजःपुञ्जाकारं दृष्ट्वा तस्य सत्पात्रत्वम् अयाचितदानास्पदत्वञ्च विमृशति, आकारेति।—आकारमात्रविज्ञानसम्पादितमनोरथाः,—आकारमात्रस्य—केवलमाकृतेरेव, विज्ञानेन—अवबोधेन, ईदृशतेजोमण्डिताकारः न हि सामान्यार्थप्रत्याशी इति निश्चयेनेत्यर्थः, सम्पादितः,—संसाधितः, मनोरथः यैः तादृशाः, अर्थिनाम् आकारदर्शनेनैव तेषां मनोरथपूरणकारिण इत्यर्थः, ये, जनाः इति शेषः, अर्थिनां—याचकानां, दीनाः,—कातराः, गिरः,—देहि देहि इति वाक्यानि, क्वापि—कदाऽपि, न शृण्वन्ति—न आकर्णयन्ति, ते धन्याः,—प्रशस्याः; ये खलु याचकानां दीनोक्तिश्रवणात् प्रागेव तेषामाकारदर्शनानुमितप्रभावाः अभीष्टं पूरयन्ति, ते एव धन्याः, अतो याच्ञायाः प्रागेवास्य अभीष्टं प्रपूर्य्य धन्यो भवामीत्याशयः ॥ १ ॥

प्राह,—"देव ! इयं ते पण्डितमण्डिता सभा, त्वञ्च साक्षाद्विष्णुरसि, ततः किं नाम पाण्डित्यं मम ? तथाऽपि किञ्चिद्वच्मि,—

भोजप्रतापन्तु विधाय धात्रा
शेषैर्निरस्तैः परमाणुभिः किम् ।
हरेः करेऽभूत् पविरम्बरे च
भानुः पयोधेरुदरे कृशानुः ?" ॥ २ ॥ इति ।

ततस्तेन (ग) परिषच्चमत्कृता । राजा च तस्मै प्रत्यक्षरलक्षं ददौ । पुनः कविराह,—"देव ! मया सकुटुम्बेनात्र निवासाशया समागतम् ;—

क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते ।
अनुकूलः शुचिर्दक्षः कविर्विद्वान् सुदुर्लभः" ॥ ३ ॥

इति ।

ततो राजा मुख्यामात्यं प्राह,—"अस्मै गृहं दीयताम्"

इन्द्रादिदेवेभ्योऽपि भोजस्य शौर्य्यवत्तां विवृणोति, भोजेति ।—धात्रा—ब्रह्मणा, भोजप्रतापं—भोजराजस्य प्रभावं, कोषदण्डजं तेज इत्यर्थः, विधाय—निर्म्माय, आदौ सम्पाद्येत्यर्थः, निरस्तैः,—निःसारत्वेन अप्रयोजनीयत्वेन परित्यक्तैरित्यर्थः, शेषैः,—निर्म्माणावशिष्टैः, परमाणुभिस्तु—उपकरणभूतैः तेजसैरणुभिरित्, हरेः,—इन्द्रस्य, करे—हस्ते, पविः,—वज्रम्, अम्बरे—आकाशे, भानुः,—सूर्य्यः, पयोधेरुदरे—समुद्रस्याभ्यन्तरे, कृशानुश्च—वाड़वाग्निश्च, निर्म्मित इति शेषः, अभूत् किम् ? किमिति वितर्के ; भवत्तेजसः असारांशेन वज्रादिकं जातम्, अतः सर्व्वतेजोऽभिभावि ते तेजः इति भावः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ २ ॥

(ग) परिषत्—सभा ।

भोजस्य आश्रयगुणवत्तां प्रदर्शयति, क्षमीति ।—क्षमी—क्षमाशीलः, दाता—दानशीलः, गुणग्राही—गुणज्ञः, अनुकूलः,—स्वपक्षपाती, अविरोधीत्यर्थः, शुचिः,—शुद्धः, दक्षः,—कुशलः, विद्वान्—पण्डितः, कविः,—कवित्वशक्तिमान्, अत एव सुदुर्लभः,—अत्यन्तदुष्प्रापः, स्वामी—प्रभुः, पुण्येन—सुकृतेन, लभ्यते—प्राप्यते ; त्वन्तु भोजः सर्व्वगुणाधारः, अतः तवाश्रये निवासार्थमहमागतवानस्मीति भावः ॥ ३ ॥

इति। ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत्, यं (घ) निरस्य विदुषे गृहं दीयते। तत्र सर्वत्र भ्रमन् कस्यचित् (ङ) कुविन्दस्य गृहं वीक्ष्य कुविन्दं प्राह,—"कुविन्द! गृहान्निःसर, तव गृहं विद्वानेष्यति" इति। ततः कुविन्दो राजभवनमासाद्य राजानं प्रणम्य प्राह,—"देव! भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारयति; त्वन्तु पश्य, मूर्खोऽहं पण्डितो वेति,—

काव्यं करोमि न हि चारुतरं करोमि
यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ!
हे साहसाङ्क! कवयामि वयामि यामि" ॥ ४ ॥

(घ) निरस्य—निक्षिप्य, गृहात् बहिष्कृत्येत्यर्थः। [निर्+अस+ल्यप्]। विदुषे—पण्डिताय।

(ङ) कुविन्दस्य—तन्तुवायस्य। [कुं—भुवं, कुत्सितं वा, विन्दति "गवादिषु विन्देः संज्ञायाम्" (वा०) इति कु+विद+शः। "तन्तुवायः कुविन्दः स्यात्" इत्यमरः]।

तन्तुवायः स्वपाण्डित्यख्यापनायाह, काव्यमिति।—काव्यं—गद्यपद्यरूपं ग्रन्थभेदं, करोमि—रचयामि, किन्तु न हि—नैव, चारुतरम्—अतिसुन्दरं, करोमि—कर्त्तुं शक्नोमीत्यर्थः, यदि अयत्नात् करोमीति शेषः, यदि—चेत, यत्नात्—यत्नमाश्रित्य, करोमि, तदा चारुतरं करोमि, भूपालमौलिमणिमण्डितपादपीठ!—हे भूपालानां—राज्ञाम्, अधीनस्थनृपाणामिति यावत, मौलिमणिभिः,—मुकुटस्थरत्नैः, मण्डितं—शोभितं, रञ्जितमिति यावत, पादपीठं—चरणाधारमासनं यस्य तत्सम्बोधने, हे निखिलनृपकुलवन्दितचरण!; एतेनास्य चक्रवर्त्तित्वं व्यज्यते; हे साहसाङ्क!—साहसमेव अङ्कं—चिह्नं यस्य तादृश!, हे साहसाङ्क इति नाम्ना प्रसिद्धभोजराज!, भोः त्रिभुवनविदितपराक्रम इत्यर्थः, कवयामि—कवितां करोमि, वयामि—वस्त्रवयनं करोमि, अहं कुविन्दत्वादिति शेषः, यामि—गच्छामि च, कुत्र वासार्थमिति शेषः। वसन्ततिलकं वृत्तम् ॥ ४ ॥

ततो राजा (च) त्वङ्कारवादेन वदन्तं कुविन्दं प्राह,—"ललिता ते पदपङ्क्तिः, कवितामाधुर्य्यञ्च शोभनं, परन्तु कवित्वं विचार्य्य वक्तव्यम्" इति। ततः कुपितः कुविन्दः प्राह,—"देव! भवतोत्तरं भाति, किन्तु न वदामि, (छ) राजधर्म्मः पृथक् विद्वद्धर्मात्" इति। राजा प्राह,—"अस्ति चेदुत्तरं ब्रूहि" इति। कुविन्दः प्राह,—"देव! कालिदासादृते-ऽन्यं कविं न मन्ये, कोऽस्ति ते सभायां कालिदासादृते कवितातत्त्वविद्विद्वान्?—

> यत् सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
> तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम्।
> कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं
> कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः? ॥५॥

(च) त्वङ्कारवादेन—"त्वन्तु पश्य" इत्यतीतेन "त्वम्" इत्याकारकवाक्येनेत्यर्थः। कवित्वं—कविजनोचितप्रतिभाम्। विचार्य्य—अस्ति न वा इति विमृश्य।

(छ) राजधर्म्मः पृथक् विद्वद्धर्मात्—ऐश्वर्य्यमत्तो राजा यथेच्छाचारी, विद्वांस्तु विमृश्यकारी, अस्य प्रत्युत्तरे कृते कुपितस्त्वं मां हनिष्यसि, अतो न वदामीति भावः।

कवितारसिकस्य दौर्लभ्यमाह, यदिति।—गुरुकृपापीयूषपाकोद्भवं—गुरोः,—उपदेष्टुः, कृपापीयूषस्य—दयाऽमृतस्य, पाकेन—परिणत्या, उद्भवः,—उत्पत्तिः यस्य तत्, गुरोः कृपयैव सम्भूतमित्यर्थः, यत् सारस्वतवैभवं—सरस्वत्या इदं सारस्वतं—वाग्देवीसम्बन्धि, वैभवं—सम्पत्, मधुरवाग्विन्याससामर्थ्यमित्यर्थः, तत् कविनैव लभ्यं—प्राप्यं, नैव—न पुनः, पाठप्रतिष्ठाजुषां—पाठे—अध्ययने, प्रतिष्ठा—ख्यातिः, तज्जुषां—तत्सेविनां, विद्याऽभ्यासविख्यातपण्डितानामित्यर्थः, हठतः,—हठकारेण, बलात्कारादित्यर्थः, गुरुकृपाव्यतिरेकेणापि सहस्रैर्वापि यावत्, लभ्यमिति शेषः, तथा हि कासारे—सरोवरे, ("कासारः सरसी सरः" इत्यमरः) दिवसं—सर्वं दिनं व्याप्य, वसन्नपि—तिष्ठन्नपि, परं—केवलं, पयःपूरं—जलौघं, पङ्किलं—कलुषं, कर्द्दमाक्तम् इत्यर्थः, कुर्वाणः,—सम्पादयन्, सैरिभः,—महिषः, ("लुलापो महिषो वाहद्विषत्-कासरसैरिभाः।" इत्यमरः)। कमलाकरस्य—पद्मनिकरस्य, ("वाकरो निकरे

अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः
स्फुरद्बन्धो बन्ध्यः परहृदि कृतार्थः कविहृदि।
कटाक्षो वामाक्ष्या दरदलितनेत्रान्तगलितः
कुमारे निःसारः स तु किमपि यूनः सुखयति" ॥ ६ ॥

इति।

ततो विद्वज्जनवन्दिता (ज) सीता प्राह,—

"विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे।
निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी" ॥ ७ ॥

स्तनौ" इति हैमः) सौरभं—सुगन्धं, लभते किं?—प्राप्नोति किम्? अनुभवितुं शक्नोति किमित्यर्थः; नैवेति भावः; कवित्वन्तु केवलशास्त्राध्ययनेन न जायते, पूर्वजन्मकृतपुण्यसापेक्षं हि तत्, त्वं खलु पाठप्रतिष्ठाशुट्, न कविः, अतो मे कवित्वमस्ति न वा इति विचारणायां नैव समर्थः इत्याशयः। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

कविरेव कविहृदयज्ञः, नाकविरित्याशयेनाह, अयमिति।—विशदपदवैदग्ध्यमधुरः,—विशदपदानां—निर्मलपदानां, प्रसादगुणवतां सुप्तिङन्तानां पदानामित्यर्थः, वैदग्ध्येन—सौन्दर्य्येण, मधुरः,—श्रुतिसुखद इत्यर्थः, स्फुरद्बन्धः,—स्फुरन् —दीप्यमानः, बन्धः,—योजना यस्य सः, पदसङ्घटनाचातुर्य्यवानित्यर्थः, अयम्— एषः, मे—मम, वाग्गुम्फः,—वाक्यसमुदयः, परहृदि—परेषां—कवीतराणां, मूर्खाणामित्यर्थः, हृदि—मनसि, बन्ध्यः,—निष्फलः, किन्तु कविहृदि—कवीनां मनसि, कृतार्थः,—सफलः, जायते इति शेषः; कवीनामेव मम काव्यस्य रसास्वादसामर्थ्यादिति भावः; तथा हि दरदलितनेत्रान्तगलितः,—दरदलितयोः,—ईषद्विघटितयोः; सविलासनिमीलितयोरिति भावः; नेत्रयोः अन्ताभ्यां—चक्षुःप्रान्ताभ्यां, गलितः,—निर्गतः, निक्षिप्त इत्यर्थः, वामाक्ष्याः,—नार्य्याः, कटाक्षः,—अपाङ्गवीक्षणं, कुमारे—बालके; युवतीकटाक्षमर्म्मानभिज्ञे इति भावः; निःसारः,—नगण्यः, व्यर्थः इत्यर्थः, तु—किन्तु, सः,—कटाक्षः, यूनः,—तरुणान्, किमपि—अनिर्वचनीयं यथा तथा, सुखयति—प्रीणयति; त्वन्तु अकविः, अतो न मे कवितामाधुर्य्यास्वादे समर्थ इति भावः। शिखरिणी वृत्तम् ॥ ६ ॥

(ज) सीता—तदानीं सभास्था एव काचित् सुविदुषी महिला।

कुविन्दस्य मूर्खतां प्रतिपादयितुमाह, विपुलेति।—जडः,—मूर्खः, विपुल-

ततः कुविन्दः प्राह,—

"बाल्ये सुतानां सुरतेऽङ्गनानां
स्तुतौ कवीनां समरे भटानाम्।
त्वङ्कारयुक्ता हि गिरः प्रशस्ताः
कस्ते प्रभो! मोहतरः स्मर त्वम्" ॥ ८ ॥

ततो राजा "साधु भोः! कुविन्द!" इत्युक्त्वा तस्याक्षरलक्षं ददौ; "मा भैषीः" इति पुनः कुविन्दं प्राह।

[ इति भोज-सन्धोधर-कुविन्दसंवादः ]।

---

सहृदयाभियोग्ये—विपुलहृदयानां—प्रशस्तमनसां, प्राज्ञानामित्यर्थः, अभियोग्ये—आलोचनीये इत्यर्थः, काव्ये—कवित्वविषये, खिद्यति—खेदं गच्छति; तस्य मर्म्मग्रहणासामर्थ्यात् काव्यमिदं दोषदुष्टमिति निन्दतीति भावः; स्वे—निजे, मौर्ख्ये—मूर्खतायां, न—नैव, खिद्यति इत्यन्वयः; मूर्खतामात्मनो न निन्दतीत्यर्थः, तथा हि शुष्कस्तनी—शुष्कौ स्तनौ यस्याः सा तादृशी, नारी—स्त्री, प्रायः,—बाहुल्येन, कञ्चुकमेव—निजस्तनावरणवस्त्रमेव, निन्दति—शिथिलतया तिरस्करोति; न तु स्वस्याः स्तनयोः शुष्कतादोषं पश्यतीति भावः; त्वमेव मूर्खशिरोमणिः अहङ्कारमत्तः पण्डितम्मन्यः आत्मनः अज्ञतामविचार्य्य विद्वद्रोग्यान् निन्दसीति वक्तृतात्पर्य्यम्। आर्य्या वृत्तम् ॥ ७ ॥

सीतायाः श्लेषवाक्येन कुपितः कुविन्दः स्ववचनस्य अनवद्यतां प्रतिपादयितुमाह, बाल्ये इति।—बाल्ये—शैशवकाले, सुतानां—पुत्राणां, सुरते—सम्भोगकाले, अङ्गनानां—नारीणां, ("कलहेऽङ्गनानां" "वचने प्रियाणाम्" इति पाठान्तरद्वयम्) स्तुतौ—स्तवकाले, कवीनां—कवयितॄणां पण्डितानां, समरे—युद्धकाले, भटानां—योद्धॄणां, ("भटा योधाश्च योद्धारः" इत्यमरः) त्वङ्कारयुक्ताः,—त्वमिति मध्यमपुरुषोचितशब्दयुक्ताः, गिरः हि—वाक्यानि एव, प्रशस्ताः,—अभिमताः, हे प्रभो!—राजन्!, ते—तव, कः,—कीदृशः, मोहतरः,—अत्यन्तमोहः, स्तुतिकाले कवीनां त्वङ्कारवादस्य शास्त्राभिमतत्वात् तदनवबोधरूपम् अज्ञानमिति यावत्, त्वं—भवान्, स्मर—चिन्तय, यत् उक्तरूपाणां जनानां सम्बन्धे त्वमित्याकारकपदप्रयोग एव विरद्भिः प्रशस्ततरो मन्यते इति भावय इत्यर्थः। त्वमेव कविसमयानभिज्ञः, अतो न मे कवित्वं विचारयितुमर्हसि इति भावः। इन्द्रवज्रा वृत्तम् ॥ ८ ॥

# दारिद्र्ये भोज-बाणसंवादः ।

एवं क्रमेणातिक्रान्ते कियत्यपि काले बाणः पण्डितवरः परं राज्ञा ( क ) मान्यमानोऽपि प्राक्तनकर्मतो दारिद्र्यमनुभवति । एवं स्थिते नृपतिः कदाचिद्रात्रावेकाकी प्रच्छन्नवेशः स्वपुरे चरन् बाणगृहमेत्यातिष्ठत् । तदा निशीथे बाणो दारिद्र्यात् व्याकुलतया कान्तां वक्ति,—"देवि ! राजा कियद्वारं मम मनोरथमपूरयत् ; अद्यापि पुनः प्रार्थितो दद्यात्येव, परन्तु ( ख ) निरन्तरप्रार्थनारसे मूर्खस्यापि जिह्वा जडीभवति ।" इत्युक्त्वा मुहूर्त्तार्द्धं मौनेन स्थितः । ततः पुनः पठति,—

"हर ! हर ! पुरहर ! परुषं क्व हलाहलफल्गुयाचनावचसोः ।
एकैव तव रसज्ञा तदुभयरसतारतम्यज्ञा ॥ १ ॥

---

( क ) मान्यमानः,—आद्रियमाणः, [ मान + कर्म्मणि शानच् ] । प्राक्तन-कर्म्मतः,—पूर्व्वजन्मार्ज्जितकर्म्मफलात् । [ पैतौ पूमौ० ] ।

( ख ) निरन्तरप्रार्थनारसे—निरन्तरा—अविच्छिन्ना, या प्रार्थना—याच्ञा, सैव रसः,—कट्वादिरूपः तस्मिन्, प्रत्यहं भिक्षारूपस्य अतीव तिक्तरसस्य आस्वादग्रहणे कृते इत्यर्थः । मूर्खस्यापि—भिक्षाया दोषानभिज्ञस्यापि, किं पुनः पण्डितस्य इत्यपिशब्दार्थः । जडीभवति,—अजडा जडा भवति, स्तब्धीभवति ।

विषभक्षणादपि भिक्षाया दुःखकरत्वमाह, हरेति ।—हर ! हर !—हे शिव ! हे शिव ! [ आवेगे द्विरुक्तिः ] हे पुरहर !—त्रिपुरान्तक ! हलाहलं—विषं, फल्गु—तुच्छं, यत् याचनावचः,—याच्ञावाक्यं तयोः, एतयोर्द्वयोर्मध्ये इत्यर्थः, क्व—कुत्र, हलाहले याच्ञायां वेत्यर्थः, परुषं—कठोरता, तत् त्वयैव वक्तुं शक्यते इति शेषः, यतः एका—केवला, तव रसज्ञैव—जिह्वा एव, तदुभयस्य—तद्द्वयस्य, हलाहलस्य याचना-वचसश्चेत्यर्थः, यः रसः,—स्वादः, तस्य तारतम्यज्ञा—तारतम्यं—प्रभेदं, जानाति या सा तादृशी ; नीलकण्ठेन कपालपाणिना च भवतैव एतयोः द्वयोरेव आस्वादग्रहणात् तारतम्यं वक्तुं शक्यते, नान्येन इति भावः । आर्य्या वृत्तम् ॥ १ ॥

देवि !—

दारिद्र्यस्यापरा मूर्त्तिर्याच्ञा न द्रविणाल्पता ।
अपि कौपीनवान् शम्भुस्तथाऽपि परमेश्वरः ॥ २ ॥

सेवा सुखानां व्यसनं धनानां
याच्ञा गुरूणां कुनृपः प्रजानाम् ।
प्रनष्टशीलस्तु सुतः कुलानां
मूलावघातः कठिनः कुठारः ॥ ३ ॥

तत् सत्यपि दारिद्र्ये राज्ञो वक्तुं मया स्वयमशक्यम् ;—

यच्छन् क्षणमपि जलदो वल्लभतामेति सर्वलोकस्य ।
नित्यप्रसारितकरः करोति सूर्य्योऽपि सन्तापम् ॥ ४ ॥

---

भिक्षाया लाघवकरत्वमाह शाभ्यां, दारिद्र्येति ।—हे देवि !—राज्ञि ! इत्या-मन्त्रणपदं पूर्वाङ्कादत्राकर्षणीयम् ; याच्ञा—प्रार्थना, दारिद्र्यस्य—निर्धनतायाः, अपरा—अन्या, मूर्त्तिः,—आकृतिः, द्रविणाल्पता—धनाल्पता, न, मूर्त्तिरिति शेषः ; निर्धनोऽपि यावत् अयाचकस्तिष्ठति, तावत् कोऽपि तस्य दारिद्र्यं विज्ञातुं न शक्नोति, न वा तमवज्ञातुं प्रभवति इति भावः । एतदेव दृष्टान्तप्रदर्शनेन समर्थयते, अपीति ।—तथा हि, अपि—यद्यपीत्यर्थः, शम्भुः,—महादेवः, कौपीनवान्—निर्धनत्वात् कौपीनमात्रसम्पदेव, तथाऽपि—तदवस्थोऽपि, परमेश्वरः,—परमैश्वर्य्यवान्, लोकैः कथ्यते इति शेषः, याच्ञाऽकरणादिति भावः ॥ २ ॥

सेवेति ।—सेवा—अनुवृत्तिः, परिचर्य्या इत्यर्थः, सुखानां—शर्म्मणां, प्रीतीना-मित्यर्थः, व्यसनं—द्यूताद्यासक्तिः, धनानां—सम्पदां, याच्ञा—प्रार्थना, भिक्षेति यावत्, गुरूणाम्—अलघूनां, गुरुत्ववस्तूनामित्यर्थः ; गौरवाणामिति भावः ; यद्वा,—गुरूणां—महतां, ( "गुरुस्त्रिलिङ्गां महति दुर्जरालघुनोरपि" इति मेदिनी ) कुनृपः,—कुराजा, प्रजानां—प्रकृतिवर्गाणां, लोकानामित्यर्थः, प्रनष्टशीलः,—दुश्चरित्रः, सुतस्तु—पुत्रः पुनः, कुलानां—वंशानां, मूलावघातः,—मूलच्छेदकः, कठिनः,—कठोरः, कुठारः,—परशुतुल्य इत्यर्थः ; सेवादीनां सुखादिप्रतिबन्धकत्वादिति भावः । इन्द्रवज्रा वृत्तम् ॥ ३ ॥

दृष्टान्तमुखेन दातृयाचकयोः उत्कर्षापकर्षौ प्रदर्शयति, यच्छन्निति ।—जलदः,—मेघः, क्षणम्—अल्पकालं, न तु सर्व्वदेत्यर्थः, यच्छन्नपि—जलं ददद्पि, सर्व्व-

किञ्च देवि! (ग) वैश्वदेवावसरे प्राप्ताः क्षुधार्त्ताः पश्चाद्-याम्तीति तदेव मे हृदयं दुनोति,—

दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा।
याचकाऽऽशाविघातान्तर्दाहः केनोपशाम्यते?" ॥ ५ ॥

राजा चैतत् सर्वं श्रुत्वा "नेदानीं किमपि दातुं योग्यं, ।तरेव बाणं पूर्णमनोरथं करिष्यामि,—

कृतो येन च वाग्मी च व्यसनीतो न यैः पदम्।
यैरात्मसदृशो नार्थी किं तैः काव्यैर्बलैर्धनैः?" ॥ ६ ॥

इत्युक्त्वा निष्क्रान्तः।

[ इति दारिद्र्ये भोज-बाणसंवादः ]।

लोकस्य—सकलजनस्य, वल्लभतां—प्रियत्वम्, एति—प्राप्नोति, प्रियो भवतीत्यर्थः, किन्तु नित्यप्रसारितकरः,—नित्यं—सर्व्वदा, प्रसारिताः,—विस्तारिताः; एकत्र—अर्थ-ग्रहणार्थम्, अन्यत्र—भूमितो रसग्रहणार्थमिति भावः; कराः,—हस्ताः, किरणाश्च येन सः, सूर्य्योऽपि—रविरपि, जगच्चक्षुरपीति भावः; का कथाऽन्यस्येत्यपिशब्दार्थः, सन्तापम्—एकत्र—क्लेशम्, अन्यत्र—सम्यगुत्तापं, करोति—जनयति; सर्व्वदैव याचनाकरणे महाजना अपि विरक्तिजनका भवन्तीति भावः। आर्य्या वृत्तम् ॥ ४ ॥

(ग) वैश्वदेवावसरे—विश्वेभ्यो देवेभ्यो देयो बलिः वैश्वदेवः,—स्वाध्याय-पाठाग्निहोत्रयागातिथिपूजनपितृतर्पणबलिकर्म्मात्मकपञ्चमहायज्ञान्तर्गतपञ्चसूनादोषाप-नोदकः वैश्वदेवोद्देशेन दीयमानः गृहस्थानां नित्यकर्त्तव्यकर्म्मविशेषः, तस्य अवसरे—समये, दिवसस्य पञ्चमे भागे वैश्वदेवोद्देशेन बलिप्रदानकाले इत्यर्थः।

अतिथिसेवनासामर्थ्यात् विलपति, दारिद्र्येति।—दारिद्र्यानलसन्तापः,—दारिद्र्य-रूपस्य अनलस्य—वह्नेः, सन्तापः,—उष्मा, सन्तोषवारिणा—स्वावस्थायामेव सन्तो-षानुभवरूपेण जलेन, शान्तः,—प्रशमं गमितः; किन्तु याचकानाम्—अर्थिनाम्, आशाविघातेन—आशापूरणासामर्थ्येन, यः अन्तर्दाहः,—मनस्तापः, स केन—कीदृ-शेनोपायेन, उपशाम्यते?—शान्तिं नीयते? मयेति शेषः, न केनापीत्यर्थः; अतिथि-प्रत्याख्यानस्य महापापजनकत्वात् सुजनानामतीव सन्तापकत्वमिति भावः ॥ ५ ॥

याचकाशापूर्त्तिकरणेन धनस्य नैरर्थक्यमाह, कृत इति।—यैः,—काव्यैरित्यर्थः, सेवितैरिति शेषः, [ कर्त्तुं ] जनः वाग्मी—वाक्पटुः, न कृतः, यत् काव्यं पठित्वा जनः

# भोज-चौरद्वयसंवादः ।

एवं पुरे परिभ्रमति राजनि (क) वर्त्मनि चौरद्वयं गच्छति ; तयोरेकः शकुन्तः प्राह,—"सखे ! स्फारान्धकारविततेऽपि जगति अञ्जनवशात् सर्वं परमाणुप्रायमपि वस्तु सर्वत्र पश्यामि, परन्तु सम्भारगृहानीतकनकजातमपि न मे सुखाय" इति । द्वितीयो मरालनामा चौर आह,—"आहृतं सम्भारगृहात् कनकजातमपि न हितमिति कस्माद्धेतोरुच्यते ?" इति । ततः शकुन्तः प्राह,—"सर्वतो नगररक्षकाः परिभ्रमन्ति, सर्वोऽपि जागरिष्यति ( ख ) एषां भेरीपटहादीनां निनादेन ; तस्मात् आहृतं विभज्य स्वस्वभागागतं धनमादाय शीघ्रमेव गन्तव्यम्" इति । मरालः प्राह,—"सखे ! त्वमनेन कोटिद्वयपरिमितमणि-

---

वाक्पटुर्न भवतीत्यर्थः, यैश्च—बलैरित्यर्थः, व्यसनी—विपन्नो जनः, ("व्यसनं विपदि भ्रंशे" इत्यमरः) पदं—त्राणं, ("पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः) न इतः,—न प्राप्तः, यद्बलात् विपन्नः न त्रातो भवतीत्यर्थः, "व्यसनीतम्" इति पाठे—व्यसनि—व्यसनयुक्तं, पदं—स्थानं, न इतं—न गतं, विपदो न निर्मुक्त-मित्यर्थः, यैश्च—धनैरित्यर्थः, अर्थी—याचकः, आत्मसदृशः,—दातृसमावस्थः, अयाचक इत्यर्थः, न, कृतः इति शेषः, तैः,—तादृशैः, काव्यैः, बलैः, धनैश्च किम् ? —किं फलम् ? न किमपीत्यर्थः ॥ ६ ॥

---

( क ) वर्त्मनि—पथि । स्फारेति ।—स्फारेण—विपुलेन, अन्धकारेण वितते—पूर्णे, गाढान्धकाराच्छन्ने इत्यर्थः । अञ्जनवशात्—द्रव्यविशेषकृतकज्जलप्रभावात् । वस्तु—धनम् । सम्भारेति ।—सम्भारगृहात्—सम्भारः,—सामग्री, तदर्थं गृहं तस्मात् कोषागारादित्यर्थः, आनीतं—चौर्य्येण सङ्गृहीतं, कनकजातं—सुवर्णराशिम् ।

( ख ) एषां—नगररक्षकाणाम् । आहृतं—सङ्गृहीतम् । स्वस्वभागागतं—निजनिजांशप्राप्तम् ।

कनकजातेन किं करिष्यसि ?" इति। शकुन्तः,—"एतद्धनं कस्मैचिद् (ग) द्विजन्मने दास्यामि, यथाऽयं वेदवेदाङ्गपारगः अन्यं न प्रार्थयति"। मरालः,—"सखे! श्टणु,—

ददतो युध्यमानस्य पठतः पुलकोऽथ चेत्।
आत्मनश्च परेषाञ्च तद्दानं पौरुषं स्मृतम्॥ १॥

अनेन दानेन तव कथं पुण्यफलं भविष्यति ?" इति।

शकुन्तः,—"अस्माकं पितृपैतामहोऽयं धर्म्मः, यच्चौर्य्येण वित्तमानीयते"।

मरालः,—(घ) "शिरश्छेदमङ्गीकृत्यार्जितं द्रव्यं निखिलमपि कथं दीयते ?"

शकुन्तः,—

"मूर्खो न हि ददात्यर्थं नरो दारिद्र्यशङ्कया।
प्राज्ञस्तु वितरत्यर्थं नरो दारिद्र्यशङ्कया"॥ २॥

(ग) द्विजन्मने—ब्राह्मणाय। अन्यम्—अपरं दातारम्।

प्रशंसनीयदानस्य लक्षणमाह, ददत इति।—ददतः,—कस्मैचिदर्पयतः, दानकाले इत्यर्थः, युध्यमानस्य—संग्रामयतः, युद्धकाले इत्यर्थः, अथ—अथवा, पठतः,—शास्त्रमधीयानस्य जनस्य, पाठसमये इत्यर्थः, आत्मनश्च—स्वस्य च, परेषाञ्च—अन्येषाञ्च, यद्दीतृद्रष्टृश्रोतृणामित्यर्थः, जनानामिति शेषः, चेत्—यदि, पुलकः,—रोमाञ्चः, जायते इति शेषः, तर्हि तद्दानं—तादृशं दानं, पौरुषं—पुरुषकारसाध्यम्; सात्त्विकमिति भावः; स्मृतं—कथितम्; तदेव दानं लोकैः सात्त्विकदानत्वेन उच्यते इत्यर्थः॥ १॥

(घ) शिरश्छेदं—चौर्य्यव्यापारप्रकाशने राजद्वारि प्राणदण्डम्। अङ्गीकृत्य—स्वीकृत्य।

दानकारणमाह, मूर्ख इति।—मूर्खो नरः,—अज्ञो जनः, दारिद्र्यशङ्कया—यदि सर्व्वमेवार्थिभ्यो ददामि तर्हि मे दारिद्र्यमवश्यम्भावीत्येवंरूपेण भयेन, अर्थं—धनं, न हि ददाति—कस्मैचित् नैवार्पयति, तु—किन्तु, प्राज्ञः,—पण्डितः, नरः,—जनः, दारिद्र्यशङ्कया—परजन्मनि दारिद्र्यभयेनेत्यर्थः; "तन्नष्टं यन्न दीयते" इति

मरालः,—

"किञ्चित् वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे" ॥ ३ ॥

शकुन्तः,—"अनेन वित्तेन किं करिष्यति भवान् ?"

मरालः,—"सखे ! काशीवासी कोऽपि विप्रवटुरत्राऽऽगात् । तेनास्मत्पितुः पुरः काशीवासफलं व्यावर्णितम् । ततोऽस्मत्तातः बाल्यादारभ्य चौर्य्यं कुर्वाणो (ङ) दैववशात् स्वपापात् निवृत्तो वैराग्यात् सकुटुम्बः काशीमेष्यति ; तदर्थमिदं द्रविणजातम्" ।

शकुन्तः,—"महद्भाग्यं तव पितुः । तथा हि,—

वाराणसीपुरीवासवासनावासितात्मना ।
किं शुना समतां याति वराकः पाकशासनः ? ॥ ४ ॥

स्मरणादिति भावः ; अर्थं—धनं, वितरति—द्विजादिभ्यः ददाति, जन्मान्तरीणदारिद्र्यशङ्कया प्राणभयं तुच्छीकृत्यापि अर्जितं सर्वमेवार्थं दीयते इत्यर्थः ॥ २ ॥

दानपात्रस्य लक्षणमाह, किञ्चिदिति ।—किञ्चित्—कतिचित्, पात्रं—दानपात्रं, वेदमयं—वेदात्मकं, वेदज्ञ इत्यर्थः, भवति इति शेषः, किञ्चिच्च पात्रं, तपोमयं—तपःपूर्णं, तपोनिष्ठ इत्यर्थः, भवति इति शेषः, परन्तु यस्य उदरे शूद्रान्नं—शूद्रप्रदत्तान्नं, न—नास्ति, पात्राणां मध्ये तत् पात्रं—दानपात्रम्, उत्तमम्—उत्कृष्टं, भवतीति शेषः ॥ ३ ॥

(ङ) दैववशात्—सौभाग्यबलात् । सकुटुम्बः,—सपरिजनः । एष्यति—गमिष्यति । [इ+लृट्-स्यति] तदर्थं—पितुः काशीगमनव्ययनिमित्तम् ।

वाराणसीवासस्य प्रभावमाह, वाराणसीति ।—*वराकः,—दीनः, काशीवासाभावात् कृपार्हः इत्यर्थः, पाकशासनः,—पाको नाम कश्चिदसुरः, तस्य शासनः,—निहन्ता, इन्द्रः, ("इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः" इत्यमरः) वाराणसीपुरीवासवासनावासितात्मना—वाराणसीपुर्य्यां—काशीनगर्य्यां, वासे—अवस्थाने, या वासना—इच्छा, तया वासितः,—भावितः, संस्कृत इत्यर्थः, यद्वा—वाराणसीपुरीवासेन—सर्व्वदा काशीवासेन हेतुना, जनितया इति शेषः, वासनया—चित्तशुद्धिरूपसंस्कारविशेषेण, वासितः,—संस्कृतः, तत्त्वावबोधात् उत्कर्षतां नीत इत्यर्थः, आत्मा यस्य तेन तादृशेन, शुना—कुक्कुरेणापि, समतां—तुल्यतां, याति किं ?—प्राप्नोति

ऊषरं कर्म्मशस्यानां क्षेत्रं वाराणसी पुरी।
यत्र संलभ्यते मोक्षः समं चण्डालपण्डितैः॥ ५॥
मरणं मङ्गलं यत्र विभूतिश्च विभूषणम्।
कौपीनं यत्र कौशेयं सा काशी केन मीयते?" ॥ ६॥

एवमुभयोः संवादं श्रुत्वा राजा तुतोष, अचिन्तयच्च मनसि,—"कर्म्मणां गतिः सर्वथैव विचित्रा, उभयोरपि पवित्रा मतिः" इति।

[इति भोज-चौरद्वयसंवादः]।

किम्? नैवेत्यर्थः; वाराणसीवासी कुक्कुरोऽपि स्वर्गाधिपात् महेन्द्रात् श्रेष्ठ इति भावः॥ ४॥

वाराणसीमाहात्म्यमाह, ऊषरमिति।—वाराणसी पुरी—काशी नगरी, कर्म्मशस्यानां—सुकृतदुष्कृतादिकर्म्मरूपव्रीह्यादिबीजानाम्, ऊषरं—क्षारमृत्तिकावत्, अङ्कुरोत्पत्तिविघातकशक्तिविशिष्टमित्यर्थः, क्षेत्रं—भूमिः; ऊषरक्षेत्रे रोपितानि शस्यानि यथा समूलं नश्यन्ति, न स्वल्पान्यप्यङ्कुरितानि भवन्ति, तथा काश्यामपि मृतानां नराणां सर्व्वाण्येव कर्म्माणि तत्क्षणात् क्षीयन्ते, तेन च न पुनः संसारसम्भव इति भावः; यत्र—काश्यां, चण्डालपण्डितैः,—चण्डालैः पण्डितैश्च, समं—तुल्यं यथा स्यात् तथा, न तु चण्डालोऽयं वेदविदयमिति तारतम्येनेत्यर्थः, मोक्षः,—अपवर्गः, संलभ्यते—प्राप्यते; "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः"॥ इति स्मरणात्। तत्र सर्वे एव समाना इत्याशयः॥ ५॥

काश्या अनुपमेयत्वमाह, मरणमिति।—यत्र—काश्यां, मरणं—मृत्युरपि, मङ्गलं—श्रेयः, मोक्षहेतुत्वात् कल्याणजनकमित्यर्थः, विभूतिश्च—तुच्छभस्मापि, विभूषणम्—अलङ्कारः; महेश्वरप्रसादकत्वेन साधुभिः धार्य्यमाणत्वादिति भावः; कौपीनं—चीरं, छिन्नवस्त्रखण्डमित्यर्थः, यत्र कौशेयं—कृमिकोशजातं वस्त्रं, पट्टवस्त्रवत् आदरणीयमित्यर्थः, अत्रापि पूर्वोक्त एव हेतुर्द्रष्टव्यः; सा—तादृशी, काशी—वाराणसी नगरी, केन सह मीयते?—समीक्रियते? न केनापीत्यर्थः॥ ६॥

# भोज-पितापुत्रसंवादः।

ततो राजा विनिहृत्य भवनान्तरे पितापुत्रावपश्यत्। तत्र पिता पुत्रं प्राह,—"इदानीं परिज्ञातशास्त्रतत्त्वोऽपि नृपतिः कार्पण्येन किमपि न प्रयच्छति; किन्तु,—

अर्थिनि कवयति कवयति पठति च पठति स्तवोन्मुखे स्तौति
पश्चाद्यामीत्युक्ते मौनी दृष्टिं निमीलयति" ॥ १ ॥

राजाऽप्येतच्छ्रुत्वा तत्समीपं प्राप्य "मैवं वद" इति स्व-गात्रात् सर्वाभरणान्युत्तार्य्य दत्त्वा तस्मै, ततो गृहमासाद्य कालान्तरे सभामुपविष्टः कालिदासं प्राह,—"सखे!—

कवीनां मानसं नौमि तरन्ति प्रतिभाऽम्भसि"।

ततः कविराह,—

"यत्र हंसवयांसीव भुवनानि चतुर्दश" ॥ २ ॥

ततो राजा प्रत्यक्षरमुक्ताफललक्षं ददौ।

[ इति भोज-पितापुत्रसंवादः ]।

भोजस्य कार्पण्यं प्रदर्शयति, अर्थिनीति।—अर्थिनि—याचके, कवयति—कविरिव आचरति, श्लोकं रचयति सति इत्यर्थः, कवयति—स्वयमपि कविरिवाचरति, श्लोकं रचयति इत्यर्थः, पठति च—अर्थिनि भोजचरिते वाचयति च सति, पठति—स्वयमपि किमपि वाचयति, स्तवोन्मुखे—अर्थिनि स्तवं कर्त्तुमुद्युक्ते सति, स्तौति—स्वयमपि अर्थिगुणान् कीर्त्तयति, पश्चात्—अनन्तरं, यामि—अधुना गच्छामि, इति उक्ते—अर्थिना कथिते सति, मौनी—तूष्णीम्भावापन्नः सन्, दृष्टिं—चक्षुः, निमीलयति—मुद्रयति; कवीनां समीपे सदा स्वस्य विदग्धतां प्रकटय्य तैः तुल्यतां याति, अर्थप्रदान-काले तु कवेरन्तिमवचनं नाकर्णितवान्, परन्तु काव्यरसपानं व्यासक्त इव इत्येवं भावं प्रकटय्य निमीलितनयनो भवतीति भावः। आर्य्या वृत्तम् ॥ १ ॥

कविषु स्वानुरागं प्रकटयति राजा, कवीनामिति।—कवीनां मानसं—मनः, मानसाख्यं सरोवरञ्च, नौमि—स्तौमि, प्रतिभाऽम्भसि—प्रतिभा—प्रत्युत्पन्नमतित्वं,

# भोज-क्रीड़ाचन्द्रसंवादः।

ततः प्रविशति द्वारपालः,—"देव! कोऽपि (क) कौपीनावशेषो विद्वान् द्वारि तिष्ठति" इति। राजा,—"प्रवेशय" इत्यवोचत्। ततः (ख) प्रवेशितः कविरागत्य "स्वस्ति" इत्युक्त्वाऽनुक्त एवोपविष्टः प्राह,—

"इह निवसति मेरुः शेखरो भूधराणा-
मिह हि निहितभाराः सागराः सप्त चैव।
इदमतुलमनन्तं भूतलं भूरिभूतो-
द्भवधरणसमर्थं स्थानमस्मद्विधानाम्" ॥ १ ॥

---

तद्देव अम्भः,—जलं यत्र तस्मिन्, आह्लादकत्वादिसाधर्म्यादिति भावः; यत्र—कविमानसे, मानससरसि च, चतुर्द्दश भुवनानि—भूर्भुवःस्वरादयो लोकाः, हंस-वयांसीव—हंसाः,—मरालाः, वयांसि—पक्षिणश्च यथा, तद्वत् इत्यर्थः; मानससरो-वरे हंसादितरणं कविसमयप्रसिद्धमेव; तरन्ति—प्लवन्ते; कल्पनाशक्त्या चतुर्द्दश-भुवनस्थवृत्तान्तजातस्य काव्याकारेण ग्रथनादिति भावः; तादृशं कविमानसमेव नौमीति राजवाक्यस्य अर्द्धोक्तस्य पूरणार्थं कवेरुक्तिः ॥ २ ॥

(क) कौपीनावशेषः,—कौपीनं—चीरखण्डम्, अवशेषो यस्य तादृशः, कौपीन-मात्रसम्बलः।

(ख) प्रवेशितः, द्वारपालेनेति शेषः। अनुक्तः,—अकथितः, अनादिष्टः इत्यर्थः।

स्वस्य भूम्यासनग्रहणकारणमाह, इहेति।—इह—अस्मिन् भूतले, भूधराणां—पर्व्वतानां, शेखरः,—शिरोभूषणभूतः, श्रेष्ठ इति यावत्, सर्व्वरत्नाकरत्वात् इति भावः; मेरुः,—सुमेरुपर्व्वतः, निवसति—अधितिष्ठति, एतद्भूतलमेव अधिष्ठाय सुद्रागुरुर्भूधरश्रेष्ठः सुमेरुः वर्त्तते, न तेन तस्य काऽपि लज्जा भवति इति भावः; इह हि—अस्मिन्नेव भूतले, निहितभाराः,—निहितः,—स्थापितः, भारो यैस्ते

राजा,—"महाकवे ! किन्ते नाम ? (ग) अभिधत्स्व ।

कविः,—(घ) "नामग्रहणं नोचितं पण्डितानाम् ; तथाऽपि वदामः यदि जानासि,—

न हि स्तनन्धयी-बुद्धिर्गम्भीरं गाहते वचः ।
तलं तोयनिधेर्द्रष्टुं यष्टिरस्ति न वैणवी ॥ २ ॥

तादृशाः, सप्त सागराश्च—लवणादयः सप्त समुद्रा अपि, निवसन्तीति शेषः, भूरिभूतोद्भवधरणसमर्थं—भूरीणां—बहूनां, भूतानां—प्राणिनाम्, उद्भवं—उत्पादनं, धरणं—धारणे च, समर्थं—शक्तम्, इदम्—एतत्, अनन्तम्—असीमम्, अतुलम्—अनुपमं, भूतलम् एव अस्मद्विधानाम्—अस्मादृशानां दरिद्राणां, स्थानम्—आश्रयः ; यत्र भूधरश्रेष्ठः उत्तुङ्गशिखरः सुमेरुः वर्त्तते, यत्र च अतलस्पर्शाः अक्षोभ्याः सप्त सागराः स्वभारं निधाय सुखमवतिष्ठन्ते, धनिनामैश्वर्यमण्डिते आसने दरिद्राणामस्माकं स्थानाभावेऽपि पूर्वोक्तप्रकारमनन्तमतुलं भूतलं दीनानस्मान् किञ्चित् स्थानं दातुं न कार्पण्यं करिष्यति इति वक्तुराशयः ; सत्स्वपि राजगृहे सर्व्वरत्नेषु अस्माकं दुःखं यतो नापगच्छति, अत एव मादृशानां भूमिशय्याश्रितं नास्त्युपायान्तरमिति खेदोक्तिः । मालिनी वृत्तम् ॥ १ ॥

(ग) अभिधत्स्व—ब्रूहि, [ अभि + धा + लोट्-स्व ] ।

(घ) नामेति ।—"आत्मनाम गुरोर्नाम नामापि कृपणस्य च । आयुष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः" ॥ इति स्मरणात् निजनामोच्चारणस्य अकर्त्तव्यतया शास्त्रज्ञेन मया शास्त्रादेशस्यावश्यपालनीयत्वादिति भावः । वदामः, इङ्गितेन इति शेषः । जानासि—बोद्धुं शक्नोषि ।

स्वकीयवचसो दुर्ज्ञेयत्वमाह, न हीति ।—स्तनन्धयी—स्तनं धयति—पिबति या सा स्तनन्धयी—बाला, तस्याः तत्सम्बन्धिनी वा, [ "नासिकास्तनयोर्ध्माधेटोः" (३।२।२९ पा०) इति स्तन + धे + खश्, मुम् च । टित्त्वाद्ङीप् ] बुद्धिः,—मतिः, गम्भीरं—गभीरार्थं, वचः,—वाक्यं, न हि—नैव, गाहते—प्रविशति, तदर्थं नावबोद्धुं शक्नोति इत्यर्थः, तथा हि तोयनिधेः,—समुद्रस्य, तलम्—अधःप्रदेशं, द्रष्टुं—परिमातुमित्यर्थः, वैणवी यष्टिः,—वंशदण्डः, नास्ति—न प्रभवति, वेणुदण्डस्य समुद्रतलपरिमाणे नास्ति सामर्थ्यमित्यर्थः ; स्पष्टतया नामग्रहणस्य निषिद्धत्वात् प्रहेलिकया कथयामि, मम प्रहेलिकायाः तात्पर्य्यावधारणं न शिशुबुद्धिगम्यं, प्राज्ञो भवान् समर्थयेत् अवधारय इति भावः ॥ २ ॥

देव! आकर्णय,—

> च्युतामिन्दोर्लेखां रतिकलहभग्नञ्च वलयं
> समं चक्रीकृत्य प्रहसितमुखी शैलतनया।
> अवोचत् यं पश्येत्यवतु गिरिशः सा च गिरिजा
> स च क्रीड़ाचन्द्रो दशनकिरणाऽऽपूरिततनुः" ॥ २ ॥

कालिदासः,—"सखे! क्रीड़ाचन्द्र! चिरात् दृष्टोऽसि। कथमीदृशी ते दशा (ङ) मण्डले मण्डले विराजत्यपि राजनि बहुधनवति?"

---

कवितार्च्छलेन निजपरिचयमाह, च्युतामिति।—शैलतनया—पार्व्वती, प्रहसितमुखी—हास्यवदना सती, च्युतां—हरमस्तकात् पतिताम्, अत्रापि वक्ष्यमाणः रतिकलह इति हेतुरूह्यः, इन्दोः,—चन्द्रस्य, लेखां—कलाम्, अर्द्धचन्द्रमित्यर्थः, रतिकलहभग्नं—प्रणयकलहेन द्विधा खण्डितं, वलयञ्च—स्वकङ्कणञ्च, समं—सह, अन्योन्यमित्यर्थः, चक्रीकृत्य—उभयोः संयोगेन चक्राकारं कृत्वेत्यर्थः, पश्य—अवलोकय, क्रीड़ाचन्द्रमिममिति शेषः, इति यं—गिरिशम्, अवोचत्—अकथयत्, स गिरिशः,—शिवः, सा च गिरिजा—शैलतनया पार्व्वती, स च दशनकिरणापूरिततनुः,—दशनकिरणेन—हास्यकाले ईषत् वहिर्गतानां दन्तानां कान्त्या, आपूरिता—व्याप्ता; रञ्जिता इति भावः; तनुः,—देहः; चन्द्रात्मिकायाः स्वतः शुभ्रत्वात् वलयात्मिका इति भावः, यस्य सः तादृशः, क्रीड़ाचन्द्रः,—क्रीड़ायाः,—रतिक्रीड़ायाः सम्बन्धी, नर्म्मसूचको वा, चन्द्रः,—वलयार्द्ध-चन्द्रार्द्धयोर्मेलनेन चन्द्राकारीभूतः, अवतु—रक्षतु, त्वामिति शेषः; अत्रायमर्थोऽवगन्तव्यः,—गिरिजागिरिशाख्यौ मम पितरौ सञ्जातमात्रं यं मामुद्दिश्य "पश्यास्माक क्रीड़ाचन्द्रो जातः" इति बन्धून् अवोचतां, सोऽयं क्रीड़ाचन्द्रनामा जनः त्वामवतु—अर्थयतां, याचतामित्यर्थः, [ अवधातुर्याचनाऽर्थकोऽप्यस्ति, तथाच दीक्षितः,—"अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु" इति। वोपदेवोऽप्याह,—"अव रक्षणे गतौ कान्तौ प्रीतौ तृप्तौ युतौ श्रुतौ। प्राप्तौ श्लेषेऽर्थने वेशे भागे वृद्धौ ग्रहे वधे ॥ स्वाम्यर्थेऽवगमे कामे कृतौ—" इति ]। शिखरिणी वृत्तम् ॥ २ ॥

(ङ) मण्डले मण्डले—देशे देशे। ("स्यान्मण्डलं द्वादशराजके च देशे च

क्रीड़ाचन्द्रः,—

"धनिनोऽप्यदानविभवा गण्यन्ते धुरि महादरिद्राणाम्।

हन्ति न यतः पिपासामतः समुद्रोऽपि मरुरेव ॥ ४ ॥

किञ्च,—उपभोगकातराणां पुरुषाणामर्थसञ्चयपराणाम्।

कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ ५ ॥

विम्बे च कदम्बके च। कुष्ठप्रभेदेऽप्युपसूर्य्यकेऽपि भुजङ्गभेदे ग्रामणि मण्डलः स्यात्" इति विश्वः)। विराजत्यपि—तिष्ठत्यपि। बहुधनवति—बहुश्चासौ, धनवांश्चेति तस्मिन्, बहौ धनवति चेत्यर्थः। ["न कर्मधारयात् मत्वर्थीयः—" इति निषेधात् अत्र कर्मधारयानन्तरं न मतुप्]।

कालिदासवाक्यस्य प्रत्युत्तरं धनिनां दानप्रवृत्तेरभावं प्रदर्शयन्नाह, धनिन इति।—अदानविभवाः,—अदानः,—दानवर्जितः, विभवः,—सम्पद् येषां ते तादृशाः, धनिनोऽपि—धनवन्तोऽपि, महादरिद्राणाम्—अतिनिःस्वानां, धुरि—अग्रे, गण्यन्ते—संख्यायन्ते, जनैरिति शेषः, ये धनिनः दरिद्रान् न बिभ्रति, ते खलु सर्वथैव दरिद्रा इति लोकानामभिमतमित्यर्थः। अत्र दृष्टान्तमाह, हन्तीति।—यतः,—यस्मात् कारणात्, पिपासां न हन्ति—न वारयति, अतः,—अस्मात् कारणात्, समुद्रोऽपि—जलधिरपि, मरुरेव—मरुभूमितुल्यः निर्जल एव इत्यर्थः; यस्य समुद्रस्य जलं लवणाक्ततया अपेयं, सोऽम्बुधिरपि यथा मरुवत् न कस्यापि तृषोपशमनाय सम्पद्यते, तथा कृपणनृपतिरपि इत्याशयः। आर्य्या वृत्तम् ॥ ४ ॥

कृपणाना धनं परोपभोगार्थमेव इति सदृष्टान्तमाह, उपभोगेति।—अर्थसञ्चय-पराणाम्—अर्थस्य—धनस्य, सञ्चये—संग्रहे, पराः,—आसक्ताः तेषां, केवलसञ्चय-शीलानामित्यर्थः, अत एव उपभोगकातराणाम्—उपभोगे—यथेच्छव्यवहारे, कातराणां—दुःखितानां, व्यग्रकुण्ठानामित्यर्थः, पुरुषाणां—नराणाम्, अर्थः,—धनं, कन्यामणिरिव—कन्यारत्नमिव, कन्यारूपः अर्थ इव इत्यर्थः, परस्यार्थे—परोप-भोगार्थमेव, सदने—गृहे, तिष्ठति—वर्त्तते; आबाल्यात् सयत्नं प्रतिपालिता कन्या यथा यौवने वोढुरुपभोगार्थमेव भवति, न तया प्रतिपालयितुः कोऽप्युपकारो जायते, तथा कृपणस्य धनमपि स्वचेतुरुपभोगाय न भूत्वा तस्करादीनामुपभोगाय एव भवतीति भावः। उक्तञ्च कालिदासेन—"अर्थो हि कन्या परकीय एव"। आर्य्या वृत्तम् ॥ ५ ॥

सुवर्णमणिकेयूराडम्बरैरन्यभूभृतः।
कलयैव पदं भोज! तेषामाप्नोति सारवित्॥ ६॥

सुधामयानीव सुधां गलन्ति
विदग्धसंयोजनमन्तरेण।
काव्यानि निर्व्याजमनोहराणि
वाराङ्गनानामिव यौवनानि॥ ७॥

नृपान्तरात् भोजस्य वैशिष्ट्यं गुणानुरागित्वञ्चाह, सुवर्णेति।—हे भोज! अन्यभूभृतः,—अन्ये राजानः, सुवर्णमणिकेयूराडम्बरैः,—सुवर्णमयैः मणिमयैश्च केयूरादिभूषणरूपैः आडम्बरैः,—समारम्भैः, ऐश्वर्य्यप्रदर्शनार्थं नित्यं विचित्रालङ्काराणां व्यवहारपारिपाट्यैरित्यर्थः, ("आडम्बरः समारम्भे गजगर्जिततूर्य्ययोः" इति विश्वः) पदमाप्नुवन्तीति शेषः, किन्तु सारवित्—सारज्ञः, नृपतिरिति शेषः, कलयैव—कलाविद्याऽऽलोचनयैव, तेषां—भूभृतां, पदं—प्रतिष्ठाम्, आडम्बराभावेऽपि तत्तुल्यां तदधिकां वा ख्यातिमित्यर्थः, आप्नोति—लभते; भवान् खलु कलासेवी, अतः सारविदिति वक्तुराशयः॥ ६॥

पण्डितयाश्रत्वं विना सत्काव्यमपि विफलमित्याह, सुधेति।—सुधामयानीव—अमृतपूर्णानीव, अतिमधुराणीत्यर्थः, काव्यानि, विदग्धसंयोजनं—विदग्धेन—पण्डितेन, पक्षे—रसिकेन, सह संयोजनं—सम्बन्धम, अन्तरेण—विना, सुधाम्—अमृतं, गलन्ति—क्षरन्ति, अपीति शेषः, तथा वाराङ्गनानां—वेश्यानां, यौवनानीव—तारुण्यानीव, निर्व्याजमनोहराणि—निर्व्याजम्—अकपटं यथा स्यात् तथा, भूषणादिभिराहार्य्यशोभां विनैवेत्यर्थः, मनोहराणि—मनोज्ञानि, अपि वृथा भवन्तीति शेषः; यद्वा—सुधामयानीव, तथा वाराङ्गनानां यौवनानीव च, निर्व्याजमनोहराणि—अलङ्काराद्याहार्य्यशोभारहितानि, रसभावसमुज्ज्वलतया मनोज्ञानीत्यर्थः, भूषणादिजनितकृत्रिमशोभाभावेऽपि निसर्गरमणीयानि च, काव्यानि, विदग्धसंयोजनमन्तरेण, अपीति शेषः, सुधां—पीयूषं, गलन्ति—स्रवन्ति, क्षरन्ति इत्यर्थः, यद्वा—सुधां—लेपं, चूर्णमित्यर्थः, ("सुधा लेपोऽमृतं स्नुही" इत्यमरः) अन्तरेण—विना, अन्तराऽन्तरा चूर्णसंयोजनं विना इत्यर्थः, सुधामयानीव—सुधालिप्तद्रव्याणीव, सौधादीनीवेत्यर्थः, सौधानि सुधालेपं विना यथा गलन्ति, तथैवेति भावः; विदग्धसंयोजनमन्तरेण वाराङ्गनानां यौवनानीव—रसिकसंसर्गं विना वेश्यानां यौवनानि यथा विफलानि भवन्ति, तथैवेत्यर्थः, निर्व्याजमनोहराणि, अपीति शेषः,

ज्ञायते जातु नामापि न राज्ञः कवितां विना ।
कवेस्तद्व्यतिरेकेण न कीर्त्तिः स्फुरति क्षितौ" ॥ ८ ॥

मयूरः,—

"ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये च काव्ये प्रकीर्त्तिताः" ॥ ९ ॥

वररुचिः,—

"पदव्यक्तव्यक्तीकृतसहृदयानन्दललिते
कवीनां मार्गेऽस्मिन् स्फुरति बुधमात्रस्य धिषणा ।

काव्यानि विदग्धसंयोजनमन्तरेण—पण्डितसंयोगं विना, पण्डितमण्डलीकर्तृकसमालोचनं विना इत्यर्थः, गलन्ति—विफलीभवन्ति । उपेन्द्रवज्रा वृत्तम् ॥ ७ ॥

कविभूपालयोरन्योन्यापेक्षित्वमाह, ज्ञायते इति ।—कवितां विना—कवित्वमन्तरेण, अत्र कविताशब्देन कवेर्ग्रहणं बोध्यं, कविं विना कविकर्म्म-कविताप्रसङ्गविरोधात्, तेन कविं विनेत्यर्थो बोध्यः ; राज्ञः,—नृपस्य, नामापि—नामधेयमपि, किं पुनर्यशः इत्यपिशब्दार्थः ; जातु—कदाचिदपि, न ज्ञायते—न अवगम्यते, लोकैरिति शेषः, कवेः,—कर्वयितुरपि, कीर्त्तिः,—यशः, तद्व्यतिरेकेण—राजाभावेन, नृपाश्रयं विनेत्यर्थः, क्षितौ—पृथिव्यां, न स्फुरति—न प्रकाशते, उभावपि परस्परापेक्षौ भवतः इत्यर्थः, "कविना च विभुर्विभुना च कविः कविना विभुना विभाति सभा । शशिना च निशा निशया च शशी शशिना निशया विभाति नभः" ॥ इत्याद्युक्तेः राज्ञा कविरवश्यमेव प्रतिपाल्यः, कविनापि गुणवान् राजा अवश्यमेवाश्रयणीय इति भावः ॥ ८ ॥

कवीनां सम्मानमाह, ते इति ।—यैः, कविभिरिति शेषः, काव्यानि—गद्यपद्यात्मकानि, निबद्धानि—रचितानि, ये च, कवय इति शेषः, काव्ये—रचितगद्यपद्यमयग्रन्थविषये, प्रकीर्त्तिताः,—उच्चैः कथिताः, सुकविरयम् इदं महाकाव्यं रचितवानित्येवं लोकैः शब्दिता इत्यर्थः, ते—कवयः, वन्द्याः,—स्तुत्याः, ते महात्मानः,—ते एव महाशयाश्च, भवन्ति इति शेषः, तेषां यशः,—कीर्त्तिश्च, लोके—जगति, स्थिरं—स्थितिशीलं, भवति इति शेषः, ईदृशः कविरेव राजभिः पालनीय इति भावः ॥ ९ ॥

काव्यकर्त्तुसहोतुश्च दौर्लभ्यमाह, पदेति ।—पदव्यक्तव्यक्तीकृतसहृदयानन्दललिते—पदैः,—सुप्तिङन्तैः, व्यक्तं—स्पष्टं यथा तथा, व्यक्तीकृतेन—प्रकाशितेन, सहृदयानां

न च क्रीड़ालेशव्यसनपिशुनोऽयं कुलवधू-
कटाक्षाणां पन्थाः स खलु गणिकानामविषयः" ॥१०॥

ततो राजा क्रीड़ाचन्द्राय विंशतिगजेन्द्रान् ग्रामपञ्चकञ्च ददौ। ततो राजानं कविः स्तौति,—

"कङ्कणं नयनद्वन्द्वे तिलकं करपल्लवे।
अहो ! भूषणवैचित्र्यं भोजप्रत्यर्थियोषिताम्" ॥ ११ ॥

तुष्टो राजा पुनरक्षरलक्षं ददौ।

[ इति भोज-क्रीड़ाचन्द्रसंवादः ]।

—काव्यार्थभावनापरिपक्वबुद्धीनां भावुकानाम्, आबन्धेन—प्रबन्धेन, रचनाविशेषेणेत्यर्थः, ललिते—मनोहरे, अस्मिन्—एतस्मिन्, कवीनां मार्गे—पथि, कवितारचनादिकर्म्मणि इत्यर्थः, बुधमात्रस्य—केवलपण्डितस्यैव, धिषणा—बुद्धिः, स्फुरति—विलसति ; बुधाः एव कवित्वे स्फूर्त्तिं लभन्ते, नाबुधा इति भावः ; तथा हि, कुलवधूकटाक्षाणां—कुलवधूनां—कुलस्त्रीणां, ये कटाक्षाः,—अपाङ्गवीक्षणानि तेषां, पन्थाः,—मार्गः, विषय इति यावत्, न च—नैव, क्रीड़ालेशव्यसनपिशुनः,—क्रीड़ालेश—सामान्यमात्रायामपि क्रीड़ायां, यत् व्यसनम्—आसक्तिः, यद्वा—क्रीड़ालेशः,—पुरुषान्तरचित्तहरणार्थं नेत्रयोरीषदपि प्रेरणाविशेषः, स एव व्यसनं—कामजदोषः, ("व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः) तस्य पिशुनः,—सूचकः, कुलवधूकटाक्षविलसितं लालसाविवर्ज्जितं पवित्रञ्च, न हि तत् कामनादूषितमिति भावः ; सोऽयम्—एषः, पन्थाः,—पवित्रः मार्गः, गणिकानां—वेश्यानाम्, अविषयः,—अगोचरः, अनुभवातीत इत्यर्थः, खलु—निश्चये, कविरेव कवेः काव्यस्य च मर्म्मवित् नाकविः, त्वं खलु कविकाव्ययोः मर्म्मज्ञः, अत एव बुधश्रेष्ठ इति भावः। शिखरिणी वृत्तम् ॥ १० ॥

स्तवव्याजेन राज्ञः शौर्य्यं विवृणोति, कङ्कणमिति।—भोजप्रत्यर्थियोषितां—भोजस्य शत्रुनारीणाम्, अहो—आश्चर्य्यं, भूषणवैचित्र्यं—भूषणानाम्—अलङ्काराणां, वैचित्र्यं—विन्यासवैपरीत्येन विस्मयजनकत्वम्। तदेव वैचित्र्यं दर्शयति, कङ्कणमिति।—तासां नयनद्वन्द्वे—लोचनयुगले, कज्जलास्पदे इत्यर्थः, कङ्कणं—वलयं, करभूषणमित्यर्थः, करपल्लवे—हस्तकिसलये च, तिलकं—ललाटधार्य्यमित्यर्थः, दृश्यते इति शेषः ; भर्तृशोकेन ललाटे कराघातात् कङ्कणद्वयस्य नेत्रगतत्वं ललाटधार्य्यस्य तिलकस्य च करलग्नत्वमिति भावः ॥ ११ ॥

# भोज-रामेश्वरपण्डितसंवादः ।

ततः कदाचित् कोऽपि जराजीर्णसर्वाङ्गसन्धिः पण्डितो रामेश्वरनामा सभामभ्यगात् । स चाह,—

"पञ्चाननस्य सुकवेर्गजमांसैर्नृपश्रिया ।
पारणा जायते क्वापि सर्वत्रैवोपवासिनः ॥ १ ॥
वाहानां पण्डितानाञ्च परेषामपरो जनः ।
कवीन्द्राणां गजेन्द्राणां ग्राहको नृपतिः परः ॥ २ ॥

एवं हि,—सुवर्णैः पट्टचेलैश्च शोभा स्यात् वारयोषिताम् ।
पराक्रमेण दानेन राजन्ते राजनन्दनाः" ॥ ३ ॥

नृपाणां पण्डिताश्रयत्वमाह द्वाभ्यां, पञ्चाननस्येति ।—सर्वत्रैव—सर्वस्मिन् एव प्रदेशे, उपवासिनः,—अप्राप्ताहारस्य, समीपे वसतश्च, पञ्चाननस्य—सिंहस्य, ("सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः" इत्यमरः ) गजमांसैः,—हस्तिपिशितैः, सिंहस्य अभ्यस्तभोज्यैरित्यर्थः, तथा सुकवेश्च नृपश्रिया—राजसम्पदा, क्वापि—कदाचिदपीत्यर्थः, क्वचित् क्वापि दिवसे इति भावः, पारणा—व्रतान्तभोजनं, जायते—भवति ; यथा सिंहस्य गजमांसं विना नाहारः, तथा सुकवेरपि राजाश्रयं विना नाहारो जायते, परं स तु दुर्लभः ; मन्ये, यदद्य त्वामुपागतवानस्मि, ततो भोजनमपि लभेय इति भावः ॥ १ ॥

वाहानामिति ।—अपरः,—नृपात् अन्यः यः कश्चित्, जनः,—लोकः, परेषाम्—अन्येषां, सामान्यानामित्यर्थः, वाहानाम्—अश्वादिवाहनानां, पण्डितानाञ्च—विदुषाञ्च, कवित्वशक्तिरहितानामिति भावः, ग्राहकः,—आश्रयदाता इत्यर्थः, किन्तु कवीन्द्राणां—कवित्वशक्तिविशिष्टानां, गजेन्द्राणां—महागजानाञ्च, परः,—श्रेष्ठः, ग्राहकः, नृपतिः,—राजैव, नान्यः इति भावः ; भवति इति शेषः ; कवित्वविवर्ज्जिता विद्वांसो यस्य कस्यचिदपि धनिनः आश्रये स्थातुं शक्नुवन्ति, कवीन्द्रास्तु नृपयाश्रया एवेति भावः ॥ २ ॥

राज्ञां कीर्त्तिस्थापनोपायमाह, सुवर्णैरिति ।—सुवर्णैः,—स्वर्णाभरणैः, तथा

इत्याकर्ण्य राजा रामेश्वरपण्डिताय सर्वाभरणान्युत्तार्य्य लक्षद्वयं (क) प्रायच्छत्। ततः स्तौति कविः,—

"भोज! त्वत्कीर्त्तिकान्ताया नभोभालस्थितं महत्।
कस्तूरीतिलकं राजन्! गुणाकर! विराजते॥ ४॥
बुधाग्रे न गुणान् ब्रूयात् साधु वेत्ति यतः स्वयम्।
मूर्खाग्रेऽपि च न ब्रूयात् बुधप्रोक्तं न वेत्ति सः"॥ ५॥

पट्टचेलैश्च—पट्टवस्त्रैश्च, वारयोषितां—वेश्यानां, शोभा स्यात्, किन्तु राजनन्दनाः,—राजपुत्राः, पराक्रमेण—पौरुषेण, दानेन च राजन्ते—शोभन्ते; बहुमूल्यवसन-भूषणादिभिः वेश्या विख्याता भवितुमर्हन्ति, राजानः पुनः शौर्य्यौदार्य्यादिभिरेव ख्यातिं लभन्ते इति भावः; राजनन्दनः स्वयं राजा भवान् दरिद्रेभ्यो भूरि दत्त्वा ख्यातिं लभतां, न केवलमैश्वर्य्यप्रदर्शनार्थं वसनभूषणादिधारणं तेऽनुरूपमित्याशयः॥३॥

(क) प्रायच्छत्—प्राददत्। [प्र+दाण्+लङ्-द]।

यशस्ते सर्व्वव्यापि इत्याह, भोजेति।—गुणाकर!—हे गुणाधार!, हे राजन्! भोज!, त्वत्कीर्त्तिकान्तायाः,—तव कीर्त्तिरूपायाः नायिकायाः, नभोभालस्थितम्—आकाशरूपे ललाटे स्थितं, महत्—वृहत्, कस्तूरीतिलकं—मृगमदरचितं तिलकं, वर्त्तुलत्वसाम्यात् चन्द्र इत्यर्थः; गगने यः चन्द्रो दृश्यते, नासौ चन्द्रः, परन्तु स्वर्गेऽप्यपि प्रतिविम्बटं ते यश इति भावः; विराजते—शोभते; कस्तूरीतिलकं यथा सौरभवितरणेन सर्वान् उत्फुल्लयति, तथा ते यशःसौरभमिति भावः॥ ४॥

गुणाकरस्य कीर्त्तिमतश्च ते गुणानां बाहुल्येन वर्णनं निष्प्रयोजनमेवेत्याह, बुधाग्रे इति।—बुधाग्रे—पण्डितसमक्षे, गुणान्—बुधस्य निजगुणान्, न ब्रूयात्—न कथयेत्, यतः,—यस्मात् कारणात्, स्वयम्—आत्मना, साधु—सम्यक्, वेत्ति—जानाति, स्वगुणमिति शेषः, मूर्खाग्रेऽपि च—मूर्खसमक्षेऽपि च, न ब्रूयात्, बुधगुणमिति भावः; यतः सः,—मूर्खः, बुधप्रोक्तं—पण्डितभाषितं, न वेत्ति—न बुध्यते; भवान् खलु बुधः बुधाग्रगण्यश्च, बुधस्य यथार्थगुणवर्णनेऽपि तदपेक्षया उत्कर्षाधिक्य-सम्भावनाभावादिति भावः; यद्वा—बुधाग्रे गुणान्—कस्यचिदन्यस्य गुणवतः पाण्डि-त्यादिगुणसङ्घान्, न ब्रूयात्, यतः स्वयं साधु वेत्ति—स्वयं बुधत्वात् गुणिनां गुणान् सम्यगेव जानाति, अतो गुणवर्णना निष्फलैव इति भावः; मूर्खाग्रेऽपि च न ब्रूयात्, गुणिनां गुणान् इति शेषः, यतः स बुधप्रोक्तं न वेत्ति, स्वयं मूर्खत्वात् गुणिस्वरूप-

तेन चमत्कृताः सर्वे ।

रामेश्वरकविः,—

"ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् ।
पुष्णाति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति" ॥ ६ ॥

ततस्तुष्टो राजा प्रत्यक्षरं लक्षं ददौ । राजेन्द्रं कविः प्राह,—

"कवित्वं न शृणोत्येव कृपणः कीर्त्तिवर्जितः ।
नपुंसकः किं कुरुते पुरःस्थितमृगीदृशा ?" ॥ ७ ॥

ज्ञानाभावादिति भावः ; उक्तञ्च,—"गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति दुर्बलः । पिको वसन्तस्य गुणं न वायसः करी च सिंहस्य बलं न मूषिकः" ॥ इति ॥ ५ ॥

सुजना एव कविगौरवख्यापका इति वक्तुमाह, ख्यातिमिति ।—सुकविः,—सत्कविः, काव्यं—गद्यपद्यमयग्रन्थविशेषं, केवलम्—एकमात्रं, विदधाति—रचयति, कविः काव्यं रचयितुमेव शक्नोति, न तु तत् प्रख्यापयितुं प्रभवति इत्यर्थः, किन्तु सुजनः,—सहृदयः काव्यानुरागी जनः, ख्यातिं—प्रसिद्धिं, गमयति—प्रापयति, तत् काव्यमिति शेषः, काव्यमिदं मनोरमं रसभावादिसमुज्ज्वलमित्यादिवाक्यं प्रचारयन् विख्यातं कुरुते इत्यर्थः, तथाहि, अम्भः,—जलं, कमलं—पद्मं, पुष्णाति—प्रतिपालयति, स्नेहरसादिना जीवितं स्थापयितुं शक्नोतीत्यर्थः, तु—किन्तु, रविः,—सूर्य्यः, लक्ष्म्या—सौन्दर्य्येण, विकाशसम्पादनद्वारा इत्यर्थः, नियोजयति—संयोजयति, रात्रौ अम्भसि सदपि कमलं मुद्रणेन श्रीहीनं जायते, दिवागमे च पुनः यथा श्रीमत् भवति, एवं सदपि काव्यं सुजनाश्रयं विना तस्य सौन्दर्य्यम् अप्रकाशितमेव वर्त्तते इति सरलार्थः ; भवदाश्रिताः एते विद्वांसः यत् ईदृशीं प्रतिष्ठां गताः, तत्र भवानेव मुख्यकारणमिति मन्ये इति भावः । आर्य्या वृत्तम् ॥ ६ ॥

कृपणानां काव्यवैमुख्यख्यापनमुखेन भोजं स्तौति, कवित्वमिति ।—कृपणः,—व्ययकुण्ठः, अत एव कीर्त्तिवर्जितः,—यशसा परित्यक्तः, जन इति शेषः, कवित्वं—काव्यं, न शृणोत्येव—नाकर्णयत्येव, कदाचित् माधुर्य्योपलम्भात् किमपि दातुं प्रवृत्तिर्भवति चेदिति शङ्कयेति भावः ; तथाहि, नपुंसकः,—क्लीवः, सुरतासक्त इत्यर्थः, पुरःस्थितमृगीदृशा—सम्मुखवर्त्तिन्या हरिणलोचनया सुन्दर्य्या, किं कुरुते ?—किं कर्त्तुं शक्नोति ? उपभोगसामर्थ्याभावात् किमपि कर्त्तुं न प्रभवतीत्यर्थः ; भवान् तु पण्डितायणीः कवितारसज्ञः दाता कीर्त्तिमांश्चेति वक्तुराशयः ॥ ७ ॥

सीता प्राह,—

"हता दैवेन कवयो वराकास्ते गजा अपि।
शोभा न जायते तेषां मण्डलेन्द्रगृहं विना" ॥ ८ ॥

कालिदासः,—

"अदातृमानसं क्वापि न स्पृशन्ति कवेर्गिरः।
दुःखायैवातिवृद्धस्य विलासास्तरुणीकृताः" ॥ ९ ॥

राजा प्रतिपण्डितं लक्षं दत्तवान्।

[ इति भोज-रामेश्वरपण्डितसंवादः ]।

अप्राप्तराजाश्रयाणां कवीनां दौर्भाग्यमाह, हतेति।—ते—प्रसिद्धाः, वराकाः,—दीनाः, कृपार्हा इत्यर्थः, कवयः तथा, गजा अपि—हस्तिनश्च, दैवेन—विधिना, दुर्भाग्येनेत्यर्थः, हताः,—विनष्टाः, विडम्बिता इत्यर्थः; कथं हताः? इत्याह, शोभेति।—यतः मण्डलेन्द्रगृहं—मण्डलेन्द्रस्य—मण्डलेश्वरस्य, चतुःशतयोजनमित-देशविशेषाधीश्वरस्य सम्राड्विशेषस्येत्यर्थः, ("येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरोक्त्या) गृहम्—आश्रयमिति यावत्, विना—अन्तरेण, तेषां—कवीनां गजानाञ्च, शोभा—सौन्दर्य्यं, सौन्दर्य्यस्फूर्त्तिरिति यावत्, न जायते—न भवति, सत्यपि मण्डलेन्द्रे सत्स्वपि कविषु गजेषु च सर्वेषामेव तेषां साकल्येन मण्डलेन्द्रग्राह्यत्वाभावात् दैवहतत्वं शोभाहीनत्वञ्च ज्ञातव्यमिति भावः ॥८॥

रामेश्वरकवेः "कवित्वं न शृणोत्येव" इत्यादि पूर्वोक्तवाक्यमेव प्रकारान्तरेणाह, अदातृमानसमिति।—कवेः गिरः,—वाक्यानि, क्वापि—कुत्रापि, अदातृमानसं—कृपणस्य चित्तं, न स्पृशन्ति—न आकर्षयन्तीत्यर्थः, मार्द्दीकर्त्तुं शक्नुवन्तीति यावत्, सर्वदा अर्थसञ्चयव्यासक्तचित्तत्वेन काव्यविषयकावधानसामर्थ्याभावादिति भावः; तथा हि, तरुणीकृताः,—युवतीसम्पादिताः, विलासाः,—विभ्रमाः, हावभावादयः इत्यर्थः, अतिवृद्धस्य—अत्यर्थं प्रवयसः; सम्भोगशक्तिरहितस्येति भावः; दुःखायैव—क्लेशायैव; उद्दीपनासत्त्वेऽपि वासनापूरणासामर्थ्यादिति भावः, भवन्तीति शेषः; कविवाक्य-मर्मज्ञत्वात् दाता कविश्चायं भोज इत्याशयः ॥ ९ ॥

# निर्वासने भोज-कालिदाससंवादः ।

ततः कदाचिद्राजा समस्तादपि कविमण्डलादधिकं कालिदासमवलोक्य आयान्तं परं वेश्यालोलत्वेन चेतसि खिदत्वं चक्रे । तदा सीता विद्वद्वृन्दवन्दिता तदभिप्रायं ज्ञात्वा प्राह,—

"देव !—

दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते ।
प्रीत्यैव शशिनि पतितं पश्यति लोकः कलङ्कमपि" ॥ १ ॥

तुष्टो राजा सीतायै लक्षं ददौ । तथाऽपि कालिदासं (क) यथापूर्वं न मानयति यदा, तदा स च कालिदासो राज्ञोऽभिप्रायं विदित्वा तुलामिषेण प्राह,—

"प्राप्य प्रमाणपदवीं को नामास्ते तुलेऽवलेपस्ते ।
नयसि गरिष्ठमधस्तात्तदितरमुच्चैस्तरां कुरुषे ?" ॥ २ ॥

---

किञ्चिद्दोषयुक्तस्यापि महागुणस्य अप्रीत्यनास्पदत्वमाह, दोषमिति ।—गुणेषु रज्यन्ते इति गुणरागिणः,—गुणपक्षपातिनः, जना इति शेषः, गुणवति—सगुणे, जने—पुरुषे, दोषम्—अपराधं, दृष्ट्वाऽपि—अवलोक्यापि, न खिद्यन्ते—न तप्यन्ते ; तस्मिन् अपरक्ता न भवन्तीत्यर्थः, तथा हि, लोकः,—जनः, शशिनि—चन्द्रे, सर्व्वलोकाह्लादकादिगुणविशिष्टे इति भावः ; पतितं—स्थितमित्यर्थः, कलङ्कमपि—लाञ्छनमपि, किं पुनः शशिनमित्यपि शब्दार्थः ; प्रीत्यैव—अनुरागेणैव, पश्यति—अवलोकयति ; सर्व्वलोकाह्लादकत्वात् तस्य दोषमपि न गणयतीत्यर्थः, सदोषोऽप्ययं कालिदासः गुणाधिकत्वात् न विरागभाजनतामर्हतीति भावः ; उक्तञ्च कालिदासेन,—"एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति । आर्य्या वृत्तम् ॥ १ ॥

(क) यथापूर्वं—पूर्वमनतिक्रम्य, पूर्ववदित्यर्थः । न मानयति—नाद्रियते । [मान+णिच्+लट्-ति] । तुलामिषेण—तुलादण्डव्याजेन, तुलादण्डं लक्ष्यीकृत्येत्यर्थः ।

प्रमाणपदाधिरूढस्य मदान्धस्य प्रमातुः गुरुलघुवस्तुनोः यथायथमर्य्यादानिरूपणे

पुनराह,—"यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति खेदम्?
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं के पुरुषाः पिबन्ति?" ॥ ३ ॥

प्रमादमाह, प्राप्येति।—हे तुले!—हे तोलनदण्ड!; हे प्रमातः राजन्! इति भावः; प्रमाणपदवीं—प्रमाणस्य—प्रमातुः, मर्य्यादानिर्णायकस्येत्यर्थः, ("प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु" इत्यमरः) पदवीं—मार्गं, स्थानमित्यर्थः; अधिकारमिति भावः; प्राप्य—लब्ध्वा, स्थितस्येति शेषः, ते—तव, कः,—कीदृशः, अवलेपः,—गर्वः, आस्ते?—वर्त्तते? नाम इति कुत्सायां ("नाम कोपे—। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते" ॥ इति मेदिनी) सर्व्वथा निन्दनीयस्ते गर्वोऽयमित्यर्थः; अवलेपमेव प्रदर्शयति, नयसीति।—गरिष्ठ—गुरुतमम्, अतिभारमित्यर्थः, सम्मानार्हमिति भावः; [गुरु + इष्ठः, "प्रियस्थिर—" (६।४।१५७ पा०) इति गरादेशः] अधस्तात्—निम्नप्रदेशं, हीनतामिति भावः; नयसि—प्रापयसि, तदितरं—लघिष्ठमित्यर्थः, नीचमिति यावत्, उच्चैस्तराम्—अत्युन्नतम्; सम्मानार्हमिति भावः; कुरुषे—विदधासि; तुलादण्डो यथा स्वस्मिन् आरोपितं भारवत् वस्तु अधःकरोति, लघु च वस्तु उच्चैःकरोति, तद्वत् त्वमपि हे राजन्! सम्मानार्हमवज्ञाय अधःकरोषि, नीचञ्च सम्मान्य उच्चैः स्थापयसि, व्यवहारस्तेऽयमतीव निन्दनीय इति भावः। आर्य्यावृत्तम् ॥ २ ॥

गुणवतां सर्व्वत्रैव गतिरव्याहता इति मनसिकृत्याह, यस्येति।—यस्य, जनस्य इति शेषः, सर्व्वत्र—सर्व्वस्मिन्नेव देशे, गतिः,—गमनोपायः, जीविकोपायो वा; प्रतिभाबलेनेति भावः; अस्ति—विद्यते, सः स्वदेशरागेण—निजदेशानुरागेण, देशोऽयं मे पितृपैतामहिकः, कथमिमं परित्यज्य प्रवासं यास्यामि, एवं देशप्रीत्या इत्यर्थः, कस्मात्—कथं, खेदं—दुःखं, याति—गच्छति? हि—इति प्रश्ने, ("हि पादपूरणे हेतौ विशेषेऽप्यवधारणे। प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि" ॥ इति मेदिनी) स्वदेशे अवस्थाय नैव क्लेशमनुभवति इत्यर्थः; तथा हि, के पुरुषाः,—जनाः, ("के पुरुषाः" इत्यत्र "कापुरुषाः" इति पाठान्तरम्) अयम्—एषः, कूपः,—जलाधारः, तातस्य—पितुः, मत्पितृकृतः इत्यर्थः, इति—कूपोऽयं यतो मे पित्रा खानितः, अतोऽवश्यमेवास्य जलं पातव्यमेवं, ब्रुवाणाः,—कथयन्तः, क्षारं—लवणाक्त-

ततो राज्ञा कृतामवज्ञां मनसि विदित्वा कालिदासो (ख) दुर्मनाः निजवेश्म ययौ,—

अवज्ञास्फुटितं प्रेम समीकर्त्तुं क ईश्वरः?।
सन्धिं न याति स्फुटितं लाक्षालेपेन मौक्तिकम्॥ ४॥

तत्रो राजाऽपि खिन्नः स्थितः। ततो (ग) लीलावती खिन्नं दृष्ट्वा राजानं विषादकारणमपृच्छत्। राजा च रहसि सर्वं तस्य प्राह। सा च राजमुखेन कालिदासावज्ञां ज्ञात्वा पुनः प्राह,—"देव! प्राणनाथ! सर्वज्ञोऽसि,—

स्नेहो हि वरमघटितो न वरं सञ्जातविघटितस्नेहः।
हृतनयनो हि विषादी न विषादी भवति जात्यन्धः॥ ५॥

---

मित्यर्थः, जलं पिबन्ति?, न कोऽपि पिबन्तीत्यर्थः; विद्वान् सर्व्वत्र पूज्यते इति भावः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिर्वृत्तम्॥ ३॥

(ख) दुर्मनाः,—दुःखितान्तःकरणः। निजवेश्म—स्वगृहम्।

कालिदासस्य दुर्मनायमानत्वे हेतुमाह, अवज्ञेति।—अवज्ञास्फुटितम्—अवज्ञया—अनादरेण हेतुना, स्फुटितं—भग्नं, प्रेम—प्रणयं, समीकर्त्तुं—यथापूर्वं संयोजनेन अवस्थापयितुमित्यर्थः, कः,—को जनः, ईश्वरः,—प्रभुः, समर्थ इत्यर्थः, भवतीति शेषः; न कोऽपि समर्थो भवतीत्यर्थः। तत्र दृष्टान्तमाह, सन्धिमिति।—स्फुटितं—विदीर्णं, मौक्तिकं—मुक्ताफलं, लाक्षालेपेन—लाक्षायाः,—जतुनः, निर्य्यासविशेषस्येत्यर्थः, लेपेन—प्रलेपेन, सन्धिं—संयुक्ततां, न याति—न गच्छति॥ ४॥

(ग) लीलावती—तदाख्या भोजमहिषी। खिन्नं—दुःखितं [खिद+क्तः "रदाभ्यां निष्ठातो नः पूर्व्वस्य च दः" इति तकारदकारयोः नः]।

दृढ़प्रेमवतोः प्रणयविच्छेदस्य अतीव दुःखजनकतामाह, स्नेह इति।—अघटितः,—असञ्जातः, स्नेहः,—प्रेम, सख्यमित्यर्थः, अपीति शेषः, वरं—मनाक्प्रियं, हि—निश्चयं, स्नेहस्य अनुत्पत्तिरपि वरमित्यर्थः, किन्तु सञ्जातविघटितस्नेहः,—आदौ सञ्जातः,—उत्पन्नः, पश्चात् विघटितः,—विच्छिन्नः, तादृशः स्नेहः, न वरं—नैव श्रेष्ठं, स्नेहानुत्पत्तिरपि वरं, परन्तु एकवारं स्नेहे सञ्जाते कारणविशेषेण तस्यापायः अतीवक्लेशप्रदायकत्वात् न प्रीतिकर इत्यर्थः, दुरन्तप्रणयात् अप्रणय एव वरमिति मन्ये इति भावः; तथाहि, हृतनयनः,—हृते—विनष्टे इत्यर्थः, नयने—नेत्रे, दृष्टि-

परन्तु कालिदासः कोऽपि (घ) भारत्याः पुरुषावतारः, तत् सर्वभावेन सम्मानयैनं विद्वद्भ्यः। पश्य,—

> दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि
> मित्रावसानसमये विहितोदयोऽपि।
> चन्द्रस्तथाऽपि हरवल्लभतामुपैति
> नैवाश्रितेषु गुणदोषविचारणा स्यात्" ॥ ६ ॥

शक्तिरित्यर्थः, यस्य तादृशः, जन इति शेषः, विषादी—विषण्णः, दुःखित इत्यर्थः, भवति इति शेषः, हि—निश्चये, जात्यन्धः,—जन्मान्धः, जन्मावधि दृष्टिशक्तिविहीन इत्यर्थः, विषादी न भवति, कदाचिदपि दृष्टिशक्तिसम्पन्नस्य सुखानुभवाभावादिति भावः। आर्य्या वृत्तम् ॥ ५ ॥

(घ) भारत्याः,—वाण्याः, सरस्वत्या इत्यर्थः। कोऽपि—अनिर्व्वचनीयः। पुरुषावतारः,—पुरुषमूर्त्तिविशेषः, देवी सरस्वती एव स्त्रीमूर्त्तिं विहाय पुरुषरूपं परिगृह्य च कालिदासरूपेण अवतीर्णवतीत्यर्थः। सर्व्वभावेन—सर्व्वप्रकारेण। विद्वद्भ्यः,—पण्डितेभ्यः, तव सभास्थान् अन्यान् विदुषः अपेक्ष्य इत्यर्थः। [ल्यब्लोपे पञ्चमी]।

कालिदासं प्रति सम्मानप्रदर्शने युक्तिमाह, दोषाकर इति।—दोषाकरोऽपि—दोषां—रात्रिं, करोति—जनयतीति तादृशः, दोषाणां—पापकर्मणाम्, आकरः,—उत्पत्तिस्थानं, तादृशोऽपि, इत्यर्थश्च ध्वन्यते; रात्र्यागमे दुष्टैः स्वस्वदुष्प्रवृत्तिचरितार्थकरणात् तेषां सहायभूतत्वेन इति भावः; ("दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च" इति मेदिनी) कुटिलोऽपि—वक्रोऽपि, तिथिविशेषे इति भावः; कमलसङ्कोचनविरहिसन्तापकत्वादिना खलस्वभावोऽपि इत्यर्थश्च ध्वन्यते; कलङ्कितोऽपि—मृगलाञ्छितोऽपि, गुरुपत्नीगमनादिजन्यापवादितोऽपि इत्यर्थश्च ध्वन्यते; तथा मित्रावसानसमये—मित्रस्य—सूर्य्यस्य, अवसानसमये—अस्तगमनकाले, विहितोदयोऽपि—सञ्जातप्रकाशोऽपि; मित्रस्य—सुहृदः, अवसानसमये—विपत्तिकाले, विहितोदयोऽपि—प्राप्तोन्नतिरपि, मित्रं विपन्नं कृत्वा तत्सम्पदा सम्पन्नोऽपीत्यर्थः, इत्यपि ध्वन्यते; ("मित्रं सुहृदि न द्वयोः। सूर्य्ये पुंसि" इति मेदिनी) तथाऽपि—ईदृशसर्व्वदोषाकरोऽपि, चन्द्रः,—शशधरः, हरवल्लभतां—हरस्य—शिवस्य, वल्लभतां—प्रियत्वं, मूर्द्ध्नि धारणादिति भावः; उपैति—प्राप्नोति; तथा हि, आश्रितेषु—गृहीताश्रयेषु, प्रतिपाल्येषु इत्यर्थः, जनेषु इति शेषः, गुणदोषविचारणा—

राजा,—"प्रिये ! सर्वमेतत् सत्यमेव" इत्यङ्गीकृत्य (ङ) "श्वः कालिदासं प्रातरेव सन्तोषयिष्यामि" इत्यवोचत् ।

(च) अन्येद्युः राजा दन्तधावनादिविधिं विधाय निवर्त्तित-नित्यकृत्यः सभां प्राप, पण्डिताः कवयश्च गायका अन्ये प्रकृतयश्च सर्वे समाजग्मुः, कालिदासमेकमनागतं वीक्ष्य राजा स्वसेवकमेकं तदाकारणाय वेश्यागृहं प्रेषयामास । स च गत्वा कालिदासं नत्वा प्राह,—"कवीन्द्र ! त्वामाकारयति भोज-नरेन्द्रः" इति । ततः कविर्व्यचिन्तयत्,—"गतेऽह्नि नृपेणाव-मानितोऽहम्, अद्य प्रातरेवाकारणे किं कारणम् ? इति,—

यं यं नृपोऽनुरागेण सम्मानयति संसदि ।
तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ ७ ॥

किन्तु विशेषतो राज्ञा (छ) अन्वहं मान्यमाने मयि मायाविनो मत्सराद्धैरं बोधयन्ति,—

गुणवानयं सदोषोऽयमित्येवं विचारः, नैव—न हि, स्यात्—भवेत्, आश्रितस्य गुण-दोषविचारं कर्त्तुं न युज्यते एवेत्यर्थः ; देवादिदेवः शम्भुरपि यदा विविधदोषदुष्टस्य चन्द्रस्य दोषमविगणय्यैव आश्रित इति कृत्वा तं शिरसि धारयति, तदा मनुष्यस्य तद्विचारणा अकरणीयैवेति निर्गलितार्थः । वसन्ततिलकं वृत्तम् ॥ ६ ॥

(ङ) श्वः,—आगामिनि दिवसे । ("अनागतेऽह्नि श्वः" इत्यमरः) ।

(च) अन्येद्युः,—अन्यस्मिन् दिने ।

राजकृतापमानस्य हेतुं बुभुत्सुः कविः राजसम्मानस्य परिणामं विवृणोति, यमिति ।—नृपः,—राजा, संसदि—सभायां, यं यं, जनमिति शेषः, अनुरागेण—प्रीत्या, समादरेणेति यावत्, सम्मानयति—पूजयति, राजवल्लभाः,—राजप्रियाः, राजपारिषदा इत्यर्थः, तस्य तस्य, जनस्येति शेषः, उत्सारणाय—दूरीकरणाय, राजपार्श्वादिति शेषः, यतन्ते—चेष्टन्ते ; गतेऽह्नि यत् नृपेणाहमवमानितः, तत् राजवल्लभा एव कारयामासुरिति मन्ये इति भावः ॥ ७ ॥

(छ) अन्वहं—प्रतिदिनम् । मान्यमाने—सत्क्रियमाणे, [ मान + कर्म्मणि शानच्, ७मी १व० ] । मायाविनः,—कपटवन्त इत्यर्थः । मत्सरात्—अन्यशुभ-

अविवेकमतिर्नृपतिर्मन्त्रिषु गुणवत्सु वक्रितग्रीवः।
यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः?" ॥ ८ ॥

इति विचारयन् सभामागच्छत्। ततो दूरे समायान्तं वीक्ष्य सानन्दमासनादुत्थाय,—"सुकवे! मत्प्रियतम! अद्य कथं विलम्बः क्रियते?" इति भाषमाणः पञ्चषाणि पदानि सम्मुखो गच्छति। ततो निखिलाऽपि सभा स्वासनादुत्थिता, सर्वे सभासदश्च चमत्कृताः, वैरिणश्चास्य विच्छायवदनाः बभूवुः। ततो राजा निजकरकमलेन अस्य करकमलमवलम्ब्य स्वासनदेशं प्राप्य तस्य सिंहासने उपवेश्य स्वयञ्च तदाज्ञया तत्रैवोपविष्टः। ततो राज्ञा सिंहासनारूढे कालिदासे बाणकविर्दक्षिणं बाहुमुद्धृत्य प्राह,—

"भोजः कलाविद्रुद्रो वा कालिदासस्य माननात्।
विबुधेषु कृतो राजा येन दोषाकरोऽप्यसौ" ॥ ९ ॥

द्वेषात्, ईर्ष्यावशादित्यर्थः। बोधयन्ति—ज्ञापयन्ति, अनयन्तीत्यर्थः, कर्णजपतया अनिशं तस्य दोषमालोच्यालोच्य तं प्रति राजानमपरक्तं कारयन्तीति भावः।

अविवेकेति।—३१ पृष्ठे व्याख्यातपूर्वोऽयं श्लोकः ॥ ८ ॥

कालिदासस्य सम्मानदर्शनेन हृष्टो बाणः भोजं स्तौति, भोज इति।—कालिदासस्य—तदाख्यकवेः; अन्यत्र—काल्याः,—नव्यमेघौघस्य, मेघसमूहस्येत्यर्थः, ("काली गौर्य्यां चीरकीटे कालिकामातृभेदयोः। नव्यमेघौघपरिवादयोः" इति विश्वः) दासः,—सेवकः तस्य, चन्द्रस्येत्यर्थः, चन्द्रस्य मेघाधीनप्रकाशत्वात् इति भावः; मेघौघावृतस्य चन्द्रस्य स्वशक्त्या मेघावरणापसारणाक्षमत्वात् मेघाधीनप्रकाशत्वमवगन्तव्यम्; यद्वा—काल्या—परिवादेन, कलङ्केनेत्यर्थः, दंस्यते—दीप्यते, विख्यायते इत्यर्थः, मृगलाञ्छनादिनाम्ना कीर्त्तितत्वात् इति भावः, असौ इति कालिदासः चन्द्रः, यद्वा—काली—परिवादः, दंस्यते—दृश्यते यत्र असौ कालिदासः, काल्या—परिवादेन, दंस्यते—दृश्यते, ग्रस्यते इत्यर्थः, यः सः कालिदासः कलङ्कयुक्तः चन्द्र इत्यर्थो वा, ["दसि दीप्तौ" "दसि दर्शने दंशने च" इति वा चौरादिकदन्‌सधातोः "दंसेष्टटनौ न आ च" (उ० ४र्थ पा० १० सू०) इति टः, नकारस्य आकारश्च] माननात्—सम्मानकरणात्, भोजः,—भोजराजा,

ततोऽस्य विशेषेण विद्वद्भिः सह वैरानलः प्रदीप्तः।

ततः कैश्चिद्बुद्धिमद्भिः मन्त्रयित्वा सर्वैरपि विद्वद्भिः भोजस्य ताम्बूलवाहिनी दासी धनकनकादिना सम्मानिता। ते च तां प्रत्युपायमूचुः,—"सुभगे! अस्मत्कीर्त्तिमसौ कालिदासो गलयति, अस्मासु कोऽपि नैतेन कलासाम्यं प्रवहते ; वत्से! यथैनं राजा देशान्तरं निःसारयति, तत् भवत्या कर्त्तव्यम्" इति। दासी प्राह,—"भवद्भ्यो हारं प्राप्य मया युष्मत्कार्य्यं क्रियते, तन्मम प्रथमं हारो दातव्यः" इति। ततः सा ताम्बूलवाहिनी तैर्दत्तं हारमादाय व्यचिन्तयत्,—"तथा हि वर्धैरसाध्यं किं वाऽस्ति?" ततः (ज) समतिक्रामत्सु कतिपयवासरेषु दैवादेकाकिनि प्रसुप्ते राजनि चरणसंवाहनादिसेवामस्य विधाय तत्रैव कपटेन नेत्रे निमील्य सुप्ता ; ततश्चरणचलनेन राजानमीषज्जागरूकं सम्यक् ज्ञात्वा प्राह,—"सखि! मदनमालिनि! स दुरात्मा कालिदासः दासीवेषेण अन्तःपुरं प्राप्य लीलादेव्या सह रमयति"। राजा तच्छ्रुत्वा उत्थाय प्राह,—"तरङ्गवति! किं जागर्षि?" इति। सा च निद्राव्याकुलेव न शृणोति।

---

रुद्रो वा—महेश्वर इव, ("इववत् वायथाशब्दौ" इत्युक्तेः) कलावित्—कलां—चतुःषष्टिविधं कलाशास्त्रं, वेत्ति—जानातीति तादृशः, कलाज्ञः, कलाविद्याया मर्मज्ञ इत्यर्थः, अन्यत्र—कलां—चन्द्रकलां, विन्दति—लभते, बिभर्त्ति इत्यर्थः, तादृशः, कलाभृदित्यर्थः, सञ्जात इति शेषः, येन—भोजेन, रुद्रेण च, दोषाकरोऽपि—दोषाधारोऽपि, निशाकरोऽपि च, असौ—कालिदासः, चन्द्रश्च, विबुधेषु—पण्डितेषु, देवेषु च, ("विबुधः स्त्री सुरे" इति मेदिनी) राजा—श्रेष्ठः, स्वामने स्थापनादिति भावः, राजा इति संज्ञाविशिष्टश्च, चन्द्रस्य राजेत्यपरपर्य्यायत्वादिति भावः ; तथा च—("राजा मृगाङ्के क्षत्रिये नृपे" इत्यमरः) कृतः,—सम्पादितः ; निखिलकलाऽभिज्ञः गुणपक्षपाती साक्षात् महेश्वर एवायं भोजः इति भावः ॥ ९ ॥

(ज) समतिक्रामत्सु—समतिगच्छत्सु [सम्+अति+क्रम+शतृ, ७मी बहुव०]।

राजा च तस्या (झ) अपध्वनिं श्रुत्वा व्यचिन्तयत्,—"इयं तरङ्गवती निद्रायां स्वप्नवशङ्गता वासनावशादेव्या दुश्चरितं प्राह, स च स्त्रीवेषेणान्तःपुरमागच्छतीत्येतदपि सम्भाव्यते, को नाम स्त्रीचरितं वेद ?" इति। ततश्चेत्थं विचार्य्य राजा परेद्युः प्रातरात्मनि कृत्रिमज्वरं विधाय शयानः कालिदासं दासीमुखेन (ञ) आनाय्य तदागमनानन्तरं तयैव लीलादेवीञ्चानाय्य देवीं प्रत्यवदत्,—"प्रिये! इदानीमेव मया पथ्यं भोक्तव्यम्" इति। इत्युक्ते साऽपि,—"तथैव" इति पथ्यं गृहीत्वा राज्ञो रजतपात्रे दत्त्वा तत्र मुद्गदालीं प्रत्यवेषयत्। ततः राजाऽपि (ट) तयोरभिप्रायं जिज्ञासमानः श्लोकार्द्धं प्राह,—

"मुद्गदाली गदव्याली कवीन्द्र! वितुषा कथम्?"

इति। ततः कालिदासः देव्यां समीपवर्त्तिन्यामपि उत्तरार्द्धं प्राह,—

"अन्धवल्लभसंयोगे जाता विगतकञ्चुकी" ॥ १० ॥

(झ) अपध्वनिं—निन्दितशब्दं, कुत्सितवाक्यमिति नासागर्जनमिति वा भावः। वासनावशात्—संस्काराधीनत्वात्, जाग्रदवस्थायां सखीजनैः सार्द्धं सर्व्वदा एतस्यैव विषयस्य समालोचनेन तत्प्रभावादित्यर्थः। नाम—सम्भावनायाम्।

(ञ) आनाय्य—प्रापय्य, आनयनं कृत्वेत्यर्थः, अन्तःपुरमिति शेषः। [आ+नी+णिच्+ल्यप्]। तयैव—दास्या एव। पथ्यं—हितं, व्याधिप्रशमकमित्यर्थः, ("पथ्या स्त्री हरीतक्यां हिते त्रिषु" इति मेदिनी)।

(ट) तयोः,—महिषीकालिदासयोः।

संशयितो भोजः, मत्प्रश्नेनानयोर्मन्त्रवक्त्रादीनां भावान्तरं किमपि भवेन्न वा इति वाक्छलेन जिज्ञासुराह, मुद्गेति।—हे कवीन्द्र!—कविश्रेष्ठ!, गदव्याली—गदानां—रोगाणां, व्यालीव—सिंहीव, विनाशकत्वादिति भावः; ("व्याली दुष्टगजे सर्पे शठे श्वापदसिंहयोः" इति हैमः) सर्व्वरोगप्रणाशिनीत्यर्थः, मुद्गदाली—मुद्गविदलं, कथं—केन प्रकारेण, वितुषा—तुषविवर्जिता, प्रावरणहीना इत्यर्थः, जाता इति शेषः। इति राज्ञा पृष्टः कालिदास उत्तरमाह, अन्धेति।—

( ठ ) देवी तच्छ्रुत्वा परिज्ञातार्थस्वरूपा सरस्वतीव तदर्थं विदित्वा स्मेरमुखी मनागिव बभूव। राजाऽप्येतत् दृष्ट्वा विचारयामास,—"इयं पुरा कालिदासे स्निह्यति, अनेन एतस्यां समीपवर्त्तिन्यामपि इत्थमभ्यधायि, इयञ्च स्मेरमुखी बभूव, स्त्रीणां चरित्रं को वेद ?—

अश्वप्लुतं वासवगर्जितञ्च स्त्रीणाञ्च चित्तं पुरुषस्य भाग्यम्।
अवर्षणञ्चाप्यतिवर्षणञ्च देवो न जानाति कुतो मनुष्यः ? ॥११॥

अन्धं—जलम्, ("अन्धं जलम्" इति वाचस्पत्यमहाकोषः) तेन तथा वल्लभेन च—अध्यक्षेण च, पाकशालाध्यक्षेणेत्यर्थः, सूपकारेणेति यावत्, यद्वा,—भो अन्ध !—दृष्टिशक्तिहीन ! विवेकहीन इत्यर्थः, अनुमानेन स्वस्मिन् राज्ञः संशयं बुद्ध्वा कविना इदमामन्त्रणपदं प्रयुक्तमिति बोद्धव्यम्। सह संयोगे—मिलने, सतीति शेषः, विगतकञ्चुकी—विगतम्—अपगतं, कञ्चुकं—स्त्रीणामाप्रपदवस्त्रवत् आवरणमित्यर्थः, "तुष" इति यावत्, यस्याः तादृशी, जाता—सम्पन्ना, पक्षान्तरे—अन्धेन—अनुरागान्धेन, वल्लभेन—दयितेन, ("वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे" इति मेदिनी) यद्वा—अन्धं—तिमिरं, अन्धकारं इत्यर्थः, ("अन्धं स्यात्तिमिरं क्लीवं चक्षुर्हीनेऽभिधेयवत्" इति मेदिनी) वल्लभेन संयोगे—मिलने जाते, विगतकञ्चुकी—विगतम्—उन्मुक्तं, कञ्चुकं—चोलकं, कण्ठदेशात् पादाग्रपर्य्यन्तलम्बमानगात्रावरणविशेषः इत्यर्थः, ("सेमिज्" इत्याख्यया अधुना परिचितम्) यस्याः सा तादृशी ; "अन्धोवल्लभसंयोगे" इति पाठे—अन्धः,—अन्नं, ("भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः" इत्यमरः) तस्य वल्लभः,—अध्यक्षः, अन्नपाचकः सूपकार इत्यर्थः ॥ १० ॥

( ठ ) देवी—भोजमहिषी। परिज्ञातार्थस्वरूपा—परिज्ञातं—सुविदितम्, अर्थस्य—अभिधेयस्य, स्वरूपं—तथ्यमित्यर्थः, तात्पर्य्यमिति यावत्, यया तादृशी। मनागिव—ईषदिव।

स्त्रीचरित्रस्य दुर्बोध्यतायां प्राचीनश्लोकमाह, अश्वेति।—अश्वप्लुतम्—अश्वानां प्लुतम्—आस्कन्दितादिपञ्चविधगत्यन्तर्गतगतिविशेषः, (आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्। गतयोऽमूः पञ्च धाराः" इत्यमरः, "प्लुतन्तु लङ्घनं पक्षिमृगगत्यनुकारकम्। प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके" इति हैमश्च ) कदा कस्यां दिशि केन प्रकारेण यास्यति उल्लम्फनादिकं करिष्यति वा तस्य निर्णयाक्षमत्वादिति भावः ; वासवगर्जितञ्च—वासवस्य—इन्द्रस्य अयमिति वासवः,—मेघः, इन्द्रस्य मेघवाहनत्वादिति

किन्त्वयं ब्राह्मणः दारुणापराधित्वेऽपि न हन्तव्यः, विशेषेण सरस्वत्याः पुरुषावतारः” इति विचार्य्य कालिदासं प्राह,—“कवे! सर्वथा अस्मद्देशे न स्थातव्यं, किं बहुनोक्तेन; प्रतिवाक्यं किमपि न वक्तव्यम्”। ततः कालिदासोऽपि वेगेनोत्थाय वेश्यागृहमेत्य तां प्रत्याह,—“प्रिये! अनुज्ञां देहि, मयि भोजः कुपितः ‘स्वदेशे न स्थातव्यम्’ इत्युवाच। अहह!—

अघटितघटितानि घटयति घटितघटितानि दुर्घटीकुरुते।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ १२ ॥

किञ्च,—किमपि विद्वद्वृन्दचेष्टितमेवेति प्रतिभाति। तथाहि,—

बहूनामल्पसाराणां समवायो दुरत्ययः।
तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः” ॥ १३ ॥

---

भावः; तस्य गर्जितञ्च—गर्ज्जनञ्च, स्त्रीणां—नारीणां, चित्तञ्च—हृदयञ्च, पुरुषस्य—नरस्य, भाग्यं—नियतिम्, अदृष्टमित्यर्थः, अवर्षणञ्च—अनावृष्टिञ्च, अतिवर्षणञ्च—अतिवृष्टिञ्च, कदा वृष्ट्यभावो भविष्यति, कदा वा अतिवृष्टिर्भवतीत्यादिकमित्यर्थः, देवोऽपि न जानाति—न बुध्यते, मनुष्यः कुतः,—कस्मात्, केनोपायेनेत्यर्थः, जानातीति शेषः, नैव ज्ञातुं प्रभवतीत्यर्थः। इन्द्रोपेन्द्रवज्रयोरुपजातिर्वृत्तम् ॥ ११ ॥

दैवस्य बलवत्तामाह, अघटितेति।—विधिः,—दैवम्, अघटितघटितानि—अघटितस्य—अघटनस्य, प्रयत्नासाध्यस्येत्यर्थः, असम्भावितस्येति यावत्, घटितानि—घटनानि, मिलनानीत्यर्थः, घटयति—सम्पादयति, तथा घटितघटितानि—घटितस्य—सम्यक् मिलितस्य, प्रयत्नं विनैव सिद्धस्य इत्यर्थः, घटितानि—घटनानि, मिलनानि इत्यर्थः, दुर्घटीकुरुते—भिनत्तीत्यर्थः, यद्वा—घटितानि—सुसंहतानि, घटितानि—घटनानि; [ घटितमिति भावे क्तः, ततश्च “कृदभिहितभावो द्रव्यवत् प्रकाशते” इति न्यायात् घटनार्थको ज्ञेयः ]। पुमान्—पुरुषः, यानि—वस्तूनि, नैव चिन्तयति—नैव आध्यायते, विधिः तान्येव—अचिन्तितान्येव, घटयति—सम्पादयति; विधिः असम्भवमपि सम्भावयति, सम्भवमपि असम्भावयति तस्मादलङ्घनीयः नियतिनिर्द्देशः इति फलितम्। आर्य्या वृत्तम् ॥ १२ ॥

क्षुद्राणामपि परस्परमिश्रितानां महत्परिभावकत्वमाह, बहूनामिति।—अल्पसाराणाम्—अल्पः सारः,—बलं स्थिरांशो वा येषां तादृशानां, दुर्ब्बलानामदृढाणां

ततो विलासवती नाम वेश्या तं प्राह,—

"तदेवास्य परं मित्रं यत्र सङ्क्रामति द्वयम् ।
दृष्टे सुखञ्च दुःखञ्च प्रतिच्छायेव दर्पणे ॥ १४ ॥

दयित ! मयि विद्यमानायां किं ते राज्ञा ? किं वा राजदत्तेन वित्तेन कार्य्यम् ? सुखेन निःशङ्कं तिष्ठ (ङ) मद्गृहान्तःकुहरे" इति । ततः कालिदासः तत्रैव वसन् कतिपयदिनानि गमयामास ।

[ इति निर्व्वासने भोज-कालिदाससंवादः ] ।

वा, अपीति शेषः, बहूनाम्—अनेकेषां, जनानां वस्तूनां वा इति शेषः, समवायः,—मिलनं, कार्य्यविशेषसाधनाय परस्परमैकमत्येनावस्थानमित्यर्थः, दुरत्ययः,—दुः,—दुःखेन, अत्ययः,—अतिक्रमः विनाशो वा यस्य तादृशः, दुरतिक्रमणीयः दुर्व्विनाश्यो वा, ("अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयोः" इति मेदिनी) बहूनां समवेतचेष्टां कैरपि विफलीकर्त्तुं नैव शक्यते इत्यर्थः, तथा हि, तृणैः, निःसारैरपि बहुभिरिति भावः, रज्जुः,—गुणः, विधीयते—क्रियते, जनैरिति शेषः, तेन—रज्जुभूतेन तृणेन, बहुतृणसमवायोत्पन्नेनेति भावः, दन्तिनः,—हस्तिनः, अपीति शेषः ; महाबला अपीति भावः ; बध्यन्ते—संयम्यन्ते, जनैरिति शेषः , क्षुद्राणां पण्डितमण्डलीनां संहतीभूतचेष्टयैव ममेयमवमानना इति मन्ये इति वक्तुराशयः ॥ १३ ॥

विलासवती स्वस्या अकृत्रिममित्रत्वं ख्यापयितुं मित्रलक्षणमाह, तदिति ।—यत्र—यस्मिन् मित्रे, दृष्टे—नेत्रविषयीभूते सति, दर्पणे—आदर्शे, प्रतिच्छायेव—प्रतिबिम्बमिव, सुखञ्च दुःखञ्च द्वयम—उभयमेव, सङ्क्रामति—प्रतिफलितं भवति, आकारदर्शनसमकालमेव यस्मिन् मित्रस्य सुखं वा दुःखं वा विज्ञातुं शक्नोति इत्यर्थः, तदेव—तादृशमित्रमेव, अस्य—जनस्य, परं—परमं, मित्रं—सुहृत ; त्वमिदानीमतीव दुःखमनुभवसि इति तु त्वद्दर्शनमात्रमेव अहं विज्ञातवती, अहं ते अकृत्रिमं मित्रं, मत्समीपे एव यथासुखं तिष्ठ इति तात्पर्य्यम् ॥ १४ ॥

(ङ) मद्गृहान्तःकुहरे—मम गृहस्य अन्तःकुहरे—अभ्यन्तरवर्त्तिगह्वरे ; शत्रुप्रभृतिभ्यः आत्मगोपनार्थं गह्वरसदृशे भूगर्भस्थगृहे इत्यर्थः, मद्गृहस्य अभ्यन्तरकोष्ठे इत्यर्थो वा ।

# समस्यापूरणे भोज-कविमण्डलीसंवादः।

ततः कालिदासे गृहान्निर्गते राजानं लीलादेवी प्राह,—"देव! कालिदासकविना साकं नितान्तं निविडतमा मैत्री, तदिदानीमनुचितं कस्मात् कृतं यस्य देशेऽप्यवस्थानं निषिद्धम्?—

इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः।
तद्वत्सज्जनमैत्री विपरीतानाञ्च विपरीता ॥ १ ॥
शोकारातिपरित्राणं प्रीतिविस्रम्भभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्?" ॥ २ ॥

कालिदासेन सह अमित्रोचिताचरणस्य अनौचित्यं प्रतिपादयितुं सन्मित्रताया लक्षणमाह, इक्षोरिति।—इक्षोः,—इक्षुदण्डस्य, अग्रात्—शिखरदेशात्, अग्रभागमपेक्ष्येत्यर्थः, क्रमशः,—अनुक्रमेण, अधोऽधः इत्यर्थः, पर्व्वणि पर्व्वणि—ग्रन्थौ ग्रन्थौ, यथा—यद्वत्, रसविशेषः,—स्वादुताऽऽधिक्यं, विद्यते इति शेषः, सज्जनमैत्री—सज्जनानां—साधुलोकानां, मैत्री—मित्रता, तद्वत् तादृशी, प्रथममैत्रीसञ्जनन-कालापेक्षया उत्तरोत्तरमधिकानुरागा इत्यर्थः, विपरीतानाञ्च—असज्जनानान्तु, विपरीता—भिन्नरूपा, उत्पत्तिकाले यादृशानुरागो विद्यते, दिनेषु व्यतीतेषु तस्य ह्रासो जायते इत्यर्थः; सज्जनयोर्भवतोः प्रगाढमैत्र्याः ईदृक् असज्जनोचितः परिणामः दुःखप्रद एवेति भावः। आर्य्या वृत्तम् ॥ १ ॥

मित्रमिति शब्दस्य आनन्दजनकत्वमाह, शोकेति।—शोकः,—प्रियादिवियोग-जनितः मन्युः, अरातिः,—शत्रुः, ताभ्यां परित्राणं—परित्रायते अनेनेति, परित्राण-हेतुभूतमित्यर्थः, शोकनिवारकं शत्रुभयनिवारकञ्चेति यावत्, शोककारणे सञ्जाते मधुरसान्त्वनावाक्येन शोकापनोदकत्वात् अरातिभये च समुपस्थिते विविधप्रकार-साहाय्यादिना तद्भयापनोदकत्वाच्चेति भावः; यद्वा—शोक एव अरातिः तस्मात् परित्राणं, [परि+त्रै+करणे ल्युट्] प्रीतिविस्रम्भभाजनं—प्रीतिः,—सन्तोषः, विस्रम्भः,—विश्वासः, तयोः भाजनं—पात्रं, स्थानमित्यर्थः, यं दृष्ट्वा चित्तप्रसादः

राजाऽप्येतल्लीलादेवीवचनमाकर्ण्य प्राह,—"देवि ! केनापि ममेत्यभ्यधायि यत् 'कालिदासो दासीवेशेन अन्तःपुरमासाद्य देव्या सह रमते'। मया चैतद्व्यापारजिज्ञासया कपटज्वरेणायं भवती च वीक्षितौ, ततः समीपवर्त्तिन्यामपि त्वयि (क) उत्तरार्द्धमित्थं प्राह, तच्चाकर्ण्य त्वयाऽपि कृतो हासः, ततश्च सर्व्वमेतत् दृष्ट्वा ब्राह्मणहननभीरुणा मया देशान्निःसारितः, त्वाञ्च न दाक्षिण्येन हन्मि" इति। ततः (ख) हासपरा देवी चमत्कृता प्राह निःशङ्कं,—"देव ! अहमेव धन्या यस्यास्त्वं पतिरीदृशः, त्वया भुक्तशीलायाः मम मनः कथमन्यत्र गच्छति? यतः सर्वकामिनीभिरपि कान्तोपभोगे स्मर्त्तव्योऽसि। अहह देव ! त्वं यदि मां सतीमसतीं वा कृत्वा गमिष्यसि, तर्ह्यहं सर्वथा मरिष्यामि" इति। ततो राजाऽपि—"प्रिये ! सत्यं वदसि" इति प्राह। ततः सः नृपतिः (ग) पुरुषैर्वह्निमानयामास,

ज्ञायते, यस्मै च रहस्यमपि निःशङ्कं विज्ञापयितुं युज्यते तादृशम् इति भावः ; अत एव रत्नं—रत्नभूतं, रत्नवत् बहुमूल्यं मनोज्ञञ्च इत्यर्थः, इदम्—एतत्, मित्रम् इति अक्षरद्वयं—एतावन्मात्रवर्णद्वयं, केन—देवेन, सृष्टं—निर्मितम् ? यो हि अक्षरद्वयमिदं सृष्टवान्, स परमदयालुः इत्यत्र नास्ति काऽपि विचिकित्सा इति भावः ॥ २ ॥

(क) उत्तरार्द्धम्—"अन्धवल्लभ—" इत्यादिरूपं श्लोकस्य शेषार्द्धम्। निःसारितः,—निर्वासितः। दाक्षिण्येन—औदार्य्येण, अनुकूलत्वेन वा। ("दक्षिणे सरलोदारौ" इत्यमरः)।

(ख) हासपरा—भर्त्तुः संशयस्य अमूलत्वात् हास्यपरायणा। निःशङ्कं—निजपातिव्रत्ये दृढविश्वासात् निर्भयं यथा तथा। भुक्तशीलायाः,—उपभुक्ताया इत्यर्थः, अनुभूतत्वत्सम्भोगसुखाया इत्यर्थः। अन्यत्र—अन्यस्मिन् पुरुषे। कान्तोपभोगे—प्रियेण सह सम्भोगावसरे, राजकान्तलाभस्य राजसदृशकान्तलाभस्य वा सर्वासामेव नारीणामाकाङ्क्षणीयत्वादिति भावः। सतीमसतीं वा कृत्वा—सतीमपि माम् असतीमिव मत्वा इत्यर्थः, ("इववत् वायथाशब्दौ" इत्यनुशासनादिति)।

(ग) पुरुषैः,—राज्ञः अधिकृतपुरुषैः। वह्न्यानयनं महिष्याः सतीत्वपरीक्षार्थं, तथाविधपरीक्षायाः शास्त्रकृद्भिर्विहितत्वादिति भावः। यदुक्तं वीरमित्रोदये

तप्तं लोहगोलकं कारयामास, धनुश्च सज्यञ्चक्रे। ततो देवी स्नाता निजपातिव्रत्यानलेन देदीप्यमाना सुकुमारगात्री सूर्य्य-मवलोक्य प्राह,—"जगच्चक्षुस्त्वं सर्वसाक्षी सर्वं वेत्सि,—

जाग्रति स्वप्नकाले च सुषुप्तौ यदि मे पतिः।
भोज एव परं नान्यो मच्चित्ते भावितोऽसि न" ॥ १ ॥

व्यवहाराध्याये.—"तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये। महाभियोगे-ष्वेतानि शीर्षकस्थेऽभियोक्तरि॥" "एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम्।" सापराधतया मन्यमानं पुरुषं विषादिभिः परीक्षेत इति याज्ञवल्क्यादयः प्राहुः; तत्र विषेण परीक्षितव्यं पुरुषं शार्ङ्गं विषं पाययेत्, तेन विषक्रिया काऽपि न लक्षिता चेत् तं पुरुषं निरपराधं विजानीयात्। अग्निना परीक्षितव्यस्य विमर्दितव्रीहिः करौ विशेषेण लक्षयेत् तत्र किमपि व्रणादिचिह्नं विद्यते न वा। ततः सूत्रवेष्टितानि सप्ताश्वत्थपत्राणि हस्तयोः संस्थाप्य तदुपरि पञ्चाशत्पलपरिमितं सुतप्तं लौहगोलकं दत्त्वा परीक्षितव्यं तं प्रागेव अङ्कितेषु षोडशाङ्गुलपरिमितेषु षोडशाङ्गुलान्तरालेषु च नवसु मण्डलेषु सप्तमण्डलानि शनैर्गमयेत्, अष्टमे च मण्डले उपस्थितः सः पुरुषः नवममण्डले गोलकं विनिक्षिपेत्। एवञ्च हस्तौ अदग्धौ चेत् तं निरपराधं विजानीयात्। अद्भिः परीक्षायां कर्त्तव्यायां स्थिरतोयस्य कस्यचित् जलाशयस्य तटे परीक्ष्यस्य कर्णमात्र-मुच्छ्रितमेकं तोरणं कुर्य्यात्। ततः द्वौ पुरुषौ गृहीतसशरवयकार्मुकौ तोरणमूलं, एकञ्च जलाशयजले नाभिमात्रे संस्थाप्य परीक्षणीयमपि तत्रैव स्थापयेत्। शरक्षेपकस्य च सार्द्धशतहस्तमध्ये स्थानत्रयं कल्पयेत्। ततः त्रिषु शरेषु मुक्तेषु एको वेगवान् मध्यम-शरपातस्थानं गत्वा शरमादाय तत्रैव तिष्ठेत्, अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले एव तिष्ठेत्। ततश्च करतालिकात्रयेण दत्तसङ्केतः परीक्ष्यः पुरुषः नाभि-प्रमाणोदकस्थितस्य पुरुषस्य ऊरू गृहीत्वा निमज्जेत्। तत्समकालमेव तोरणमूलस्थितः पुरुषः द्रुततरं मध्यमशरपातस्थानं गच्छेत्, शरग्राही च तस्मिन् तत्र गते द्रुततरं तोरणमूलमागत्य अन्तर्जलगतं शीर्ष्यं पश्येच्चेत् तं निरपराधं विजानीयादिति परीक्षा-त्रयस्य वीरमित्रोदयोदितस्य सारसङ्क्षेपः।

स्वस्याः पातिव्रत्यख्यापनाय सूर्य्यं प्रमाणीकरोति, जाग्रतीति।—जाग्रति—जागरणावस्थायां, स्वप्नकाले अप्रगाढ़निद्राकाले इत्यर्थः, प्रसुतस्य विज्ञानकाले वा, ("स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति मेदिनी) सुषुप्तौ च—प्रगाढ़निद्रा काले च, परं—केवलं, भोज एव यदि मे—मम, पतिः,—भर्त्ता, विद्यते इति शेषः,

इत्युक्त्वा ततो (घ) दिव्यत्रयञ्चक्रे ।

ततः (ङ) शुद्धायामन्तःपुरे लीलावत्यां लज्जानतशिराः नृपतिः पश्चात्तापातुरः,—"देवि ! क्षमस्व पापिष्ठं मां, किं वदामि" इति कथयामास । राजा च तदा प्रभृति न निद्राति, न च भुङ्क्ते, न केनचिद्वक्ति, केवलमुद्विग्नमनाः स्थित्वा दिवानिशं प्रविलपति,—"किं नाम मम लज्जा, किं नाम दाक्षिण्यं, क्व गाम्भीर्य्यम् ? हा हा ! कवे ! (च) कविकोटिमुकुटमणे ! कालिदास ! हा ! मम प्राणसम ! हा ! मूर्खेण किमश्राव्यं श्रावितोऽसि, अवाच्यमुक्तोऽसि" इति प्रसुप्त इव ग्रहग्रस्त इव मायाविध्वस्त इव पपात । ततः (छ) प्रियाकरकमलसिक्तजलसञ्जातसंज्ञः कथमपि तामेव प्रियां वीक्ष्य स्वात्मनिन्दापरः परमतिष्ठत् । ततः (ज) निशानाथहीनेव निशा, दिनकरहीनेव दिनश्रीः, वियोगिनीव योषित्,

---

अन्यः,—भोजेतरः कश्चित्, मच्चित्ते—मम मनसि, न, विद्यते इति शेषः, भावितोऽसि न—किं बहुना पतिचिन्तां विहाय जगच्चक्षुस्त्वमपि कदापि यदि मया न चिन्तितो भवसीत्यर्थः, तदा नाहं स्त्रियं इति शेषः अध्याहरणीयः ॥ २ ॥

(घ) दिव्यत्रयं—विशुद्धिज्ञापकं शास्त्रोक्तं प्रमाणत्रयम् ।

(ङ) शुद्धायामन्तःपुरे लीलावत्यां—पूर्वोक्तपरीक्षात्रयेण विज्ञापितात्मपवित्रतायां लीलावत्यामन्तःपुरं, गतायां सत्याम् इति शेषः । (भावे ७मी०) ।

(च) कविकोटिमुकुटमणे !—कविकोटीनां—कोटिकोटिकवीनां, मुकुटमणे !—किरीटस्थरत्नविशेषतुल्य ! कविकुलशिरोभूषण इत्यर्थः । मूर्खेण—त्वन्मर्य्यादाऽनभिज्ञेन । अश्राव्य—श्रावयितुमयोग्यम् । [न + श्रु + णिच् + य] । श्रावितः,—आकर्णितः । [श्रु + णिच् + क्तः] । ग्रहग्रस्त इव—भूतादिभिराक्रान्त इव । मायाविध्वस्त इव—मायया—कुहकविद्यया, विध्वस्त इव, अकस्मात् हृतशक्तिक इवेत्यर्थः । ("वज्राहत इव" इति पाठान्तरम्) ।

(छ) प्रियेति ।—प्रियायाः,—दयितायाः महिष्याः, करकमलेन—पाणिपद्मेन, सिक्तम्—अभ्युक्षितं, यत् जलं तेन सञ्जाता—लब्धा, संज्ञा—चेतना यस्य येन वा सः ।

(ज) निशानाथहीना—चन्द्रविरहिता । दिनश्रीः,—दिवसशोभा । वियोगिनी

अशक्ररहितेव सुधर्मा, न भाति भोजभूपालसभा रहिता कालिदासेन। तदा प्रभृति न कस्यचिन्मुखे काव्यं, न कोऽपि (झ) विनोदसुन्दरं वचो वक्ति।

ततो गतेषु केषुचिद्दिनेषु कदाचित् (ञ) राकापूर्णेन्दुमण्डलं पश्यन् पुरस्थ लीलादेवीमुखेन्दुं वीक्ष्य प्राह,—

"तुलणं अणु अणुसरइ ग्लौ सो मुहचंदस्स खु एदाए"। *

कुत्र च पूर्णेऽपि चन्द्रमसि (ट) नेत्रविलासाः, कदा वाचो विलसितम्। प्रातरुत्थितः (ठ) प्रातर्विधीन् विधाय सभां प्राप्य राजा विद्वद्वरान् प्राह,—"अहो कवयः! इयं समस्या पूर्य्यताम्"। ततः पठति,—

---

—पतिविरहिता। अशक्ररहिता—इन्द्रपरित्यक्ता। सुधर्मा—देवसभा, ("स्यात् सुधर्मा देवसभा" इत्यमरः)।

(झ) विनोदसुन्दरं—विनोदाय—क्रीडायै, चित्तविनोदनाय इत्यर्थः, सुन्दरं—मनोरमं, सरसमित्यर्थः।

(ञ) राकापूर्णेन्दुमण्डलं—राकायां—सम्पूर्णेन्दुतिथौ, पौर्णमास्यामित्यर्थः, ("राका नद्यन्तरे कच्छां नवजातरजःस्त्रियाम्। सम्पूर्णेन्दुतिथौ" इति मेदिनी)। पूर्णेन्दुमण्डलं—पूर्णचन्द्रबिम्बं, पूर्णचन्द्रमित्यर्थः।

* पूर्णचन्द्रदर्शनेन विमुग्धो भोजः स्वप्रियाया मुखचन्द्रात् तस्य अपकर्षत्वमाह श्लोकार्द्धेन, तुलणमिति।—"तुलनामण्वनुसरति ग्लौः सः मुखचन्द्रस्य खल्वेतस्याः" इति संस्कृतम्। श्लोकार्द्धोऽयमग्रे स्फुटीभविष्यति।

(ट) नेत्रविलासाः,—नयनोत्सवा इत्यर्थः, नयनयोस्तृप्तिसाधनमिति भावः। वाचो विलसितं—वाग्विलासः, विविधसरसवाग्विन्यासजनितहृप्तिसम्भोगः इति भावः।

(ठ) प्रातर्विधीन्—प्रातःकृत्यान्। समस्या—समं कृत्स्नं, तद्विषयिणीच्छा, समासार्था वाक्, कवित्वशक्तिपरीक्षार्थम् अपूर्णतयैव पठ्यमाना पूरणसाकाङ्क्षा वाणीत्यर्थः। [समशब्दात् "सुप आत्मनः क्यच्" (३।१।८ पा०) इति क्यच्। "सर्व्वप्रातिपदिकानां" (वा०) इति सुगागमे "अः प्रत्ययात्" (३।३।१०२ पा०) इति सूत्रेण अः, ततः "अजाद्यतष्टाप्" (४।१।४ पा०) इति टाप्। यद्वा—समस्यते—सङ्क्षिप्यते अनया इति सम्+अस्+करणे क्यप्] सङ्क्षेपेण उक्तस्य श्लोकपादादेः

"तुलणं अणु अणुसरइ ग्लो सो मुहचंदस्स खु एदाए"।

पुनराह,—"इयच्चेत् समस्या न पूर्य्यते भवद्भिः, मद्देशे न स्थातव्यम्" इति। ततो भीतास्ते कवयः स्वानि गृहाणि जग्मुः, चिरं विचारितेऽप्यर्थे कस्यापि नार्थसङ्गतिः स्फुरति। ततः सर्वैर्मिलित्वा बाणः प्रेषितः। ततः सभां प्राप्याह राजानं,—"देव! सर्वैर्विद्वद्भिरहं प्रेषितः, (ङ) अष्ट वासरानवधिमभिधेहि, नवमेऽह्नि पूरयिष्यन्ति ते, न चेद्देशान्निर्गच्छन्ति"। ततो राजा,—"अस्तु" इत्याह। ततो बाणः तेषां विज्ञाप्य (ढ) राजसन्देशं स्वगृहमगात्। ततोऽष्टौ दिवसाः अतीताः; अष्टमदिनरात्रौ मिलितेषु तेषु कविषु बाणः प्राह,—"अहो! (ण) तारुण्यमदेन राजसम्मानमदेन किञ्चिद्विद्यामदेन कालिदासो निःसारितोऽभवत्, समे भवन्तः सर्व्वे एव कवयः, विषमे स्थाने तु स एक एव कविः, तं निःसार्य्य इदानीं किं नाम मद्दत्त्वमासीत्? स्थिते तस्मिन् कथमियमवस्थाऽस्माकं भवेत्? तन्निःसारे या या बुद्धिः कृता, सा भवद्भिरेव अनुभूयते,—

परकृतेन स्वकृतेन वा अवशेषेण भागान्तरेण सङ्घटनार्थं कृतः प्रश्नः इत्यर्थः। ("समस्या तु समासार्था" इत्यमरः) पूर्य्यताम्—उत्तरार्द्धरचनेन पूर्णा क्रियतामित्यर्थः।

(ङ) अष्ट वासरान्—अष्टौ दिनानि व्याप्य। अवधिं—कालं, समस्यापूरणार्थं समयमित्यर्थः। ("अवधिरवधाने स्यात् सीम्नि काले बिले पुमान्" इति मेदिनी)। अभिधेहि—कथय, आदिश इत्यर्थः, ते अष्ट दिनानि समयं प्रार्थयन्ति, भवान् विद्वद्भ्य एतं समयं ददातु इति भावः।

(ढ) राजसन्देशं—राज्ञः वाचिकादेशम्, ("सन्देशवाग्वाचिकं स्यात्" इत्यमरः)।

(ण) तारुण्यमदेन—यौवनदर्पेण। समे—अविषमे, अगूढार्थश्लोकादिविषये इति भावः;

सामान्यविप्रविद्वेषे कुलनाशो भवेत् किल ।
उमारूपस्य विद्वेषे नाशः कविकुलस्य हि" ॥ ४ ॥

ततः सर्वे गाढं कलहायन्ते स्म मयूरादयश्च । ततः (त) ते सर्व्वान् कलहान्निवार्य्य सद्यः प्राहुः,—"अद्यैवावधिः पूर्णः; कालिदासमन्तरेण न कस्यचित् सामर्थ्यमस्ति समस्यापूरणे,—

सङ्ग्रामेषु भटेन्द्राणां कवीनां कविमण्डले ।
दीप्तिर्व्वा दीप्तिहानिर्व्वा मुहूर्त्तेनैव जायते ॥ ५ ॥

---

ब्राह्मणहिंसाया अपकारितामाह, सामान्येति।—सामान्यविप्रविद्वेषे—साधारणब्राह्मणहिंसायां, कुलनाशः,—वंशध्वंसः, भवेत्—स्यात्, किल—प्रसिद्धौ, श्रुतिस्मृत्यादिप्रसिद्धमित्यर्थः, किन्तु उमारूपस्य—पार्वतीरूपस्य, पार्वत्याः मूर्त्तिविशेषसरस्वतीरूपस्येत्यर्थः, उक्तञ्च—"ललिता भारती काली एकैव भगवत्युमा" इति चण्डीरहस्यवचे; कालिदासस्य इति भावः; तस्यैव सरस्वतीरूपविशेषत्वात्, उक्तञ्च—"कोऽपि भारत्याः पुरुषावतारः" इति। यद्वा—"शब्दजातमशेषन्तु धत्ते सर्व्वस्य वल्लभा" इति स्मरणात् निखिलशब्दतत्त्वेषु असाधारणव्युत्पत्तेः साक्षात् पार्व्वतीस्वरूपस्य कालिदासस्येत्यर्थः; यद्वा—उमायाः,—काल्याः, रूपं—शब्दः, नामाक्षरः इत्यर्थः, यत्र तस्य कालिदासस्य, ("रूपं स्वभावे सौन्दर्य्ये नामके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि" इति मेदिनी) यद्वा—उमारूपस्य—कीर्त्तिस्वरूपस्य, कवियशसः साक्षात् मूर्त्तिविशेषस्य कालिदासस्य इत्यर्थः, ("उमा गौर्य्यां हरिद्रायां कीर्त्तिकान्त्यतसीषु च" इति मेदिनी)। विद्वेषे—हिंसने, कविकुलस्य—कविसमूहस्य, नाशः,—ध्वंसः, भवेदिति शेषः, हि—निश्चये ॥ ४ ॥

(त) ते—बाणमयूरादयः। सर्वान्—कलहायमानान् इतरान् कवीन्। सद्यः,—सपदि, कलहारम्भे एव इत्यर्थः। कालिदासम् ["अन्तराऽन्तरेण युक्ते" (२।३।४ पा०) इति अन्तरेणयोगे द्वितीया ]।

कवीनां कीर्त्यकीर्त्योरनियतप्राप्तित्वमाह, सङ्ग्रामेषु इति।—भटेन्द्राणां—महावीराणां, सङ्ग्रामेषु—युद्धेषु, कवीनां—काव्यकर्त्तृणां, कविमण्डले—कविसमूहमध्ये, मुहूर्त्तेनैव—स्वल्पकालेनैव, दीप्तिर्वा—औज्ज्वल्यं वा, यशःस्फुरणं वेत्यर्थः, दीप्तिहानिर्वा—मालिन्यं वा, अयशस्तमो वेत्यर्थः, जायते—सम्पद्यते; भटानां शौर्य्यभीरुत्वाभ्यां कवीनाञ्च श्लोकादिरचनाया उत्कर्षत्वापकर्षत्वाभ्यां यशसः स्फूर्त्तिहानी जायेते इति निष्कर्षः ॥ ५ ॥

यदि (थ) रोचते ततोऽद्यैव मध्यरात्रे प्रमुदितचन्द्रमसि निगूढ़मेव गच्छामः सम्पत्तिसम्भारमादाय; यदि न गम्यते, श्वो राजसेवका अस्मान् बलान्निःसारयन्ति, तदा (द) देहमात्रेणैवास्माभिर्गन्तव्यं, तदद्य मध्यरात्रे गमिष्यामः" इति सर्व्वे निश्चित्य गृहमागत्य बलीवर्दव्यूढ़ेषु शकटेषु सम्पत्सम्भारमारोप्य रात्रावेव निष्क्रान्ताः। ततः कालिदासः (ध) तत्रैव रात्रौ विलासवतीसदनोद्याने वसन् पथि गच्छतां तेषां गिरं श्रुत्वा वेश्याचेटीं प्रेषितवान्,—"भद्रे! पश्य के एते गच्छन्ति ब्राह्मणा इव"। ततः सा समेत्य सर्व्वानपश्यत्, उपेत्य च कालिदासं प्राह,—

"एकेन राजहंसेन या शोभा सरसोऽभवत्।
न सा बकसहस्रेण परितस्तीरवासिना ॥ ६ ॥

सर्व्वे च बाणमयूरप्रमुखाः पलायन्ते, नात्र संशयः" इति।

(थ) रोचते, भवद्भ्य इति शेषः। प्रमुदितचन्द्रमसि—प्रमुदितः,—अदर्शनं गतः चन्द्रमा यत्र तस्मिन्, अस्तमितचन्द्रे, चन्द्रे अस्तं गते इत्यर्थः।

(द) देहमात्रेणैव—शरीरमात्रेणैव; सम्पत्तिसम्भारं परित्यज्य केवलं शरीरमेव गृहीत्वेत्यर्थः। बलीवर्दव्यूढ़ेषु—बलीवर्दैः,—वृषभैः, व्यूढ़ेषु—संहतेषु, योजितेषु इत्यर्थः, चालितेषु इति यावत्। यद्वा—बलीवर्दाः व्यूढ़ाः,—विन्यस्ताः, संयोजिता इत्यर्थः, यत्र तेषु, ("व्यूढ़ः संहतविन्यस्तपृथुलेष्वभिधेयवत्" इति मेदिनी)।

(ध) तत्रैव—यस्यां रात्रौ बाणादयः पलायन्ते तस्यामेव। विलासवतीसदनोद्याने—विलासवत्याः गृहसंलग्नोपवने। वेश्याचेटीं—वेश्यायाः परिचारिकाम्।

कालिदासपरित्यक्ताया राजसभायाः श्रीहीनत्वं प्रतिपादयितुं कव्यन्तराणामपकर्षत्वं भङ्ग्या आह, एकेनेति।—एकेन—एकमात्रेण, राजहंसेन—लोहितचञ्चुचरणोपलक्षितशुभ्रवृहदाकारहंसराजेन, सरसः,—सरोवरस्य, या शोभा—श्रीः, अभवत्—आसीत्, परितः,—चतुर्दिक्षु, तीरवासिना—तटदेशवर्त्तिना, बकसहस्रेण—सहस्रसङ्ख्यकेनापि बकेन, सा—शोभा, न, भवतीति शेषः; तदभावजनितमसौन्दर्य्यं पूरयितुं नान्ये असङ्ख्येया अपि कवयः समर्था इति भावः ॥ ६ ॥

कालिदासः,——"प्रिये! वेगेन वासांसि भवनादानय, यथा पलायमानान् विप्रान् रक्षामि,—

किं पौरुषं रक्षति यो न वाऽऽर्त्तान्?
किं वा धनं नार्थिजनाय यत् स्यात्?।
सा किं क्रिया या न हितानुबद्धा?
किं जीवितं साधुविरोधि यद्वै?" ॥ ७ ॥

ततः स कालिदासः (न) चारणवेशं विधाय खड्गमुद्वहन् क्रोशार्द्धमुत्तरं गत्वा तेषामभिमुखमागत्य सर्वान्निरूप्य "जय" इत्याशीर्वचनमुदीर्य्य पप्रच्छ चारणभाषया,—"अहो विद्यावारिधयः! भोजसभायां सम्प्राप्तमहत्त्वातिशयाः हंसतय इव सम्भूय कुत्र जिगमिषवो भवन्तः? कच्चित् कुशलं वः? राजा च

विपन्नसंरक्षणादिकार्य्याकरणे पौरुषादेर्वैफल्यमाह, किमिति।—यः, जन इति शेषः, आर्त्तान्—विपन्नान्, न रक्षति—न त्रायते, पौरुषं वा—तस्य पुरुषकारः एव, किम्?—विफलं निन्दनीयं वेत्यर्थः ("किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी)। यद्वा—पौरुषं किं वा? न किमपीत्यर्थः, वाशब्दोऽत्र वितर्के। एवमग्रेऽपि "किं वा" इत्यस्य व्याख्या कर्त्तव्या। यत् धनं—विभवः, अर्थिजनाय—याचकजन-निमित्तं, याचकेभ्यः दानायेत्यर्थः, न स्यात्—न भवेत्, तद्धनं वा—धनमेव, किम्?—विफलमित्यर्थः, या क्रिया—यत् कार्य्यं, हितानुबद्धा—हितेन—मङ्गलेन, अनुबद्धा—अनुबन्धयुक्ता, उत्तरकाले हितजननीत्यर्थः, न, स्यादिति शेषः, सा—क्रिया, किम्—निन्दार्हा इत्यर्थः, यद्वै—यत्र, जीवितं—जीवनं, साधुविरोधि—सुजनहिंसकं, तत् जीवितं किं—गर्हितमित्यर्थः। इन्द्रवज्रावृत्तम् ॥ ७ ॥

(न) चारणवेशं—कुशीलववेशं, राज्ञां यशःप्रख्यापकनटविशेषस्य भूमिका-मित्यर्थः। ("चारणास्तु कुशीलवाः" इत्यमरः)। उद्वहन्—धारयन् [उत्+वह+शतृ]। निरूप्य—सविशेषं निरीक्ष्य इत्यर्थः [नि+रूप+ल्यप्]। उदीर्य्य—उक्त्वा, उच्चार्य्य इति यावत् [उत्+ईर+ल्यप्]। विद्यावारिधयः,—विद्यायाः,—ज्ञानस्य, वारिधयः इव वारिधयः,—सागराः, विद्यासागराः, भो ज्ञानगरिष्ठा इत्यर्थः। सम्प्राप्तेति।—सम्प्राप्तः,—अधिगतः, महत्त्वस्य—श्रेष्ठत्वस्य, अतिशयः,—उत्कर्षः यैस्तादृशाः। सम्भूय—मिलित्वा। जिगमिषवः,—यियासवः, गन्तुमिच्छव

कुशलो कच्चित्? अस्माभिः काशीदेशादागम्यते भोजदर्शनाय वित्तस्पृहया च"। ततः परिहासं कुर्व्वन्तः सर्व्वे निष्क्रान्ताः। ततस्तेषु कश्चित् तन्निरमाकर्ण्य तस्य चारणं मन्यमानः कुतूहलेन (प) विपश्चित् प्राह,—"अहो चारण! शृणु, त्वया पश्चादपि श्रोष्यते एव, अतो मया अद्यैवोच्यते, राज्ञा किलैभ्यो विद्वद्भ्यः पूरणाय समस्योक्ता, तत्पूरणाशक्ताः कुपितराज्ञो भयात् देशान्तरे क्वचिज्जिगमिषव एते निश्चक्रमुः"। चारणः,—"राज्ञा का वा समस्या प्रोक्ता?" ततः पठति स विपश्चित्,—

"तुलणं अण अणुसरइ ग्लौ सो मुहचंदस्स खु एदाए"।

चारणः,—"एतत् साध्वेव गूढार्थम्, एतत् पूर्णेन्दुमण्डलं वीक्ष्य राज्ञाऽपाठि, एतस्योत्तरार्द्धमिदं भवितुमर्हति,—

अणु दिदि वसअदि कहं अणुकिदि तस्स पड़िपदि चंदस्स" ॥ *

सर्वे श्रुत्वा चमत्कृताः। ततः चारणः सर्वान् प्रणिपत्य निर्ययौ। ततः सर्वे विचारयन्ति स्म,—"अहो! इयं साक्षात् सरस्वती पुंरूपेण सर्वेषाम् अस्माकं परित्राणाय आगता, नायं भवितुमर्हति मनुष्यः। अद्यापि किमपि केनापि न ज्ञायते, ततः शीघ्रमेव गृहमासाद्य, शकटेभ्यो भारमुत्तार्य्य, प्रातः सर्वैरपि राजभवनमागन्तव्यम्; न चेच्चारण एव निवेदयिष्यति, ततः झटिति गच्छामः" इति (फ) योजयित्वा तथा चक्रुः। ततो राजसभां गत्वा राजानमालोक्य "स्वस्ति" इत्युक्त्वा विविशुः।

इत्यर्थः। [ गम + सन् + उ: + १मा बहुव० ]। कच्चित्—प्रश्नार्थकमव्ययम्। वः,—युष्माकम्।

(प) विपश्चित—विप्रकृष्टं चेतति, निश्चिनोति वा चिन्तयति वा [ इति वि + प्र + चित, चि, चिन्त वा + क्विप्, पृषोदरादित्वात् साधुः ] पण्डितः।

* "अणु इति वर्ण्यते कथमनुकृतिस्तस्य प्रतिपदि चन्द्रस्य" इति संस्कृतम्। अस्यापि श्लोकार्द्धस्य व्याख्या अग्रे द्रष्टव्या।

(फ) योजयित्वा—निर्धार्य्य, प्रकटे वक्तव्यमिदमिति शेषः।

ततो बाणः प्राह,—"देव! सर्वज्ञेन यत्त्वया पठ्यते, तदीश्वर एव वेद, केऽमी (ब) वराका उदरम्भरयः द्विजाः? तथाऽप्युच्यते,—

तुलणं अण् अणुसरइ ग्लौ सो मुहचंदस्स खु एदाए।
अणु इदि वस्सअदि कहं अणुकिदि तस्स पड़िपदि चंदस्स" ॥८॥

राजा (भ) यथाव्यवसितस्याभिप्रायं विदित्वा "सर्वथा कालिदासः दिवसप्राप्यस्थाने निवसति, उपायैश्च सर्वं साध्यम्"

(ब) वराकाः,—दीनाः। उदरम्भरयः,—स्वोदरमात्रपूरकाः, औदारिका इति यावत्। [उदर+भृ+इन्, मुम् च—१मा बहुव०]।

तुलणमिति।—"तुलनामण्वनुसरति ग्लौः स मुखचन्द्रस्य खल्वेतस्याः।
अण्विति वर्ण्यते कथमनुकृतिस्तस्य प्रतिपदि चन्द्रस्य॥"
इति संस्कृतम्।

अस्यार्थः,—सः,—मुखोपमानत्वेन सुप्रसिद्धः, ग्लौः,—मृगाङ्कः, चन्द्रः इत्यर्थः, ("अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः" इत्यमरः) एतस्याः,—लीलावत्याः, मुखचन्द्रस्य—वदनेन्दोः, तुलनां—सादृश्यम्, अणु—स्वल्पम्, अनुसरति—अनुगच्छति, अनुकरोतीत्यर्थः, अणु—"तुलनामणु" इत्यत्र अणु—स्वल्पम्, इति—एतत् पदं, कथं—कस्मात्, वर्ण्यते—कथ्यते? अस्माभिरिति शेषः, चन्द्रोऽपि अस्य स्वल्पमेव अनुकरोति इति कथमस्माभिः कीर्त्यते? इत्यर्थः। कीर्त्तने हेतुमाह, अनुकृतिरिति।—प्रतिपदि—प्रतिपत्तिथौ, तस्य चन्द्रस्य—कलामात्रावशेषस्य, कलाहीनस्य वा इत्यर्थः, अनुकृतिः,—सादृश्यं, कथं—केन प्रकारेण, (अत्र कथमिति पदमुभयत्रापि योजनीयम्) युज्यते इति शेषः, शुक्लप्रतिपदि कलामात्रात्मकत्वेनातिक्षीणत्वात्, कृष्णप्रतिपदि अपि कलाहीनत्वेन असम्पूर्णत्वात् सदैव सम्पूर्णस्य अस्य मुखचन्द्रस्य शोभां प्रसिद्धः स चन्द्रः स्वल्पमेवानुकरोति इत्येव वक्तुमुचितमिति भावः। "अणुकिदि" इत्यस्य "अणुकृतिः" इति संस्कृतानुवादे—प्रतिपदि तस्य चन्द्रस्य अणुकृतिः,—स्वल्पाकृतिः, क्षीणता इति यावत्, दृश्यते इति शेषः, अत एव अणु इति वर्ण्यते इति योजनीयम्; प्रतिपदि अस्य क्षीणता जायते, अस्या मुखचन्द्रस्य तु न तथात्वमिति भावः। अत्र प्रतिपच्छब्दः पौर्णमास्यतिरिक्तानां सर्वासामेव तिथीनामुपलक्षणत्वेनावगन्तव्यः॥ ८॥

(भ) यथाव्यवसितस्य—स्वकीयनिश्चयस्येत्यर्थः। दिवसप्राप्यस्थाने—एकदिनेनैव गन्तव्ये स्थाने। उपायैः,—प्रयत्नैः।

इति चिन्तयामास। ततो बाणाय (म) रुक्माणां पञ्चदशलक्षाणि प्रादात्, सन्तोषमिषेणैव विद्वद्वृन्दं स्वं स्वं सदनं प्रति प्रेषितम्।

[ इति समस्यापूरणे भोज-कविमण्डलीसंवादः ]।

## प्रत्यानयने भोज-कालिदाससंवादः।

गते च विद्वन्मण्डले शनैर्द्वारपालायादिष्टं राज्ञा,—"यदि केचित् द्विजन्मान आयास्यन्ति, तदा गृहमध्यमानेतव्याः"। ततः सर्वमपि वित्तमादाय स्वगृहं गते बाणे केचित् पण्डिता आहुः,—"अहो! बाणेनानुचितं व्यधायि, यदसावपि अस्माभिः सह नगरान्निष्क्रान्तोऽपि सर्वमेव धनं गृहीतवान्; सर्वथा भोजस्य बाणस्वरूपं ज्ञापयिष्यामः, यथा कोऽपि नान्यायं विधत्ते विद्वत्सु"। ततस्ते राजानमासाद्य ददृशुः। राजा तान् प्राह,—(क) "एतत्स्वरूपं ज्ञातमेव, भवद्भिर्यथार्थतया वाच्यम्"। ततस्तैः सर्वमेव निवेदितम्। ततः राजा विचारितवान्,—"सर्वथा कालिदासस्मरणवेषेण मद्भयात् मदीयनगरमध्यास्ते"। ततश्चाङ्गरक्षकानादिदेश,—"अहो! (ख) पल्ययन्तां तुरगाः"। ततः क्रीडोद्यानप्रयाणे पटहध्वनि-

(म) रुक्माणां—सुवर्णानाम्। सन्तोषमिषेण—सन्तोषव्याजेन, न तु वास्तविक-सन्तोषेणेति भावः।

(क) एतत्स्वरूपम्—एतस्य—समस्यापूरणस्य, स्वरूपं—याथार्थ्यमित्यर्थः।

(ख) पल्ययन्तां—पृष्ठोपरि स्थापनीयचर्मनिर्मितसज्जाविशेषैः सज्जीक्रियन्तामित्यर्थः। [ परि + अय + कर्मणि लोट् अन्ताम्; रेफस्य लत्वम् ]।

रभवत्। "अहो! इदानीं राजा देवपूजाव्यग्र इति शुश्रुमः, पुनरिदानीं क्रीड़ोद्यानं गमिष्यति" इति व्याकुलाः सर्वे भटाः सम्भूय पश्चादुद्यान्ति। ततो राजा तैर्विद्वद्भिः सह अश्वमारुह्य रात्रौ यत्र चौरप्रसङ्गः समजनि, तत्प्रदेशं प्राप्तः। ततो राजा (ग) चरतां चौराणां पदज्ञाननिपुणानाहूय प्राह,—"अनेन वर्त्मना यः कोऽपि रात्रौ निर्गतः, तस्य पदानि अद्यापि दृश्यन्ते, तानि पश्यन्तु" इति। ततो राजा प्रतिपण्डितं लक्षं दत्त्वा तान् प्रेषयित्वा च स्वभवनमगात्। ते च पदज्ञा राजाज्ञया सर्वतश्चरन्तोऽपि तमनवेक्षमाणा विमूढा इवाऽऽसन्। ततश्च (घ) लम्बमाने सवितरि कामपि दासीमेकां पदत्राणं त्रुटितमादाय चर्म्मकारवेश्म गच्छन्तीं दृष्ट्वा तुष्टा इवाऽऽसन्; ततस्तत् पदत्राणं तया चर्म्मकारकरे न्यस्तं वीक्ष्य तैश्च तस्य करान्निमिषेणादाय रेणुपूर्णे पथि मुक्त्वा तदेव पदं तस्येति ज्ञात्वा ताञ्च दासीं क्रमेण वेश्याभवनं विशन्तीं वीक्ष्य तस्याः मन्दिरं परितो वेष्टयामासुः। ततश्च तैः (ङ) क्षणेन भोज-श्रवणपथविषयम् अभिज्ञानवार्त्ता प्रापिता। ततो राजा सपौरः सामात्यः पद्भ्यामेव विलासवतीभवनमगात्। ततः

---

(ग) चरतां—गच्छतां, रात्रौ भ्रमतामित्यर्थः। पदज्ञाननिपुणान्—चरण-चिह्नदर्शनेन चौराणां गन्तव्यप्रदेशनिर्णयकुशलानित्यर्थः।

(घ) लम्बमाने—अस्तं गच्छति इत्यर्थः। सवितरि—सूर्य्ये। पदत्राणम्—उपानहं, पादुकामित्यर्थः। त्रुटितं—छिन्नम्। तया—दास्या। तैः,—पादज्ञैः। तस्य—चर्म्मकारस्य। निमिषेण—केनापिच्छलेन। रेणुपूर्णे—धूलिसमाच्छन्ने। तदेव पदं—पूर्वोक्तं पदचिह्नमित्यर्थः। तस्य—यस्य पादत्राणं तस्य।

(ङ) क्षणेन—तत्क्षणमेव। भोजश्रवणपथविषयं—भोजस्य श्रवणपथः,—कर्णविवरं, तस्य विषयं—गोचरं, श्रुतिगोचरमित्यर्थः। अभिज्ञानवार्त्ता—अभि-ज्ञानेन—पदचिह्नेन, गृहीता वार्त्ता—वृत्तान्तः, यद्वा—अभिज्ञानस्य—यस्य पदचिह्नं तद्वृत्तान्तज्ञानरूपस्य, वार्त्ता।

तच्छ्रुत्वा विलासवतीं प्राह कालिदासः,—"प्रिये! मत्कृते किं कष्टं ते पश्य"। विलासवती,—"सुकवे!—

उपस्थिते विप्लव एव पुंसां
समस्तभावः परिमीयतेऽतः।
अवाति वायौ न हि तूलराशे-
र्गिरेश्च कश्चित् प्रतिभाति भेदः॥ १॥

मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः।
आपन्निकषपाषाणे जनो जानाति सारताम्॥ २॥

उपस्थिते इति।—अतः,—अत्र संसारे इत्यर्थः, [सप्तम्यास्तसिल्] विप्लवे—विपत्तिकाले, उपस्थिते एव—समापतिते एव, पुंसां—नराणां, समस्तभावः,—सत्त्वस्य सारत्वासारत्वादिरूपविशेष इत्यर्थः, परिमीयते—परिमाणविषयीक्रियते, सत्त्वस्य सारत्वासारत्वे गुरुत्वलघुत्वे च परीक्ष्येते इत्यर्थः, जनैरिति शेषः, [परि+मा+कर्मणि लट्-ते]। तथाहि, वायौ—समीरणे, अवाति—अप्रवहति सति, [न+वा+शतृ+७मी १व०] तूलराशेः,—स्तूपीकृततूलस्य, गिरेश्च—पर्वतस्य च, कश्चित्—कोऽपि, भेदः,—वैशिष्ट्यं, न हि—नैव, प्रतिभाति—प्रकाशते, झञ्झामारुते अनुत्पन्ने यथा राशीभूततूलपर्वतयोः परस्परं गौरवलाघवं न परीक्षितुं शक्यते, तथा आपत्काले नागतेऽपि पुंसां सत्त्वस्य गुरुत्वलघुत्वं न परीक्षितुं शक्यते इत्यर्थः; आपदेव पुंसां सत्त्वपरीक्षणोपाय इति भावः। विपद्यपि सम्पदीव अव्याकुलतया अवस्थितः पुमान् सत्त्वसम्पदुपेतः इति ज्ञातव्यं, विपत्तिश्चेयं ते सत्त्वपरीक्षार्थं समुपस्थिता, अतः अधीरो मा भवेति निगूढाशयः। उपेन्द्रवज्रा वृत्तम्॥ १॥

मित्रेति।—जनः,—लोकः, आपन्निकषपाषाणे—आपत्—विपत्तिरेव, निकषपाषाणः,—स्वर्णस्य उत्कर्षापकर्षपरीक्षार्थं प्रस्तरखण्डविशेषः तस्मिन्, मित्रस्वजनबन्धूनां—मित्राणि—सखायः, स्वजनाः,—विशिष्टात्मीयाः पितृमातृभ्रात्रादयः इत्यर्थः, बन्धवः,—पितृव्यादिज्ञातय इत्यर्थः, तेषां, तथा आत्मनः,—स्वस्य, बुद्धेः,—प्रज्ञायाः, धैर्यस्य च—धीरतायाश्च, ("धैर्यस्य" इत्यत्र "वित्तस्य" इति पाठान्तरम्) सारताम्—उत्कर्षं, जानाति—बुध्यते, आपत्कालेऽपि सम्पदि इव अनुरक्ततया अवस्थिता मित्रादयः अकृत्रिमाः अविकृततया अवस्थिता बुद्ध्यादयश्च सारवन्तः ज्ञातव्या इति भावः॥ २॥

अप्रार्थितानि दुःखानि यथैवायान्ति देहिनः।
सुखानि च तथा मन्ये दैवमत्रातिरिच्यते ॥ ३ ॥

सुकवे ! राज्ञा त्वयि (च) मनाङ्निराकृते वचसाऽपि मया सहेदं दासीवृन्दं प्रदीप्तवह्नौ पतिष्यति"। कालिदासः,—"प्रिये ! नैवं मन्तव्यं, मां दृष्ट्वा (छ) विकासीकृताऽऽस्यो भोजः पादयोः पतिष्यति" इति। ततो वेश्यागृहं प्रविश्य भोजः कालिदासं दृष्ट्वा ससम्भ्रममाश्लिष्य पादयोः पतति, स राजा पठति च,—

"गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा।
मा भून्मनः कदाचिन्मे त्वया विरहितं कवे !" ॥ ४ ॥

सुखदुःखयोर्दैवाधीनत्वमाह, अप्रार्थितानीति।—देहिनः,—शरीरिणः, जीवमात्रस्येत्यर्थः, दुःखानि—पीड़ाः, यथा—यद्वत्, अप्रार्थितानि एव—अयाचितान्येव, स्वयमेव इत्यर्थः, आयान्ति—आगच्छन्ति, सुखानि च—सुखान्यपि, तथा—तद्वत्, दुःखवदप्रार्थितान्येवेत्यर्थः, आयान्तीति शेषः, इति मन्ये, अहमिति शेषः, अत्र—सुखदुःखागमने, दैवं—भाग्यम्, अतिरिच्यते—सर्व्वमतीत्य वर्त्तते इत्यर्थः; सुखदुःखापाते दैवमेव प्रधानं मन्ये, न त्वन्यत् किञ्चिदिति भावः। "दैन्यमत्रातिरिच्यते" इति पाठे—अत्र—सुखदुःखागमने, दैन्यं—दीनता, कदा मे सुखमागमिष्यति, कथं वा दुःखमागतमित्यादि दुःखानुभवः, अतिरिच्यते—अतिरिक्तं भवति; ईदृशी चिन्ता अधिकदुःखजननीति भावः ॥ ३ ॥

(च) मनाङ्निराकृते वचसाऽपि—वाक्येनापि, किं पुनः शरीरेणेति भावः; मनाक्—ईषत्, निराकृते—प्रत्याख्याते, इतः दूरीकृते इत्यर्थः, अवमानिते इत्यर्थो वा।

(छ) विकासीकृताऽऽस्यः,—विकासीकृतं—स्मितहास्येन प्रफुल्लीकृतम्, आस्यं—मुखं येन सः तादृशः, हास्यप्रफुल्लवदनः।

कालिदासदर्शनेन प्रमुदितो राजा स्वाभिप्रायं प्रकटयति, गच्छत इति।—गच्छतः,—व्रजतः, वा—अथवा, तिष्ठतोऽपि—आसीनस्यापि, जाग्रतः,—जागरणं कुर्व्वतः, वा—अथवा, स्वपतोऽपि—निद्राणस्य च, सर्वावस्थस्यैवेति भावः, मे—मम, मनः,—चित्तं, कदाचित्—कस्मिन्नपि काले, हे कवे ! त्वया—भवता, विरहितं—शून्यं, त्वत्स्मृतिवियुक्तमिति भावः, मा भूत्—न भवतु, सदैव त्वामहं स्मरामि, स्मरामि, स्मरिष्यामि च इति भावः ॥ ४ ॥

कालिदासस्तच्छ्रुत्वा व्रीडावनताननस्तिष्ठति। राजा च कालिदासमुखमुन्नमय्याऽऽह,—

"कालिदास! कलावास! दासवच्चालितो यदि।
राजमार्गे व्रजन्नत्र परेषां तव का त्रपा? ॥ ५ ॥
धन्यां विलासिनीं मन्ये कालिदासो यदेतया।
निबद्धः स्वगुणैरेषः शकुन्त इव पञ्जरे" ॥ ६ ॥

राजा नेत्रयोः हर्षाश्रु मार्जयति कराभ्यां कालिदासस्य। ततः तत्प्राप्तिप्रसन्नो राजा ब्राह्मणेभ्यः प्रत्येकं लक्षं ददौ, निजतुरगे च कालिदासमारोप्य सपरिवारः निजगृहं ययौ। कियत्यपि कालेऽतिक्रान्ते राजा कदाचित् सन्ध्यामालोक्य प्राह,—

---

कालिदासस्य लज्जाऽपनोदनार्थमाह, कालिदासेति।—हे कलावास!—चतुःषष्टिकलाविद्याया आश्रय! भोः कलानिपुण! इत्यर्थः, कालिदास! यदि—यदा, दासवत्—भृत्यवत्, चालितः,—परिचालितः, प्रेरित इत्यर्थः, त्वद्दर्शनाकाङ्क्षया इति शेषः, राजमार्गे—प्रकाश्यराजपथे, सर्व्वजनसमक्षमिति भावः, व्रजन्—पर्य्यटन्, पादचारी सन् इत्यर्थः, न तु यानादिमध्ये गुप्तभावेनेति भावः; अत्र—अस्मिन् वेश्यालये, समागतोऽहं नापत्रपे इति शेषः ऊहनीयः, तदा तव—वेश्यागृहे मदागमनविषये इत्यर्थः, परेषां—मदितरेषामन्येषां, तवेति यावत्, का त्रपा?—का लज्जा? सज्जनविगर्हितस्य वेश्यालयगमनस्य अतीव निन्दाजनकत्वं जानन्नपि यानादौ आत्मगोपनमकृत्वैव प्रकाश्यराजमार्गे पादचारी अहं त्वद्दर्शनलिप्सया वेश्यालयेऽस्मिन् समागतः यदि न लज्जे, तदा अत्रावस्थितस्य ते मद्दर्शने लज्जा अनुचिता इति भावः ॥ ५ ॥

कालिदासस्य लाभानन्देन तदानन्दहेतुभूतां वेश्यां प्रशंसति, धन्यामिति।—विलासिनीम्—इमां विलासवतीं वाराङ्गनां, धन्यां—श्लाघ्यां, मन्ये—सम्भावयामि; कथं धन्यां मन्ये? इत्यत आह, कालिदास इति।—यत्—यस्मात्, एतया—विलासिन्या, स्वगुणैः,—रूपशीलादिभिर्गुणैः, (पाशैरेति ध्वनिः) पञ्जरे—पक्षिबन्धनालयविशेषे, "पिञ्जर" इति ख्याते, शकुन्त इव—पक्षी इव, ("शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इत्यमरः) एष कालिदासः निबद्धः,—अवरुद्धीकृतः, स्वागारे स्वहृदये वा इति शेषः ॥ ६ ॥

"परिपतति पयोनिधौ पतङ्गः"

ततो बाणः प्राह,—

"सरसिरुहामुदरेषु मत्तभृङ्गः"।

ततो महेश्वरकविः,—

"उपवनतरुकोटरे विहङ्गः"

ततः कालिदासः प्राह,—

"युवतिजनेषु शनैः शनैरनङ्गः" ॥ ७ ॥

तुष्टो राजा लक्षं लक्षं ददौ, चतुर्थचरणस्य लक्षद्वयं ददौ।

[ इति प्रत्यानयने भोज-कालिदाससंवादः ]।

## भोज-आजिनकमण्डलुकविप्रसंवादः।

कदाचिद्राजा वहिरुद्यानमध्ये मार्गं प्रत्यागच्छन्तं कमपि विप्रं ददर्श, तस्य करे चर्म्ममयं कमण्डलुं वीक्ष्य तस्यातिदरिद्रं ज्ञात्वा मुखश्रिया विराजमानञ्चावलोक्य तुरङ्गं तदग्रे

भोजादयः प्रत्येकमेकैकपादेन सन्ध्यां वर्णयन्ति, परिपततीति।—पतङ्गः,—सूर्य्यः, ("पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः) पयोनिधौ—समुद्रे, परिपतति—निमज्जती-त्यर्थः, निमग्न इव दृश्यते लोकैरिति भावः। एवं राज्ञोक्तस्य प्रथमपादस्य पूरणाय बाणादयः शेषपादत्रयं क्रमेणाह, सरसीति।—मत्तभृङ्गः,—उन्मादभ्रमरः. सरसि-रुहां—पद्मानाम्, उदरेषु—अभ्यन्तरेषु, परिपततीति सम्बन्धः, एवमग्रिमपादद्वयेऽपि ; रात्रौ कमलसमुद्रणात् तदभ्यन्तरे अवरुद्धो भवतीत्यर्थः। विहङ्गः,—पक्षी, उपवन-तरुकोटरे—गृहोद्यानस्थवृक्षविवरे ; तत्रस्थनीडे इति भावः। अनङ्गः,—कामः, शनैः शनैः,—मन्दं मन्दं, युवतिजनेषु—तरुणीजनेषु, परिपतति—पदं कुरुते इत्यर्थः, वर्द्धते इति भावः। पुष्पिताग्रा वृत्तम् ॥ ७ ॥

(क) निधायाऽऽह,—"विप्र ! चर्म्मपात्रं किमर्थं पाणौ वहसि ?" इति। स च विप्रः नूनं मुखशोभया मृदूक्त्या च भोज इति विचार्य्याऽऽह,—"देव ! यदान्वयशिरोमणौ भोजे पृथ्वीं शासति लोहताम्राभावः समजनि, तेन चर्म्ममयं पात्रं वहामि" इति। राजा,—"भोजे शासति लोहताम्राभावे को हेतुः ?"। तदा विप्रः पठति,—

"अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम्।
शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः" ॥ १ ॥

ततस्तुष्टो राजा प्रत्यक्षरं लक्षं ददौ।

[ इति भोज-चर्म्मभाजनकमण्डलुकविप्रसंवादः ]।

## भोज-सकुटुम्बविद्वद्विप्रसंवादः।

कदाचिद्द्वारपालः प्राह,—"धारेन्द्र ! दूरदेशादागतः कश्चिद्विद्वान् द्वारि तिष्ठति तत्पत्नी च तत्पुत्रः सपत्नीकः, अतः अतिपवित्रं विद्वत्कुटुम्बं द्वारि तिष्ठति" इति। राजा,—"अहो !

(क) निधाय—संस्थाप्य, चक्षुषोः गतिरोधं कृत्वेत्यर्थः।

एकेनैव श्लोकेन भोजस्य शौर्य्यौदार्य्ये वर्णयति, अस्येति।—अस्य—परिदृश्यमानस्य, श्रीभोजराजस्य, अधिकारे इति शेषः, द्वयमेव—द्विविधमेव, वस्तु इति शेषः, नाधिकमिति भावः; सुदुर्लभम्—अतीव दुष्प्रापम्। तदेव वस्तुद्वयमाह, शत्रूणामिति।—शत्रूणां— रिपूणां, बन्धनार्थमिति शेषः, शृङ्खलैः,—प्रभूतनिगडनिर्म्माणकारणेनेत्यर्थः, लोहम्—अयः, तथा शासनपत्रकैः,—भूमिदानस्य प्रमाणार्थं ताम्रमयपट्टनिर्म्माणेन हेतुनेत्यर्थः, ताम्रं—शुल्वं, सुदुर्लभमित्यन्वयः ॥ १ ॥

(क) गरीयसी शारदाप्रसादपद्धतिः"। तस्मिन्नवसरे गजेन्द्र-
पाल आगत्य राजानं प्रणम्य प्राह,—"भोजेन्द्र! सिंहलदेशा-
धीश्वरेण सपादशतं गजेन्द्राः प्रेषिताः षोड़श महामणयश्च।"
ततो बाणः प्राह,—

"स्थितिः कवीनामिव कुञ्जराणां स्वमन्दिरे वा नृपमन्दिरे वा।
गृहे गृहे किं मशका इवैते भवन्ति भूपालविभूषिताङ्गाः?" ॥१॥

ततो राजा गजावलोकनाय बहिरगात्। ततस्तं विद्वत्-
कुटुम्बं वीक्ष्य चोलपण्डितः,—"राज्ञः प्रियोऽहम्" इति गर्वं
दधार, "यन्मया राजभवनमध्यं गम्यते, विद्वत्कुटुम्बन्तु द्वारपाल-

(क) गरीयसी—गरिष्ठा, महतीत्यर्थः। शारदाप्रसादपद्धतिः,—शार-
दायाः,—शारदं—श्वेतपद्मम् अस्या अस्तीति तस्याः, सरस्वत्याः, प्रसादस्य—अनुग्रहस्य,
पद्धतिः,—पन्थाः, रीतिरिति यावत्; सरस्वत्यां सानुकम्पायां सत्यां सर्व्वमेव सम्भव-
तीति भावः।

प्रभूतगजेन्द्रप्रेषणमाकर्ण्य ततः कतिचित् लिप्सुः बाणः भोजस्य दानशक्ति-
मभ्युक्षणाय आह, स्थितिरिति।—कवीनामिव—काव्यकर्तृणामिव, कुञ्जराणां—
गजानामपि, स्वमन्दिरे वा—निजालये महारण्ये वा, पक्षे—स्वगृहे वा, नृप-
मन्दिरे वा—राजभवने वा, उभयत्रापि समानम्; स्थितिः,—अवस्थानं, भवतीति
शेषः, कवयो यथा नृपाश्रयाप्राप्तौ स्वमन्दिरे एव वर्त्तते, न राजेतरधनवदाश्रयं यान्ति,
तथा गजेन्द्रा अपि राजगृहस्थत्वाभावे स्वनिवासभूमिमेवाध्यासते, नान्यः कश्चिदाढ्यः
तान् पालयितुं शक्नोति इत्येवाभिप्रायते इति भावः। अधुना तु तद्विपरीतमेव
भवेत् इति मनसिकृत्याह, गृहे गृहे इति।—भूपालविभूषिताङ्गाः,—भूपालेन—
भोजनृपेण, विभूषितानि—अलङ्कृतानि, अङ्गानि—अवयवा येषां ते; सालङ्कार-
गजादिदानस्य प्रशस्तत्वादिति भावः; एते—इमे गजाः, मशका इव—क्षुद्रकीट-
विशेषा इव, किं गृहे गृहे—प्रतिगृहे, अर्थिनामिति भावः; भवन्ति—विद्यन्ते?
भविष्यन्ति किमित्यर्थः, [भविष्यत्सामीप्ये वर्त्तमानवत् प्रयोगः]। प्रभूतानेतान् गजेन्द्रान्
दानशौण्डो राजा अवश्यमेव कविभ्यो वितरिष्यति, अत एव नृपावासे स्वावासे वा
गजेन्द्राणां स्थितिरित्येषा प्रसिद्धिर्वितथीकृतेदानीं गृहकीटतुच्छमशकवत् एते प्रति-
कवीनां गृहवर्त्तिनो भविष्यन्तीति भावः। उपेन्द्रवज्रा वृत्तम्॥१॥

ज्ञापितमपि बहिरास्ते।" तदा राजा तच्चेतसि गर्वं विदित्वा चोलपण्डितं सौधाङ्गनात् निःसारितवान्। अत्रान्तरे काशी-देशवासी कोऽपि तण्डुलदेवनामा विप्रः समागत्य राज्ञे "स्वस्ति" इत्युक्त्वाऽतिष्ठत्। राजा च तं पप्रच्छ,—"सुमते! कुत्र निवासः?"। स प्राह,—

"वर्त्तते यत्र सा वाणी कृपाणी रिक्तशाखिनः।
श्रीमन्मालवभूपाल! तत्र देशे वसाम्यहम्" ॥ २ ॥

तुष्टो राजा तस्मै गजेन्द्रसप्तकं ददौ। ततः कोऽपि विद्वा-मागत्य प्राह,—

"तपसः सम्पदः प्राप्यास्तत्तपोऽपि न विद्यते।
येन त्वं भोज! कल्पद्रुदृग्गोचरमुपैष्यसि" ॥ ३ ॥

---

ब्राह्मणः स्वमतेः परिचयमाह, वर्त्तते इति।—यत्र—यस्मिन् देशे, रिक्त-शाखिनः,—रिक्तः,—शून्यः, तुच्छ इत्यर्थः, निरर्थक इति यावत्, ("शून्यन्तु वशिकं तुच्छरिक्तके" इत्यमरः) शाखी—वेदः, वेदचतुष्टयम् इत्यर्थः, यत्र तस्य, वेदनिन्दकस्य वाक्यस्येत्यर्थः, वेदस्तुच्छः, तत्र सारलेशोऽपि नास्ति इत्यादि वेदविरुद्धवाक्यस्येति यावत्, ("शाखी स्यात् पादपे वेदे तुरुष्काख्यजने पुमान्" इति मेदिनी) यद्वा—रिक्तः,—तुच्छः, अनर्थहेतुभूत इत्यर्थः, शाखी—संसारपादप इत्यर्थः, तस्य, कृपाणी—कर्त्तरी छुरिका वा, छुरिकेव छेदिनी इत्यर्थः, ("कृपाणः खड्गे छुरिकाकर्त्तर्योरपि योषिति" इति मेदिनी) सा—प्रसिद्धा, वाणी—वाक्, वेदविरोधिवाक्यजातस्य उच्छेदिनी वेदसम्मतवाक्यजातस्य च प्रवर्त्तिनीत्यर्थः, नास्तिक्यवादविध्वंसिनीति यावत्; "मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा" इत्यादिरूपा अनर्थहेतुसंसारवृक्षच्छेदिनी मोक्षमार्गप्रवृत्तिदायिनी शङ्करावतारस्य शङ्कराचार्य्यस्य वाणीत्यर्थो वा; वर्त्तते—विद्यते, नित्यं प्रसरतीत्यर्थः, श्रीमन् मालवभूपाल!—श्रीः श्रीमन् मालवदेशाधिपते!, (मायाः,—लक्ष्म्याः, संसारमहीरुहस्य शोभाया इत्यर्थः, लव!—छेदक!, नियतशास्त्रानुशीलनेन "संसारोऽयमनित्यः" इत्यादिबोधोत्पादात् संसारिणां तत्रासक्तिह्रासात् इति भावः, इत्यर्थेच ध्वन्यते) तत्र—तस्मिन्, यत्र ईदृशी वाणी वर्त्तते तस्मिन् इत्यर्थः, देशे—काशीप्रदेशे, अहं वसामि—तिष्ठामि ॥ २ ॥

आत्मभाग्यस्य निन्दाच्छलेन भोजस्य पुण्यदर्शनत्वं विवृणोति, तपस इति।—

तस्मै राजा दश गजेन्द्रान् ददौ।

ततः कश्चित् ब्राह्मणपुत्रः (ख) भूम्भारवं कुर्वाणोऽभ्येति, ततः सर्वे सम्भ्रान्ताः। "कथं भूम्भारवं करोषि" इति राज्ञा (ग) स्वदृग्गोचरमानीतः पृष्टः स प्राह,—

"देव! त्वद्दानपाथोधौ दारिद्र्यस्य निमज्जतः।
न कोऽपि हि करालम्बं दत्ते मत्तेभदायक!" ॥ ४ ॥

हे भोज! सम्पदः,—ऐश्वर्याणि, तपसः,—तपश्चरणात्, प्राप्याः,—लभ्याः, किन्तु तत्—तादृशं, तपोऽपि—तपस्याऽपि, न विद्यते—न वर्त्तते, अस्माकमिति शेषः, येन—यावन्मात्रेण तपसा, कल्पद्रुः,—कल्पतरुः, अर्थिमनोरथपूरणात् कल्पवृक्ष इव सर्वाभीष्टप्रद इत्यर्थः, त्वं—भवान्, अपीति शेषः, दृग्गोचरं—दृष्टिविषयीभूतम्, उपैष्यसि—प्राप्स्यसि, [उप+इ+लृट्-स्यसि] तपसा सम्पदो लभन्ते इति प्रसिद्धि-रस्ति, दरिद्राणामस्माकं सम्पल्लाभार्थं तपस्तु दूरे आस्तां, तादृशं तपोऽपि नास्ति, येन भवद्दर्शनसौभाग्यमपि अस्माभिर्लब्धुं शक्यते, इत्यहोऽधन्या वयमिति समुदायार्थः। विनाऽपि तपस्यया त्वद्दर्शनेनैव वयं ससम्पदः सम्भवेम, किन्तु दुरदृष्टहतानामस्माकं तदपि न घटते इति भावः। यदा सुदैववशात् त्वं दृष्टिविषयीभूतः सञ्जातः, तदा मन्यामहे वयमिदानीमदरिद्रा भवेम इत्याशयः॥ १॥

(ख) भूम्भारवं—"भूम्भा" इत्येवमव्यक्तध्वनिविशेषं, "भूँ भूँ भ्या" इत्येवं रोदनध्वनिविशेषमिति यावत्। सम्भ्रान्ताः,—ससाध्वसाः सञ्जाताः, भीता इत्यर्थः, संविग्ना वा, उद्विग्नाः इत्यर्थः। ("सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी)।

(ग) स्वदृग्गोचरं—स्वसमक्षम्।

स्वकृततादृशारवस्य कारणवर्णनच्छलेन भोजस्य बहुप्रदत्वं प्रख्यापयति, देवेति।— हे देव!—हे राजन्!, हे मत्तेभदायक!—मत्तान्—उन्मदान्, इभान्—गजान्, ददातीति तत्सम्बोधने, समदगजप्रदायिन्!, ("मतङ्गजो गजो नागः कुञ्जरो वारणः करी। इभः स्तम्बेरमः पद्मी" इत्यमरः) [मत्तेभ+दा+ण्वकः]; त्वद्दानपाथोधौ— तव दानं—वितरणं, पाथोधिः,—समुद्र इव; तव दानेन—दानकाले याचकहस्ते दत्तेन जलेन इत्यर्थः, जातः यः पाथोधिः,—पाथांसि—जलानि, ("—सलिलं कमलं जलम्। कबन्धमुदकं पाथः" इत्यमरः) धीयन्ते अस्मिन् इति, समुद्रः, [पाथस्+ धा+"कर्मण्यधिकरणे च" (३।३।९३ पा०) इति किः] इति वा; तस्मिन्,

ततस्तुष्टो राजा तस्मै त्रिंशत् गजेन्द्रान् प्रादात्।

ततः प्रविशति पत्नीसहितः कोऽपि विलोचनो विद्वान्। स "स्वस्ति" इत्युक्त्वा प्राह,—

"निजानपि गजान् भोजं ददानं प्रेक्ष्य पार्वती।
गजेन्द्रवदनं पुत्रं रक्षत्यद्य पुनः पुनः" ॥ ५ ॥

ततो राजा सप्त गजान् तस्मै ददौ।

ततो राजा विद्वत्कुटुम्बं तदैव पुरतः स्थितं वीक्ष्य ब्राह्मणं प्राह,—

"क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।"

वृद्धद्विजः प्राह,—

"घटो जन्मस्थानं मृगपरिजनो भूर्जवसनः
वने वासः कन्दादिकमशनमेवंविधगुणः।

निमज्जतः,—निमग्नीभवतः, दारिद्र्यस्य—दरिद्रतायाः, कोऽपि हि—कश्चिदेव हि, जन इति शेषः, करालम्बं—हस्तावलम्बनं, निमज्जतस्तस्य उद्धारार्थं हस्तरूपमाश्रय-मित्यर्थः, न दत्ते—न ददाति ; हे महाराज! त्वं दारिद्र्यक्लिष्टान् उद्धर्तुं बहून् करिणो ददासि, किन्तु त्वद्दानेन निरवलम्बनस्य तस्य वराकस्य दारिद्र्यस्य उद्धारार्थं कोऽपि करमपि न ददाति इत्यहो दुःखमित्यर्थः ; तव वदान्यतया जगतोऽस्मात् दारिद्र्यहतकं सर्वथा विनष्टं, सर्वे च दरिद्राः सम्पन्नाः सञ्जाता इति तात्पर्य्यम् ॥ ४ ॥

भोजस्य दानप्राचुर्य्येण देवतानामपि भयं सञ्जातमित्यभिप्रायेणाह, निजानिति।—पार्वती—दुर्गादेवी, भोजं—भोजराजं त्वां, निजान्—स्वकीयान्, गजानपि—हस्तिनोऽपि, ददानं—प्रयच्छन्तं, प्रेक्ष्य—विलोक्य, गजेन्द्रवदनं—हस्तिमुखं, पुत्र—तनयं गणेशम्, अद्य—अस्मिन् अहनि, तव हस्तिवितरणदिने इत्यर्थः, पुनः पुनः,—वारं वारं, रक्षति—गोपायतीत्यर्थः ; गजमुखं दृष्ट्वा गजमिति मन्यमानेन भवता तस्यापि वितरणाशङ्कयेति भावः ॥ ५ ॥

"क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे" इति भोजपृष्टसमस्यां पूरयितु-माह, घट इति।—घटः,—कुम्भः, तुच्छः जड़ः मृत्कलस इति भावः ; जन्मस्थानम्—उत्पत्तिस्थानम्, अगस्त्यस्य कुम्भयोनित्वादिति भावः ; ("अगस्त्यः कुम्भसम्भवः" इत्यमरः) मृगपरिजनः,—मृगाः,—हरिणाः, परिजनाः,—परिवारा यस्य सः,

अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे" ॥ ६ ॥

ततो राजा बहुमूल्यानपि षोड़श मणीन् तस्मै ददौ।
ततस्तत्पत्नीं प्राह राजा,—"अम्ब! त्वमपि पठ"।
देवी,—"रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे" ॥ ७ ॥

पशुजातिभिः सह वासकारीत्यर्थः, न तु महत्संसर्गी इति भावः; भूर्जवसनः,—भूर्जः,—वृक्षविशेषः, भूर्जवल्कलमिति यावत्, वसनं—परिधेयः यस्य तादृशः, सम्बल-विहीन इति भावः; वने—अरण्ये, वासः,—वसतिः, विषयबोधविहीन इति भावः, कन्दादिकं—कन्दमूलफलादिकम्, अशनं—भोजनं, न तु घृतदुग्धमांसादिकं सारवत् वस्तु इति भावः; एवंविधगुणः,—उक्तविधगुणविशिष्टः, अथवालभ्यतुच्छोपकरण-वानिति भावः, अगस्त्यः,—तदाख्यमुनिविशेषः, पाथोधिं—समुद्रं, यत् करा-म्भोजकुहरे—पाणिकमलरन्ध्रे, रन्ध्रवत्परिकल्पितकराञ्जलौ इत्यर्थः, अकृत—अकरोत्, गण्डूषार्थं हस्ते अस्थापयदित्यर्थः, तेन एतत् ज्ञायते इत्यूहनीयम्; महतां—महाजनानां, क्रियासिद्धिः,—कार्य्यनिष्पत्तिः, सत्त्वे—व्यवसाये, उद्यमे इत्यर्थः, मनसि वा, मानसिकबले इत्यर्थः, ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वे व्यवसायासुचित्तेष्वस्त्री तु जन्तुषु॥" इति मेदिनी) भवति—सम्पद्यते, उप-करणे—वीर्य्यवत्सहायाद्युपाये, न, भवतीति अन्वयः; उद्यम एव कार्य्यसिद्धिहेतुः, न तु बलवत्सहायादिकमिति भावः। शिखरिणी वृत्तम् ॥ ६ ॥

प्रकारान्तरेण समस्यां पूरयितुमाह, रथस्येति।—रथस्य—स्यन्दनस्य, एकम्—एकमात्रं, न तु चतुःसङ्ख्याकमित्यर्थः, चक्रं—चरणम्, एकचक्रत्वात् रथः द्रुतगमनाक्षमः इति भावः; सप्त—सप्तसङ्ख्याकाः, तुरगाः,—अश्वाः, रथयोजिता इति शेषः, सूर्य्यस्य सप्ताश्वत्वं प्रसिद्धम्; भुजगयमिताः,—भुजगैः,—सर्पैः, प्रग्रहीभूतैरिति भावः; यमिताः,—बद्धाः, नागपाशबद्धत्वेन संयतगतिकत्वात् द्रुतगमनाक्षमा इति भावः; ("भुजगनमिताः" इति पाठे—नागपाशबद्धत्वेन सङ्कुचितदेहा इत्यर्थः) मार्गः,—पन्थाः, निरालम्बः,—आलम्बनरहितः, शून्य इत्यर्थः, भूम्यादिकठिनालम्बनरहितत्वा-

राजा तुष्टः सप्तदश गजान् सप्त रथांश्च तस्मै ददौ। ततो विप्रपुत्रं प्राह राजा,—"विप्रसुत! त्वमपि पठ।"

विप्रसुतः,—"विजेतव्या लङ्का चरणतरणीयो जलनिधि-
विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः।
पदातिर्मर्त्योऽसौ सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे" ॥८॥

---

दपि दुर्गमनाशक्त इति भावः; सारथिः,—रथचालकः अरुणः, चरणविकलः,—चरणाभ्यां विकलः,—विहीनः, पादहीनः, अरुणस्य पादविहीनत्वं प्रसिद्धं, ("सूरसूतोऽरुणोऽनूरुः" इत्यमरः) सारथिरपि विकलाङ्गत्वात् कर्मापटुरिति भावः; रविः,—सूर्यः, एवंविधविकृतोपकरणवानपीति भावः; प्रतिदिनं—प्रत्यहम्, अपारस्य—अनन्तस्य, सीमारहितस्य इत्यर्थः, नभसः,—आकाशस्य, अन्तं—शेषं, सीमाप्रदेशमित्यर्थः, उदयाचलात् निःसृत्य अस्ताचलपर्य्यन्तमिति यावत्, यात्येव—गच्छत्येव, अमणसहायानां विकृतत्वेऽपि सुदीर्घमध्वानमतिक्रम्य प्रतिदिनमेव ... मध्यस्थानं केवलमुद्यमाधिक्यादेव गच्छति, तत्र न काऽपि बाधा सञ्जायते, अतः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ शिखरिणी वृत्तम् ॥ ७ ॥

विजेतव्येति।—लङ्का—सागरवेष्टिता प्रसिद्धा राक्षसनगरी, देवदानवैरपि दुराक्रम्या इति भावः; विजेतव्या—पराजेतव्या, वशीकरणीया इत्यर्थः, [ वि + जि + तव्य + टाप् ] जलनिधिः,—दुर्लङ्घ्यः सागरः, चरणतरणीयः,—चरणाभ्यां—पादाभ्यां, तरणीयः,—अतिक्रमणीयः, यस्तु पोतादिभिरपि लङ्घयितुमशक्यः, पादाभ्यां तदतिक्रमणस्य अतीवाशक्यत्वमेवेति भावः; पौलस्त्यः,—रावणः, त्रिलोकविजयीति भावः; विपक्षः,—शत्रुः, रणभुवि—युद्धक्षेत्रे, कपयः,—वानराः, सहायाः,—साहाय्यकारिणः, सैन्याः इत्यर्थः, नगण्याः बुद्धिहीनाः पशवः किमपि महत् कार्य्यं साधयितुमक्षमा दुष्टसहाया इति भावः; पदातिः,—स्वयं पादचारी, युद्धोपकरणरथादिपरिशून्य इति भावः; मर्त्यः,—मानुषः, दुर्बलः, राक्षसभक्ष्यः मरणधर्मा चेति भावः; यो हि अमराणामपि विजेता, तस्य मर्त्यविजये कथैव नास्तीति तात्पर्य्यम्; असौ—पूर्वोक्तप्रकारदुःसाध्यकर्म्मसम्पादनीयतः क्षुद्रोपकरणवांश्च सुप्रसिद्धः स रामचन्द्रः, सकलं—कृत्स्नं, राक्षसकुलं—निशाचरवंशम्, अवधीत्—विनाशयामास, [ हन + लुङ्-द "लुङि च" (२।४।४३ पा०) इति वधादेशः ]। अतः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे। शिखरिणी वृत्तम् ॥ ८ ॥

तुष्टो राजा विप्रसुताय अष्टादश गजेन्द्रान् प्रादात्।

ततः (घ) सुकुमारमनोज्ञनिखिलावयवालङ्कृतां शृङ्गाररसोपजातमूर्त्तिमिव चम्पकलतामिव लावण्यगात्रयष्टिं विप्रस्नुषां वीक्ष्य "नूनं भारत्याः काऽपि लीलाकृतिरियम्" इति चेतसि नमस्कृत्य राजा प्राह,—"मातः! त्वमप्याशिषं वद।" विप्रस्नुषा,—"देव! शृणु,—

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जड़ात्मा हिमकरः।
स्वयञ्चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे" ॥ ८ ॥

---

(घ) सुकुमारेति।—सुकुमारैः,—सुकोमलैः, मनोज्ञैः,—रमणीयैः, निखिलैः,—कृत्स्नैः, अवयवैः,—अङ्गैः, अलङ्कृतां—भूषितां, कमनीयसर्वाङ्गप्रत्यङ्गोपेताम्। शृङ्गारेति।—शृङ्गाररसेन—तदाख्यादिरसेन, उपजाता—निर्मिता, मूर्त्तिः,—आकृतिः यस्याः तामिव, उपकरणीभूतेन शृङ्गाररसेनैव घटिताकारामित्यर्थः, मूर्त्तः शृङ्गाररस इवावस्थितामित्यर्थो वा; दर्शनमात्रेणैव चित्ताह्लादिनीमिति भावः। लावण्येति।—लावण्येन—"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणेन कान्तिविशेषेण, पूर्णा गात्रयष्टिः,—देहलता यस्यास्तां, यष्टिवत्सरलक्षीणदेहाम् इत्यर्थः। विप्रस्नुषां—ब्राह्मणस्य पुत्रवधूम्। लीलाकृतिः,—क्रीड़ामूर्त्तिः, लीलार्थं परिगृहीतमूर्त्तिविशेष इत्यर्थः।

धनुरिति।—धनुः,—शरासनं, पौष्पं—कुसुममयं, कुसुमनिर्मितमित्यर्थः, अतीव सुकोमलत्वात् त्रिभुवनविजयानुपयोगि इति भावः; मौर्वी—ज्या, धनुर्गुण इत्यर्थः, मधुकरमयी—भ्रमरात्मिका, भ्रमररचिता इत्यर्थः, मधुकरावली एव मौर्वीरूपेण नियोजिता इति यावत्, काठिन्यभावविवर्जितत्वात् सदा चञ्चलत्वाच्च कार्यानुपयोगिनी इति भावः; बाणः,—शरः, चञ्चलदृशां—चटुलनयनानामङ्गनानां, दृशां—चक्षुषां, कोणः,—प्रान्तः, अपाङ्ग इत्यर्थः, कटाक्षवीक्षणमिति यावत्; अमूर्त्तत्वात् अलौहमयत्वाच्च पूर्ववत् विजयसाधनानर्ह इति भावः; सुहृदपि—मित्रञ्च, त्रिभुवनविजये सहायस्तु इति यावत्, जड़ात्मा—हिमाहतस्वरूपः, तुषारमय इत्यर्थः, अथच जड़ात्मा—मूर्खः, सदसद्विवेकरहित इत्यर्थः, ("जड़ो मूर्खे हिमाघाते" इति

चमत्कृतो राजा लीलादेवीभूषणानि सर्वाण्यादाय तस्मै ददौ (क) अनर्घ्यांश्च सुवर्णमौक्तिकवैदूर्य्यप्रवालांश्च प्रददौ।

[इति भोज-सकुटुम्बविद्वद्विप्रसंवादः]।

## भोज-सीमन्तसंवादः।

ततः कदाचित् सीमन्तनामा कविः प्राह,—

"पन्थाः! संहर दीर्घतां त्यज निजं तेजः कठोरं रवे!
श्रीमन् विन्ध्यगिरे! प्रसीद सदयं सद्यः समीपे भव।

विधः) हिमकरः,—चन्द्रः, जड़ात्मत्वात् सर्वथा कर्माक्षम इति भावः; स्वयश्च—आत्मना च, एकः,—द्वितीयविरहितः, चन्द्रसहायत्वेऽपि तस्य जड़ात्मत्वात् निःसहाय इति भावः; अनङ्गः,—कामः, अङ्गराहित्यात् अकर्मण्य इति भावः; सकलभुवनं—निखिलं जगत्, जगद्वासिनो जनानित्यर्थः, व्याकुलयति—विह्वलीकरोति, अतः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे इति। शिखरिणी वृत्तम्॥ ८॥

(क) अनर्घ्यान्—बहुमूल्यान्।

भोजप्रतापं वर्णयति, पन्था इति।—पन्थाः!—हे मार्ग!, दीर्घतां—दैर्घ्यं, दूरत्वमित्यर्थः, संहर—सङ्कोचय, अल्पीकुरु इत्यर्थः, कोमलाङ्गीनामासां दीर्घपथपर्य्यटनाक्षमत्वात् हे विन्ध्याचलगामिमार्ग! त्वं दूरत्वं परिहाय समीपीभव, तेन एताः सत्वरं गन्तव्यस्थानं प्राप्नुवन्तीति भावः। रवे!—भोः सूर्य्यदेव!, निजं—स्वं, कठोरं—तीव्रं, तेजः,—किरणमित्यर्थः, त्यज—परिहर, स्वकीयतिग्मतेजःसङ्कोचेन किञ्चिच्छायां वितर, येन प्रियाया आतपबाधा न जायेत इति भावः। श्रीमन् विन्ध्यगिरे!—भो रमणीयविन्ध्याचल!, प्रसीद—प्रसन्नो भव, सदयं—सकृपं, प्रसन्नो भूत्वा सानुकम्पं यथा तथा इत्यर्थः, सद्यः,—झटिति, समीपे—निकटे, भव—

इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं
श्रीमन् भोज ! तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च" ॥१॥

तस्मिन्नेव क्षणे कश्चित् सुवर्णकारः प्रान्तेषु पद्मरागमणि-मण्डितं सुवर्णभाजनमादाय राज्ञः पुरो (क) मुमोच। ततो राजा सीमन्तकविं प्राह,—"सुकवे ! इदं (ख) भाजनं कामपि श्रियं दर्शयति।" ततः कविराह,—

"धारेश ! त्वत्प्रतापेन पराभूतस्त्विषाम्पतिः।
सुवर्णपात्रव्याजेन देव ! त्वामिव सेवते" ॥ २ ॥

ततस्तुष्टो राजा तदेव पात्रं मुक्ताफलैरापूर्य्य प्रादात्।

[ इति भोज-सीमन्तसंवादः ]।

समागच्छेत्यर्थः, प्रेयसी मे इतः पुनश्चलितुमसमर्था, कृपया त्वं झटिति एतत्समीप-मागच्छ, येनेयं शीघ्रं त्वयि आश्रयं लब्ध्वा प्रसुप्य आत्मानं गोपायितुं समर्था भवे-दिति भावः। श्रीमन् भोज !—भो ऐश्वर्य्यशालिन् भोजराज !, तव द्विषः,—शत्रवः, त्वयाऽपहृतराज्यसम्पत्तय इति भावः; निजप्रेयसीं—स्वप्रियां, दूरपलायनश्रमवतीं—दूरपलायनेन—बहुदूरात् पलायनेन हेतुना, श्रमवतीं—परिश्रान्तां, दृष्ट्वा—अवलोक्य, प्रतिदिनं—प्रत्यहम्, इत्थम्—उक्तप्रकारेण, जल्पन्ति—कथयन्ति, विलपन्तीत्यर्थः, मूर्च्छन्ति च—मोहं गच्छन्ति च; रिपवस्ते त्वद्भयात् राज्यधनादिकं त्यक्त्वा सपरिवारा अरण्यमाश्रिता इत्यहो ते प्रतापोत्कर्ष इति भावः॥ शार्दूलविक्रीडितम्॥ १॥

(क) मुमोच—चिक्षेप, स्थापयामासेत्यर्थः। आवरणमिति शेषो वा, आव-रणोन्मोचनं चकारेत्यर्थः। [ मुच + लिट्-णल् ]।

(ख) भाजनं—पात्रम्। कामपि—अनिर्व्वचनीयामित्यर्थः। श्रियं—शोभाम्।

स्वर्णपात्रं लक्ष्यीकृत्य भोजप्रतापं वर्णयति, धारेशेति।—देव ! धारेश !—हे धाराधिपते !, त्वत्प्रतापेन—भवत्प्रभावेण, पराभूतः,—पराजितः, त्विषाम्पतिः,—सूर्य्यः, सुवर्णपात्रव्याजेन—स्वर्णभाजनच्छलेन, स्वर्णपात्ररूपं धृत्वेत्यर्थः, त्वामिव—भवन्तमेव, सेवते—परिचरति, सेवार्थं त्वामाश्रयतीत्यर्थः; सुवर्णभाजनमिदं प्रभया बालार्कोज्ज्वलमिति भावः॥ २॥

# भोज-द्विजवरसंवादः ।

कदाचिद्राजा मृगयारसेन पुरः पलायमानं वराहं दृष्ट्वा स्वयमेकाकितया दूरं वनान्तमासादितवान् । तत्र कञ्चन द्विजवरमवलोक्य प्राह,—"द्विज ! कुत्र गन्तासि ?" द्विजः,—"धारानगरम् ।" भोजः,—"किमर्थम् ?" द्विजः,—"भोजं द्रष्टुं द्रविणेच्छया, स पण्डिताय दत्ते, अहमपि मूर्खं न याचे ।" भोजः,—"विप्र ! तर्हि त्वं विद्वान् कविर्वा ।" द्विजः,—"महाभाग ! कविरहम् ।" भोजः,—"तर्हि किमपि पठ ।" द्विजः,—"भोजं विना (क) मत्पदसरणिं न कोऽपि जानाति ।" राजा,—"ममापि (ख) अमरवाणीपरिज्ञानमस्ति, राजा च मयि स्निह्यति, त्वद्गुणांश्च श्रावयिष्यामि, किमपि कलाकौशलं दर्शय ।" विप्रः,—"किं वर्णयामि ?" राजा,—(ग) "कलमानेतान् वर्णय ।" विप्रः,—

(क) मत्पदसरणिं—मम पदानां—वाक्यानां, सरणिं—पङ्क्तिं, रचनापरिपाटीमित्यर्थः ; यद्वा—मम पदस्य—श्लोकपादस्य, अपीति शेषः, सरणिं—मार्गं, श्लोकपादस्यापि रचनापद्धतिमित्यर्थः । ("पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः । श्लोकपादेऽपि च क्लीवम्" इति । "सरणिः पङ्क्तौ मार्गे च" इत्युभयत्रापि मेदिनी ) । न जानाति—न अवबुध्यते, समं ग्रहणं कर्तुं न शक्नोतीत्यर्थः ।

(ख) अमरवाणीपरिज्ञानं—देवभाषायां नैपुण्यम् । श्रावयिष्यामि, भोजायेति शेषः । [ श्रु + णिच् + लृट्-स्यामि ] । कलाकौशलं—कलाविद्यानैपुण्यं, कविता-रचनाचातुर्यमिति यावत् ।

(ग) कलमान्—शालीन्, धान्यवृक्षानित्यर्थः । ("कलमः पुंसि लेखन्यां शालौ पटच्चरेऽपि च" इति मेदिनी ) ।

"कलमाः पाकविनम्राः मूलतलाऽऽघ्रातसुरभिकह्लाराः ।
पवनाऽऽकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम्" ॥१॥

राजा तस्मै सर्वाभरणानि उत्तार्य्य ददौ ।

[ इति भोज-विप्रवरसंवादः ] ।

## भोज-कुम्भकारसंवादः ।

ततः कदाचित् कुम्भकारवधूः राजगृहमेत्य द्वारपालं प्राह,—"द्वारपाल ! राजा द्रष्टव्यः ।" स आह,—"किन्ते राज्ञा कार्य्यम् ?" । सा चाऽऽह,—"न तेऽभिधास्यामि, नृपाग्रे एव कथयामि ।" स सभायामागत्य प्राह,—"देव ! कुम्भकारप्रिया काचित् राज्ञो दर्शनाऽऽकाङ्क्षिणी, न वक्ति मत्पुरः कार्य्यं,

कलमान् वर्णयति, कलमा इति ।—पाकविनम्राः,—पाकेन—परिणामेन, परिणतफलेनेत्यर्थः, विनम्राः,—अवनताः, अत एव मूलतलाऽऽघ्रातसुरभिकह्लाराः,—मूलतलं—मूलदेशः, निम्नभागस्थजले इत्यर्थः, आघ्रातं—घ्राणविषयीकृतं, सुरभि—सुगन्धि, कह्लारं—सौगन्धिकं, श्वेतोत्पलविशेष इत्यर्थः, यैस्ते तादृशाः, मूलस्थजले प्रस्फुटितानां सुगन्धिकह्लाराणां गन्धमाघ्रातुं शिर अवनम्य स्थिता इव परिदृश्यमाना इत्यर्थः, कलमाः,—शालयः, धान्यगुच्छा इत्यर्थः, पवनाकम्पितशिरसः,—पवनेन—वायुना, मन्दानिलेनेत्यर्थः, आकम्पितानि—ईषच्चालितानि, शिरांसि—शीर्षदेशाः, अग्रभागा इत्यर्थः, येषां तादृशाः, मन्दानिलान्दोलिताग्रभागाः सन्तः, प्रायः,—विशेषेण, परिमलश्लाघां—परिमलस्य—कह्लारामोदस्य, श्लाघां—प्रशंसां, कुर्वन्ति, इवेति शेषः ; फलपरिणामेन स्वभावत एव अवनतशीर्षाः कलमा एवं परिदृश्यन्ते यत् ते अधःस्थजले विराजमानानां कह्लाराणां सौरभं शिरोऽवनम्य आघ्राय अतिसुरभि इदं, नैतादृशं सुगन्धं कस्याप्यस्ति इति वातान्दोलितशिरश्चालनव्याजेन तत्परिमलान् प्रशंसन्तीवेति निष्कृष्टार्थः । उपगीतिः छन्दः ॥ १ ॥

त्वत्पुरतः कथयिष्यति।" राजा,—"प्रवेशय।" सा चाऽऽगत्य नमस्कृत्य वक्ति,—

"देव! मृत्खननाद्दृष्टं निधानं वल्लभेन मे।
स पश्यन् एव तत्राऽऽस्ते त्वां ज्ञापयितुमभ्यगाम्" ॥ १ ॥

राजा च चमत्कृतो निधानकलशमानाययामास। तद्द्वारमुद्घाट्य यावत् पश्यति राजा, तावत् (क) तदन्तर्वर्त्तिद्रव्यमणिप्रभामण्डलमालोक्य कुम्भकारं पृच्छति,—"किमेतत्? कुम्भकार!"। स चाऽऽह,—

"राजचन्द्रं समालोक्य त्वान्तु भूतलमागतम्।
रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन्" ॥ २ ॥

राजा कुम्भकारमुखात् श्लोकं लोकोत्तरमाकर्ण्य चमत्कृतः तस्मै सर्वं ददौ।

[ इति भोज-कुम्भकारसंवादः ]।

देवेति।—देव!—हे राजन्!, मे—मम, वल्लभेन—प्रियेण, स्वामिनेत्यर्थः, मृत्खननात्—मृत्तिकाखननाद्धेतोः, मृत्तिकाखननं समारभ्य इति वा, मृत्तिकाखननकाले इत्यर्थः, निधानं—निधिः, भूगर्भस्थरत्नादिरित्यर्थः, दृष्टम्—अवलोकितम्; सः,—मे वल्लभः, पश्यन्—निधिं विलोकयन्, तत्र एव—तस्मिन् एव, खननस्थाने एवेत्यर्थः, आस्ते—तिष्ठति, त्वां—भवन्तं, ज्ञापयितुं—निवेदयितुम्, अभ्यगां—समागमम्, अहमिति शेषः। [अभि+इ+लुङ्-अम्; "इणो गा लुङि" (२।४।४५ पा०) इति गाऽऽदेशः] ॥ १ ॥

(क) तदिति।—तदन्तर्वर्त्तिनां—तन्मध्यस्थानां, द्रव्याणां—वस्तूनां, भूषणजातानामित्यर्थः, मणीनां—रत्नानाञ्च, यद्वा—तदन्तर्वर्त्तिद्रव्येषु ये मणयः तेषां प्रभामण्डलं—किरणसमूहम्।

राजेति।—राजा एव चन्द्रः,—तारापतिः तं राजचन्द्रं—सर्वलोकाह्लादकं राजरूपेणावतीर्णं शशधरं, त्वान्तु—भवन्तमेव, भूतलं—पृथिवीतलम्, आगतं—समुपस्थितं, नभस्तलं विहायेति शेषः, समालोक्य—परिदृश्य, मन्ये—सम्भावयामि, अहमिति शेषः, रत्नश्रेणिमिषात्—मणिराजीच्छलेन, रत्नराशिरूपमवलम्ब्येत्यर्थः, नक्षत्राणि—तारकाः, चन्द्रप्रेयस्य इति भावः; अभ्युपागमन्—समवातरन्, भूतलमिति

# भोज-वैश्यसंवादः ।

ततः कदाचिद्राजा रात्रावेकाकी (क) सर्वतो नगरचेष्टितं पश्यन् पौरगिरमाकर्णयन् चचार । तदा क्वचिद्वैश्यगृहे वैश्यः स्वप्रियां प्राह,—"प्रिये ! राजा स्वल्पदानरतोऽपि उज्जयिनी-नगराधिपतेर्विक्रमार्कस्य ( ख ) दानप्रतिष्ठां काङ्क्षते, सा किं भोजेन प्राप्यते ? कैश्चित् स्तोत्रपरायणैर्मयूरादिकविभिर्महि-मानं प्रापितो भोजः, परन्तु भोजो भोज एव । प्रिये ! शृणु,—

आबद्धकृत्रिमसटाजटिलांसभित्ति-<br>रारोपितो यदि पदं मृगवैरिणः श्वा ।<br>मत्तेभकुम्भतटपाटनलम्पटस्य<br>नादं करिष्यति कथं हरिणाधिपस्य ?" ॥ १ ॥

---

शेषः, प्रियदर्शनार्थमिति भावः ; [ अभि + उप + आ + गम + लुङ् अन् ] । चन्द्र-तुल्यो भवान् सर्व्वलोकाह्लादकः कान्ततमश्च इति तात्पर्य्यम् ॥ २ ॥

---

( क ) सर्व्वतः,—समन्तात् । नगरचेष्टितं—नगरवासिजनानां कार्य्यजातम् । पौरगिरं—पुरवासिजनानां विस्रब्धालापमित्यर्थः ।

( ख ) दानप्रतिष्ठां—दानजनितां प्रतिष्ठां—गौरवं, ख्यातिमित्यर्थः । ( "प्रतिष्ठा गौरवे स्थितौ । स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः ॥" इति मेदिनी ) । सा—प्रतिष्ठा । प्राप्यते ?—प्राप्तुं शक्यते ? नैवेत्यर्थः । स्तोत्रपरायणैः,—अयथास्तुति-परैरित्यर्थः, चाटुवादनिरतैरिति यावत् । महिमानं—महत्त्वं, गौरवमित्यर्थः ।

दृष्टान्तमुखेन भोजविक्रमयोरन्तरं प्रदर्शयति, आबद्धेति ।—आबद्धकृत्रिमसटा-जटिलांसभित्तिः,—आबद्धाभिः,—घटिताभिः, समारोपिताभिरित्यर्थः, कृत्रिमाभिः,—क्रियानिष्पन्नाभिः, कल्पिताभिरिति यावत्, सटाभिः,—केशरैः, ("सटा जटा-केशरयोः" इत्यमरः ) जटिला—जटायुक्ता, सकेशरवत् परिदृश्यमाना इत्यर्थः,

राजा श्रुत्वा विचारितवान्,—"असौ सत्यमेव वदति।" ततः पुनः पुनर्वदन्तं शृणोति,—

"आपन्न एव पात्रं देहीत्युच्चारणं न वैदुष्यम्।
उपपन्नमेव देयं त्यागस्ते विक्रमार्क ! किमु वर्ण्यः ? ॥२॥

अंसभित्तिः,—स्कन्धदेशो यस्य तादृशः, श्वा—कुक्कुरः, यदि—चेत्, मृगवैरिणः,—सिंहस्य, पदं—स्थानम्, अधिकार इति यावत्, आरोपितः,—अधिष्ठापितः, स्यादिति शेषः, कविमर्कटप्रशंसारोपणादिभिः श्वा यदि सिंहवत् परिदृश्यमानो भवेदित्यर्थः, तथाऽपि, मत्तेभकुम्भतटपाटनलम्पटस्य—मत्तानां—समदानाम्, इभानां—गजानां, कुम्भतटयोः,—शिरःस्थपिण्डाकारांशविशेषयोः, पाटने—विदारणे, लम्पटस्य—आसक्तस्य, हरिणाधिपस्य—मृगराजस्य सिंहस्य, नादं—ध्वनिं, सिंहगर्जनवत् गर्जनमित्यर्थः, कथं—केन प्रकारेण, करिष्यति ? कर्त्तुं शक्ष्यति ? न कथमपीत्यर्थः, शतप्रयत्नेनापि श्वा श्वा एव तिष्ठति, न कदाऽपि सिंहो भविष्यतीति निष्कर्षः ; मिथ्यास्तुतिपरैश्चाटुभाषिभिः गौरवस्य उत्तुङ्गशिखरमध्यारोपितोऽपि भोजः भोज एव स्थास्यति, न कदाऽपि विक्रमार्को भविष्यतीति तात्पर्य्यम्। वसन्ततिलकं वृत्तम् ॥ १ ॥

विक्रमादित्यस्य दाने वैशिष्ट्यं प्रदर्शयति, आपन्न इति।—आपन्नः,—आपद्युक्तः, विपन्नो जन इत्यर्थः, एव, शत्रुर्वा मित्रं वा, यः कश्चिदापन्नः स एवेत्यर्थः, यद्वा—आपन्न एव—प्राप्त एव, विक्रमसमीपे समुपस्थित एवेत्यर्थः, पात्रम्—आस्पदं, दानयोग्यः इत्यर्थः, यः कश्चित् तत्समीपे समागच्छत्, अयाचित एव तस्मै स प्रभूतं अददात् इत्यर्थः, देहि—मह्यं देहि, इति उच्चारणं—भाषणं, प्रार्थनावचनमित्यर्थः, वैदुष्यं—विद्वत्सम्बन्धि, पण्डितजनोच्चारितमित्यर्थः, न, इतरेऽर्थिनः देहि इति वचनं प्रायुञ्जत, परन्तु कोऽपि पण्डितः तादृशं वचनं नैव प्रायुङ्क्त, तादृशवचनप्रयोगात् प्रागेव तेषामभीष्टार्थसिद्धेरिति भावः। यद्वा,—पण्डितः कोऽपि देहीत्युच्चारणं नैव करोति, प्रत्युत भवान् एव "अस्मै देहि" इत्युदचरत् इति भावः ; उपपन्नमेव—युक्तियुक्तमेव, देयं—दातव्यं, भवतीति शेषः, भवान् यस्मै यददात् तत् तस्य उपयुक्तमेव अभवत्, सर्वेभ्य एव भूरिदो भवानिति भावः ; अत एव हे विक्रमार्क !—पराक्रमेण मार्त्तण्डसदृश ! ते—तव, त्यागः,—दानं, किमु वर्ण्यः ?—कथं वर्णयितुं शक्यः ? नैव शक्य इत्यर्थः, तव अप्रमेयस्य दानस्य वर्णनां कर्त्तुं वयमक्षमा एवेति निष्कर्षः। [ वर्णि + यः ]। उपगीतिश्छन्दः ॥ २ ॥

विक्रमार्क ! त्वया दत्तं श्रीमन् ! ग्रामशताष्टकम्।
अर्थिने द्विजपुत्राय भोजे त्वन्महिमा कुतः ? ॥ ३ ॥
प्राप्नोति कुम्भकारोऽपि महिमानं प्रजापतेः।
यदि भोजोऽप्यवाप्नोति प्रतिष्ठां तव विक्रम !" ॥ ४ ॥

राजा—"लोके सर्वोऽपि जनः स्वगृहे निःशङ्कं सत्यं वदति, मया वा अन्येन वा सर्वथा विक्रमार्कप्रतिष्ठा न शक्या प्राप्तुम्।"

[ इति भोज-वैश्यसंवादः ]।

विक्रमस्य दानं विवृणोति, विक्रमार्केति।—श्रीमन् !—हे ऐश्वर्य्यसम्पन्न ! विक्रमार्क !, अर्थिने—याचकाय, द्विजपुत्राय—विप्रसुताय, त्वया—भवता, ग्रामशताष्टकम्—अष्टोत्तरशतसङ्ख्यकः ग्रामः, दत्तं—वितरितं, भोजे—भोजराजे, स्वल्पदे इति भावः ; त्वन्महिमा—भवतो महत्त्वं, कुतः ?—कुत्र ? स्वल्पप्रदाणो भोजः भवत्सदृशीं दानक्षमतां कुतो लभेत इत्यर्थः ॥ ३ ॥

भोजे विक्रमगौरवस्य असम्भाव्यतां प्रदर्शयति, प्राप्नोतीति।—विक्रम !—हे विक्रमादित्य !, भोजोऽपि—भोजराजोऽपि, यदि—चेत्, तव प्रतिष्ठां—गौरवम्, अवाप्नोति—लभते, लब्धुं शक्नोतीत्यर्थः, तदा कुम्भकारोऽपि—घटकारः कुलालोऽपि, मृत्तिकानिर्म्मितपुत्तलिकाकारोऽपि इति भावः ; प्रजापतेः,—प्रजास्रष्टुः विधातुः, महिमानं—महत्त्वं, गौरवमित्यर्थः, स्रष्टृत्वरूपमिति यावत्, प्राप्नोति—लभते ; पुत्तलिकाकारस्य कुम्भकारस्य विधातृत्वं यथा न सम्भवति, तथा भोजस्यापि विक्रमार्कसादृश्यमिति समुदितार्थः ॥ ४ ॥

# भोज-कविवरसंवादः ।

ततः कदाचित् कश्चित् कविः राजद्वारं समागत्याऽऽह,—"राजा द्रष्टव्यः" इति । ततः प्रवेशितो राजानं "स्वस्ति" इत्युक्त्वा तदाज्ञयोपविष्टः पठति,—

"कविषु वादिषु भोगिषु देहिषु
द्रविणवत्सु सतामुपकारिषु ।
धनिषु धन्विषु धर्मधनेष्वपि
क्षितितले न हि भोजसमो नृपः" ॥ १ ॥

राजा तस्मै लक्षं प्रादात्, सर्वाभरणान्युत्तार्य्य ददौ तुरगश्चैकम् ।

[ इति भोज-कविवरसंवादः ] ।

कविष्विति ।—क्षितितले—जगत्यस्मिन्, कविषु—पण्डितेषु, वादिषु—वक्तृषु, जल्पकेषु वा, भोगिषु—विषयासक्तेषु, देहिषु—देहधारिषु, सर्वप्राणिषु इत्यर्थः, द्रविणवत्सु—बलवत्सु, ("द्रविणन्तु बलं धनम्" इत्यमरः) सतां—सज्जनानाम्, उपकारिषु—उपकारपरेषु, सुजनपालकेष्वित्यर्थः, धनिषु—ऐश्वर्य्यशालिषु, धन्विषु—धानुष्केषु, तथा धर्म्मधनेष्वपि—धर्म्म एव धनं येषां तेषु अपि धार्म्मिकेष्वपि मध्ये, [ सर्व्वत्र निर्द्धारे ७मी० ] भोजसमः,—भो.. जसदृशः, नृपः,—राजा, न हि—नैव, विद्यते इति शेषः, कव्यादिषु मध्ये भवानेक एव श्रेष्ठ इति भावः । द्रुतविलम्बितं वृत्तम् ॥ १ ॥

# भोज-लुब्धकवधूसंवादः ।

ततः कदाचिद्राजा क्रीड़ोद्यानं प्रस्थितो (क) मध्येमार्गं कामपि मलिनांशुवसनां तीक्ष्णकरतपनकरविदग्धमुखारविन्दां सुलोचनां लोचनाभ्याम् आलोक्य पप्रच्छ,—

"का त्वं पुत्रि ?"

सा च तं श्रीभोजभूपालं मुखश्रिया विदित्वा तुष्टा प्राह,—

"नरेन्द्र ! लुब्धकवधूः"

(ख) हर्षसम्भृतो राजा तस्याः पटुप्रबन्धानुबन्धेनाह,—

"हस्ते किमेतत् ?"

सा चाऽऽह,—

"पलम्"

(क) मध्येमार्गं—मार्गस्य—पथः, मध्ये पथिमध्ये [ "पारे मध्ये षष्ठ्या वा" (२।१।१८ पा०) इति समासः पूर्व्वनिपातश्च ]। मलिनांशुवसनां—मलिनः,—मलदिग्धः, विवर्ण इत्यर्थः, अंशुः,—रश्मिः, प्रभा इत्यर्थः, यस्य तादृशं वसनं—परिधेयवस्त्रं यस्यास्तादृशीं, मलिनप्रभवस्त्रपरिधानां, मलिनवस्त्रामित्यर्थः, "मलिनांशुकवसनाम्" इति पाठे—मलिनम् अंशुकम्—उत्तरीयवसनम् ("अंशुकं श्लक्ष्णवस्त्रे स्यात् वस्त्रमात्रोत्तरीययोः" इति मेदिनी) वसनं—वस्त्रं, परिधेयमित्यर्थः, यस्यास्तादृशीम्। तीक्ष्णेति।—तीक्ष्णकरस्य—प्रखरकिरणस्य, तपनस्य—सूर्य्यस्य, करैः,—किरणैः, विदग्धं—दग्धप्रायं, विवर्णमित्यर्थः, मुखारविन्दं—वदनकमलं यस्याः तादृशीं सूर्य्यतापमलिनाननसरोजाम्। सुलोचनां—सु—शोभने, लोचने—नेत्रे यस्याः तां, मनोहरनेत्राम्।

(ख) हर्षसम्भृतः,—आनन्दपरिपूर्णः। तस्याः,—लुब्धकवध्वाः। पटुप्रबन्धानुबन्धेन—पटुः,—निपुणः, सुष्ठु विरचित इत्यर्थः, यः प्रबन्धः,—सन्दर्भः, श्लोक इत्यर्थः, तस्य अनुबन्धेन—अनुवर्त्तनेन, श्लोकानुकारिवाक्येनेत्यर्थः, तद्रचित-श्लोकानुकरणेनेत्यर्थो वा।

राजाऽऽह,—

"क्षामं किं ?"

सा चाऽऽह,—

"सहजं ब्रवीमि नृपते ! यद्यादरात् श्रूयते।
गायन्ति त्वदरिप्रियाऽश्रुतटिनीतीरेषु सिद्धाङ्गनाः
गीतान्धा न तृणं चरन्ति हरिणास्तेनामिषं दुर्लभम्" ॥१॥

राजा तस्यै प्रत्यक्षरं लक्षं प्रादात्।

[ इति भोज-लुब्धकवधूसंवादः ]।

---

राज्ञः प्रश्नस्योत्तरेण मांसस्य क्षामतायाः कारणमाह, सहजमिति।—नवास्य "का त्वम्" इत्यादि "पलम्" इत्यन्तेनोक्तं राजलुब्धकवध्वोः प्रश्नोत्तरं श्लोकस्यास्य प्रथमचरणत्वेन तथा "क्षामं किम्" इति पदद्वयं द्वितीयचरणेन सह पठनीयम्। पुवि—तनयि ! त्वं का ? इति राज्ञा पृष्टा लुब्धकवधूः आह, नरेन्द्रेति।—हे नरेन्द्र ! लुब्धकवधूः,—व्याधभार्य्या, अहमिति शेषः, ("व्याधो मृगवधाऽऽजीवो मृगयुर्लुब्धकोऽपि सः" इत्यमरः)। राजा पुनः पप्रच्छ, हस्ते किमेतत् ? तव हस्ते एतत् किम् ? वधूराह, पलं—मांसं, ("पलमुन्मानमांसयोः" इति हैमः राजोवाच, क्षामं किम् ?—कथं कृशम् ? मांसं दृष्ट्वा एतदनुमीयते यत, य॰ जन्तोरेतन्मांसं, सः अत्यर्थं क्षीणकायः, तत् कथम् इति प्रष्टुराशयः। क्षामं—स्वल्पमित्यर्थो वा। वधूराह, सहजमिति।—हे नृपते ! यदि आदरात्—आदरं कृत्वा अवहितो भूत्वेत्यर्थः, श्रूयते—आकर्ण्यते, [ श्रु + कर्म्मणि लट् ते ] भवतीति शेषः, तः सहजं—सरलम्, अकपटं यथा तथेत्यर्थः, ब्रवीमि—कथयामि; किन्तदित्याह गायन्तीति।—त्वदरिप्रियाऽश्रुतटिनीतीरेषु—तव—भवतः, अरिप्रियाणां—शत्रुवनितानाम्, अश्रुभिः,—नेत्रोदकैः, जातानां तटिनीनां—नदीनां, तीरेषु—तटेषु सिद्धाङ्गनाः,—सिद्धानां—देवयोनिविशेषाणाम्, अङ्गनाः,—स्त्रियः, उपविष्टाः सत्य इति शेषः, गायन्ति—गानं कुर्वन्ति, भवद्यशः इति शेषः, गीतान्धाः,—गीतेन—गानासक्त्या, अन्धाः,—अन्धप्रायाः, अत्यन्तगीतप्रियतया विस्मृतान्यव्यापारा इति यावत्, हरिणाः,—मृगाः, तृणं—शष्पादिकं किमपि, न चरन्ति—न भक्षयन्ति, सिद्धाङ्गनानां गानश्रवणेनेति भावः; तेन—हरिणानां किञ्चिदपि अभक्षणेन, आमिषं—मांसं, पुष्टमिति भावः, दुर्लभं—दुष्प्रापं, सञ्जातमिति शेषः; जगदेकवीरस्य

# भोज-मार्गस्थविद्वत्संवादः ।

ततो गृहमागत्य गवाक्षे उपविष्टः । तत्र चासीनं भोजं दृष्ट्वा राजवर्त्मनि स्थित्वा कश्चिदाह,—"देव ! (क) सकल-महीपाल ! आकर्णय,—

> इतश्चेतश्चाद्भिर्विघटिततटः सेतुरुदरे
> धरित्री दुर्लङ्घ्या बहुलहिमपङ्को गिरिरयम् ।
> इदानीं निर्वृत्ते करितुरगनीराजनविधौ
> न जाने यातारस्तव च रिपवः केन च पथा ॥ १ ॥

ते यशः सिद्धाङ्गनादिभिः देवयोनिभिरपि अनिशं गीयते, इत्यहो ! ते शौर्य्यादिकमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(क) सकलमहीपाल !—सकला—कृत्स्ना, महीं—पृथ्वीं, पालयति—रक्षति यः सः तत्सम्बोधने, निखिलधरण्या अधीश्वर ! ।

भोजशत्रूणामासन्नविपद्दर्शनच्छलेन भोजं स्तौति, इतश्चेतश्चेति ।—उदरे—अभ्यन्तरे, समुद्रमध्ये इति भावः; स्थित इति शेषः, सेतुः,—आलिः, इत-श्चेतश्च—स्थाने स्थाने इत्यर्थः, अद्भिः,—जलैः, जलपूरैरिति यावत्, विघटिततटः,—विघटितः,—भग्नः, तटः,—प्रान्तभाग इत्यर्थः, यस्य तादृशः, सेतोरुभयप्रान्तस्य भग्नत्वात् तदवलम्बनेन समुद्रमुत्तीर्य्य तव रिपूणां पलायनमसम्भवमिति भावः; धरित्री—इयं पृथिवी, दुर्लङ्घ्या—लङ्घयितुमशक्या, दुस्त्यजा इत्यर्थः, निखिला एव पृथिवी तवाधिकृतत्वात् त्वत्सैन्यवेष्टितत्वाच्च साऽपि तव रिपुभिरनतिक्रमणीया एवेति भावः; अयं—दूरे परिदृश्यमानः, उत्तुङ्गशिखरः इत्यर्थः, गिरिः,—हिमाचलः, बहुलहिमपङ्कः,—बहुलः,—प्रभूतः, हिमपङ्कः,—कर्द्दमीभूतः हिमः यत्र तादृशः, अनिशं निपतितेन पुञ्जीभूतहिमराशिना कर्द्दमपूर्ण इव गिरिरयं सञ्जातः अत एवायमपि तव रिपुभिरात्मरक्षार्थमधिरोढुं लङ्घयितुं वा अशक्य इति भावः;

तुष्टो भोजः वर्त्मनि स्थितायैव तस्मै (ख) वंश्यान् पञ्च गजान् ददौ।

[ इति भोज-मार्गस्थविद्वत्संवादः ]।

## भोज-दारुशीर्षविप्रसंवादः।

कदाचिद्राजा (क) मृगयारसपराधीनो हयमारुह्य प्रतस्थे।

ततो नदीं समुत्तीर्णं शिरस्यारोपितेन्धनम्।
वेषेण ब्राह्मणं ज्ञात्वा राजा पप्रच्छ सत्वरम्॥ १॥

अतः पृच्छामीति पदद्वयमूहनीयम्; इदानीञ्च—अधुना पुनः, करितुरगनीराजनविधौ—करिणां—हस्तिनां, तुरगाणाम्—अश्वानाञ्च, नीराजनविधौ—आरात्रिकव्यापारे, युद्धार्थं प्रतिष्ठमानानां गजतुरगादीनामभ्युदयाय दीपादिभिः क्रते माङ्गलिकानुष्ठानविशेषे इत्यर्थः, निर्वृत्ते—सम्पन्ने सति, भवति दिग्विजयाय प्रयाणोन्मुखे सतीति भावः; तव रिपवः,—अरयः, केन च पथा—केन हि मार्गेण, यातारः,—पलायिष्यन्ते, [ या+लुट्-तारस् ] तत् न जाने—नावगच्छामि, अहमिति शेषः; पलायनमार्गाणां सर्वेषामेव अवरुद्धत्वात् रिपवस्ते कुत्र गत्वा तव अस्त्रानलात् आत्मानं गोपायिष्यन्ति? इति नाहमवधारयितुं शक्नोमि इति निष्कर्षः; अप्रतिहतपराक्रमो भवानिति भावः। शिखरिणी वृत्तम्॥ १॥

(ख) वंश्यान्—वंशे—प्रशस्तकुले भवान्, सत्कुलोद्भवान्, उत्कृष्टानित्यर्थः। [ वंश+भवार्थे यत्+२या बहुव० ]।

---

(क) मृगयारसपराधीनः,—मृगयायां—मृगवधव्यापारे, यो रसः,—अनुरागः, तेन पराधीनः,—परवशः, आयत्तीकृत इत्यर्थः, मृगयासक्तः। प्रतस्थे—प्रचचाल। [ प्र+स्था+लिट्-ए "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम् ]।

तत इति।—ततः,—तदनन्तरं, प्रश्नानान्तरमित्यर्थः, राजा—भोजनृपतिः,

"कियन्मात्रं जलं विप्र ! ?"

स आह,—

"जानुदघ्नं नराधिप !"।

चमत्कृतो राजाऽऽह,—

"ईदृशी किमवस्था ते ?"

स आह,—

"न हि सर्वे भवादृशाः" ॥ २ ॥

राजा प्राह कुतूहलात्,—"विद्वन् ! याचस्व कोशाधिकारिणं, लक्षं दास्यति मद्वचसा"। ततो विद्वान् काष्ठं भूमौ निक्षिप्य कोशाधिकारिणं गत्वा प्राह,—"महाराजेन प्रेषितोऽहं, लक्षं मे दीयताम्"।

---

नदीं—सरितं, समुत्तीर्णम्—अतिक्रान्तम्, एकस्मात् तटात् तटान्तरं समागतमित्यर्थः, शिरसि—मस्तके, आरोपितेन्धनम्—आरोपितं—स्थापितम्, इन्धनं—काष्ठं, काष्ठराशिरिति यावत्, येन तादृशं, शिरोनिहितकाष्ठभारं, समागच्छन्तं कमपीति शेषः, वेषेण—वेशेन, परिच्छदेन इत्यर्थः, शिखासूत्रादिनेति यावत्, ब्राह्मणं—विप्रं, ज्ञात्वा—विदित्वा, सत्वरं—शीघ्रं, पप्रच्छ—जिज्ञासयामास ॥ १ ॥

एकेन श्लोकेन राजविप्रयोः प्रश्नोत्तरे प्राह, कियदिति।—विप्र !—हे ब्राह्मण !, कियन्मात्रं—कियत्परिमाणं, जलं—वारि ?, अस्यां नद्यां वर्त्तते इति शेषः। इति राज्ञा पृष्टः विप्र उत्तरति—नराधिप !—हे नरेश्वर !, जानुदघ्नं—जानुपरिमाणं, जलमस्यामस्तीति शेषः, [ जानु प्रमाणमस्य इति "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ( ५।२।३७ पा० ) इति जानु + दघ्नच् ]। विप्रोक्तं "जानुदघ्नम्" इति पदं श्रुत्वा विस्मितो राजा पुनः पृष्टवान्—ते—तव, ईदृशी—एवम्प्रकारा, अवस्था—दशा, काष्ठवहनेनानुमितदारिद्र्यदशा इत्यर्थः, किम् ?—कथम् ? तव वाक्येन एवं ज्ञायते यत्, पण्डितस्त्वं, तथाऽपि कथं ते ईदृशी दारिद्र्यावस्था ? इति राजप्रश्नस्याशयः। ब्राह्मणः पुनराह—सर्वे, धनिन इति शेषः, भवादृशाः,—तव तुल्याः, त्वत्सदृशा दातारः इत्यर्थः, न हि—नैव, भवन्तीति शेषः, सर्वे धनिनश्चेत् भवादृशदानशौण्डा भवेयुः, तदाऽस्माकमीदृशी दशा न स्यादित्यर्थः ॥ २ ॥

ततः स हसन् प्राह,—"विप्र ! भवन्मूर्त्तिः लक्षं नार्हति"। ततो विषादी स राजानमेत्याऽऽह,—"स पुनर्हसति देव ! नार्पयति।" राजा कुतूहलादाह,—"लक्षद्वयं प्रार्थय, दास्यति"। पुनरागत्य विप्रः,—"लक्षद्वयं देयम् इति राज्ञोक्तम्" इत्याह। स पुनर्हसति। विप्रः पुनरपि भोजं प्राप्याऽऽह,—"स पापिष्ठो मां हसति नार्पयति"। ततः कौतूहली लीलानिधिर्महीं शासन् श्रीभोजराजः प्राह,—"विप्र ! लक्षत्रयं याचस्व, अवश्यं स दास्यति"। स पुनरेत्य प्राह,—"राजा मे लक्षत्रयं दापयति"। स पुनर्हसति। ततः क्रुद्धो विप्रः पुनरेत्याऽऽह,—"देव ! स नार्पयत्येव,—

राजन् ! कनकधाराभिस्त्वयि सर्वत्र वर्षति।
अभाग्यच्छत्रसंच्छन्ने मयि नायान्ति बिन्दवः ॥३॥
त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः।
अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः ॥४॥

---

विप्रः स्वं भाग्य निन्दति, राजन्निति।—हे राजन् ! त्वयि—भवति, कनकधाराभिः,—मेघस्य आसारवर्षणवत् निरन्तरं सुवर्णराशिवर्षणैः, सर्वत्र—सर्वस्मिन्नेव देशे, वर्षति—सिञ्चति, वारिवर्षणवत् अविरलधारेण सुवर्णवर्षणं कुर्वत्यपीत्यर्थः, [वृष+शतृ+७मी १ व०। भावे ७मी] अभाग्यच्छत्रसंच्छन्ने—अभाग्यं—दुर्भाग्यमेव, छत्रम्—आतपत्रं, तेन संच्छन्ने—आवृते, दुरदृष्टरूपच्छत्रेण समाच्छादितशरीरे इत्यर्थः, मयि बिन्दवः,—कणाः, कनकधाराणामत्यल्पा अपि अंशा इत्यर्थः, नायान्ति—नागच्छन्ति, त्वद्दत्तदानेन जगद्वासिनः सर्वे अदरिद्रा अपि दुरदृष्टेन मया तस्य अंशमात्रमपि न लभ्यते इत्यर्थः ॥ ३ ॥

त्वयीति।—पर्जन्ये—मेघे, मेघस्वरूपे इत्यर्थः, वारिवर्षणवत् अविरतकाञ्चनवर्षणादिति भावः; त्वयि—भवति, वर्षति—सिञ्चति, काञ्चनवृष्टिं कुर्वति सतीत्यर्थः, सर्वे—सकलाः, द्रुमाः,—वृक्षाः, द्रुमसदृशा दरिद्रा इत्यर्थः, पल्लविताः,—सञ्जातकिसलयाः, नवनवशाखापत्रादिभिर्विभूषिता इत्यर्थः, त्वद्दत्तेनार्थेन दारिद्र्यापगमात् वसनभूषणादिभिः रमणीयश्रीकाः सञ्जाता इति भावः; [तारका-

एकमस्य परमेकमुद्यमं निस्त्रपत्वमपरस्य वस्तुनः।
नित्यमुष्णमहसा निरस्यते नित्यमन्धतमसं प्रधावति" ॥५॥

दित्वात् पल्लव+इतच्+१मा बहुव० ]। किन्तु अर्कवृक्षाणाम्—"आकन्द" इति भाषा प्रसिद्धानां वृक्षाणां, तद्रूपमदृशानामित्यर्थः; अनुर्वरभूमौ जातानामनादृतानामिति भावः; अस्माकं पूर्वपर्वसु—पुरातनेष्वपि पर्वसु, संशयः,—सन्देहः, सञ्जायते इति शेषः; नवपल्लवोद्गमसम्भावना दूरे आस्तां, प्राचीनपत्राणि यानि सन्ति तान्यपि स्थास्यन्ति न वेति महान् संशयः समुदेति इति भावः; वर्षासु अर्कवृक्षाणां पत्रस्खलनं जायते इति प्रसिद्धिः। अन्ये सर्वे अर्थिनः भवदीयदानेन धनिनः सञ्जाताः, अधन्या वयं काष्ठसङ्ग्रहविक्रयादिकर्मणा यत् किञ्चिद्धनादिकं सञ्चितमः, भवत्कोषाधिकारिसमीपे निष्फलाशया गतागतेन तदपि प्रतिबन्ध उत्पद्यते, सञ्चितकाष्ठभारोऽपि भवद्दार्क्येन मया त्यक्तः, अतो मे पूर्वजीविकायामपि संशय इत्याशयः ॥ ४ ॥

कोशाधिकारिणा प्रत्याख्यातोऽपि निर्लज्जवत् पुनः पुनर्गमनेन आत्मनो हीनतां प्रकाशयति, एकमिति।—अस्य, ममेति शेषः, एकम्—एकसङ्ख्यकम्, उद्यमम्—उद्योगं, धनार्थमिति भावः; स कोशाधिकारी निरस्यतीति शेषः, परं—किन्तु, एकम्—अन्यच्च, ("एके मुख्यान्यकेवलाः" इत्यमरः) उद्यमम्, आश्रित्य अयं प्रधावतीति शेषः, कोषाधिकारी प्रत्याख्याय मम एकमुद्यमं नाशयति, भवता पुनः अधिकधनेन प्रलोभितश्चायम् अन्यमुद्यममवलम्ब्य पुनः प्रधावतीति समुदितार्थः; अत एव अपरस्य—परः,—श्रेष्ठो न भवतीति अपरः तस्य, अश्रेष्ठस्य, निर्धनत्वादतिनीचस्येत्यर्थः, वस्तुनः,—पदार्थस्य, मादृशजीवरूपस्येति भावः; निस्त्रपत्वं—निर्लज्जत्वं, नीचस्य एतदेव निस्त्रपत्वं यत् पुनः पुनर्निराकृतोऽपि धनाशया पुनः पुनर्निराकारकसमीपे गमनमित्यर्थः, अत्र दृष्टान्तं प्रदर्शयति, नित्यमिति।—उष्णमहसा—उष्णं महः,—तेजो यस्य तेन, सूर्य्येण, ("मह उत्सवतेजसोः" इति मेदिनी) नित्यं—प्रतिदिनम्, अन्धतमसम्—गाढ़ान्धकारं ("ध्वान्ते गाढ़ेऽन्धतमसम्" इत्यमरः) [ अन्धयतीति अन्धं—गाढ़ं, तमः,—अन्धकारम् इति अन्ध+तमस् "अवसमन्धेभ्यस्तमसः" (५।४।७९ पा०) इति समासान्तोऽच् ]। निरस्यते—निक्षिप्यते, दूरीक्रियते इत्यर्थः, [ निर्+अस+कर्म्मणि लट्-ते ] तथाऽपि तत् अन्धतमसं नित्यं प्रधावति—पुनरागच्छति, एतदेव अन्धतमसस्य निस्त्रपत्वं यत् निराकृतमपि भूयो भूय उपैतीति भावः; सूर्य्येण प्रतिदिनं निरस्तमपि

ततो राजा प्राह,—

"क्रोधं मा कुरु मद्वाक्याद्गत्वा कोशाधिकारिणम्।

लक्षत्रयं गजेन्द्राश्च दश ग्राह्यास्त्वया द्विज !" ॥६॥

ततस्त्वङ्गरक्षकं प्रेषयति। ततः कोशाधिकारी (ख) धर्म्मपत्रे लिखति,—

"लक्षं लक्षं पुनर्लक्षं मत्ताश्च दश दन्तिनः।

दत्ता भोजेन तुष्टेन जानुदघ्नप्रभाषणात्" ॥ ७ ॥

[ इति भोज-दारुशीर्षविप्रसंवादः ]।

अन्धकारं यथा प्रत्यहमेव समागत्य निर्जानिर्लज्जत्वं प्रकटयति, तथा अहमपि कोषाधिकारिणा पुनः पुनः प्रत्याख्यातोऽपि भवद्वाक्येन पुनः पुनर्गत्वा स्वस्य निर्लज्जत्वं नीचत्वञ्च प्रकाशयामीति तात्पर्य्यम्। रथोद्धता वृत्तम् ॥ ५ ॥

क्रोधमिति।—द्विज!—हे विप्र!, क्रोधं—कोपं, मा कुरु—न विधेहि, त्वया —भवता, मद्वाक्यात—मम वचनात, मम वचनमनुसृत्येत्यर्थः, [ ल्यब्लोपे ५मी० ] कोशाधिकारिणं—कोषरक्षकं, धनाध्यक्षसमीपमित्यर्थः, गत्वा—यात्वा, लक्षत्रयं—त्रिलक्षमितं, काञ्चनमिति शेषः, दश—दशसङ्ख्यकाः, गजेन्द्राश्च—महाहस्तिनश्च, ग्राह्याः,—आदेयाः, [ग्रह + कर्म्मणि य + १मा बहुव० ] ॥ ६ ॥

( ख ) धर्म्मपत्रे—धर्म्मार्थं दीयमानस्य दानस्य प्रमाणार्थमनुशासनलिप्याम्।

किं लिखति इत्याह, लक्षमिति।—जानुदघ्नप्रभाषणात्—जानुदघ्नमिति पदोच्चारणात्, तुष्टेन—प्रीतेन, भोजेन—भोजराजेन, लक्षम्—आदौ एकलक्षं, लक्षं—ततः पुनरेकलक्षं, पुनर्लक्षम्—अनन्तरं पुनरप्येकलक्षं, मिलित्वा लक्षत्रयमित्यर्थः, काञ्चनमिति शेषः, तथा दश—दशसङ्ख्यकाः, मत्ताः,—समदाः, दन्तिनश्च—गजेन्द्राश्च, दत्ताः,—समर्पिताः, विप्रायास्मै इति शेषः ॥ ७ ॥

# भोज-शुकदेवकविसंवादः।

ततः सिंहासनमलङ्कुर्वाणे श्रीभोजनृपतौ द्वारपाल आगत्य प्राह,—"राजन्! कोऽपि शुकदेवनामा कविः दारिद्र्य-विड़म्बितो द्वारि वर्त्तते"। राजा बाणं प्राह,—"पण्डितवर! सुकवे! (क) तत्त्वं विजानासि?"। बाणः,—"देव! (ख) शुक-देवपरिज्ञानसामर्थ्याभिज्ञः कालिदास एव, नान्यः"। राजा प्राह,—"सुकवे! सखे कालिदास! किं विजानासि शुकदेव-कविम्?"। आह कालिदासः,—"देव!—

सुकविद्वितयं जाने निखिलेऽपि महीतले।
भवभूतिः शुकश्चायं वाल्मीकिस्त्रितयोऽनयोः" ॥१॥

ततो विद्वद्वृन्दवन्दिता सीता प्राह,—

"काकाः किं किं न कुर्वन्ति क्रोङ्कारं यत्र तत्र वा।
शुक एव परं वक्ति नृपहस्तोपलालितः" ॥ २ ॥

---

(क) तत्त्वं—स्वरूपं, कोऽयं कीदृशो विद्वानित्यादिकमिति यावत।

(ख) शुकदेवपरिज्ञानसामर्थ्याभिज्ञः,—शुकदेवस्य—तदाख्यस्य आगन्तुक-कवेः, परिज्ञाने—स्वरूपविज्ञाने, सामर्थ्यं—नैपुण्यं, कवित्वनैपुण्यादिविषये चेत्यर्थः, अभिज्ञः,—प्राज्ञः, ज्ञानवानित्यर्थः।

जगति के के सुकविपदभाजः इत्याह, सुकवीति।—निखिलेऽपि—समग्रेऽपि, महीतले—भूतले, सुकविद्वितयं—श्रेष्ठकविद्वयं, द्वावेव सुकवी इत्यर्थः, जाने—अवगच्छामि; कौ तौ इत्याह, भवभूतिरिति।—भवभूतिः,—तन्नाम्ना प्रसिद्ध एकः, अयम्—अत्र समागतः, शुकश्च, अपरः इति शेषः, वाल्मीकिः,—तन्नाम्ना प्रसिद्धः आदिकविः, अनयोः,—भवभूतिशुकदेवाख्यकविद्वितययोः, त्रितयः,—तृतीयसङ्ख्या-पूरकः, वाल्मीकिः तृतीयत्वेन गणनीय इत्यर्थः, जगति एते त्रय एव कवयः, नान्ये, तत्रापि वाल्मीकेस्तृतीयत्वात् तदपेक्षयाऽपि भवभूतिशुकदेवौ श्रेष्ठौ इति भावः ॥ १ ॥

अधुना शुकदेवकवेः राजसम्मानार्हत्वं प्रकाशयति, काका इति।—काकाः,—

ततो मयूरः प्राह,—

"अपृष्टस्तु नरः किञ्चित् यो ब्रूते राजसंसदि।
न केवलमसम्मानं लभते च विडम्बनाम् ॥ ३ ॥

देव! तथाऽप्युच्यते,—

का सभा? किं कविज्ञानं? रसिकाः कवयश्च के?।
भोज! किं नाम ते दानं शुकस्तुष्यति येन सः? ॥४॥

वायसाः, यत्र तत्र वा—यस्मिन् तस्मिन्नेव स्थाने, ("वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये" इत्यमरः) किं—कुत्सितं, श्रुतिकठोरमित्यर्थः, ("किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति विश्वः) कोङ्कारं—कोमित्यव्यक्तध्वनिविशेषं, न कुर्वन्ति किम्?—न विदधति किम्? अपि तु कुर्वन्त्येव, सर्वेषां विरक्त्युत्पादकत्वेऽपि ते यत्र तत्रैव कठोरध्वनिं कुर्वन्ति, न कदाऽपि मधुरध्वनिमिति भावः; किन्तु नृपहस्तोपलालितः,—नृपाणां—राज्ञां, हस्तेन—करेण, उपलालितः,—सस्नेहं प्रतिपालितः, शुक एव—केवलं कीराख्यपक्षिविशेष एव, परम—उत्कृष्टं, सुमधुरमित्यर्थः, वक्ति—भाषते; काकाः यथा राज्ञा सयत्नं प्रतिपालिताः सुमधुरं भाषयितुं प्रदत्तशिक्षा अपि सर्वस्मिन्नेव स्थाने कठोरध्वनिमेव कुर्वन्ति, न कुत्रापि मधुरं भाषितुं समर्था भवन्ति, परन्तु शुक एव तादृशं भाषते, एवञ्च बहवः कुकवयः सन्ति, ये प्राप्तराजप्रसादा अपि यत्र तत्रैव कर्णोद्वेजकाः कुकविताः एव पठन्ति, न कदाऽपि सत्कवितां कर्त्तुं शक्नुवन्ति, परन्तु सुकविः शुकदेवः राजानुग्रहं लभेत चेत् सुमधुरां कवितां कर्त्तुं शक्नुयादिति भावः ॥ २ ॥

सभायां किञ्चित् विवक्षुर्मयूरः "नापृष्टः कस्यचित् ब्रूयात्" इति दोषं परिजिहीर्षुराह, अपृष्ट इति।—यो नरः,—यो जनः, अपृष्टस्तु—अजिज्ञासितोऽपि, राजसंसदि—राजसभायां, किञ्चित—किमपि, ब्रूते—कथयति, स केवलम् असम्मानम्—अनादरं, न, विडम्बनाञ्च—प्रत्युत तिरस्कारमपि, लभते—प्राप्नोति; अपृष्टस्य मे नात्र सभायां किमपि वक्तुमुचितमिति निष्कर्षः ॥ ३ ॥

शुकदेवस्य महत्त्वं व्यञ्जयितुमाह, केति।—हे भोज!, ते—तव, का सभा?—कीदृशी विबुधसमितिः? शुककविविहीना इयं सभा सभैव न इत्यर्थः, किं कविज्ञानम्?—कविविषयिणी अभिज्ञा ते कीदृशी? यः शुककविं न जानाति, तस्य कविविषयकं ज्ञानमेव नास्तीत्यर्थः, के च—के वा, कवयः,—कवयितारः, रसिकाः?—रसज्ञाः? अत्र वर्त्तन्ते इति शेषः, ये शुकदेवस्य काव्यरसं नास्वादितवन्तः, ते

तथाऽपि भवनद्वारमागतः शुकदेवः सभायामानेतव्य एव।" तदा राजा विचारयति,—"शुकदेवसामर्थ्यं श्रुत्वा हर्षविषादयोः पात्रम् (ग) आसीत्, महाकविरवलोकित इति हर्षः, अस्मै सत्कविकोटिमुकुटमणये किं नाम देयमिति च विषादः। भवतु, द्वारपाल! प्रवेशय"। तत आयान्तं शुकदेवं दृष्ट्वा राजा सिंहासनादुदतिष्ठत्। सर्वे पण्डितास्तं शुकदेवं प्रणम्य सविनयमुपवेशयन्ति। स च राजा तं सिंहासने उपवेश्य स्वयं तदाऽग्रेऽपविष्टः। ततः शुकदेवः प्राह,—"देव धारानाथ! (घ) श्रीविक्रमनरेन्द्रस्य दानलक्ष्मीः त्वामेव सेवते, देवो मालवेन्द्र एव धन्यो नान्ये भूभुजः, यस्य ते कालिदासादयो महाकवयः सूत्रबद्धाः पक्षिण इव निवसन्ति"। ततः पठति,—

"प्रतापभीत्या भोजस्य तपनो मित्रतामगात्।
और्वो वाड़वतां धत्ते तडित् चणिकतां गता" ॥ ५ ॥

---

रसिका एव न भवन्तीत्यर्थः, यद्वा—शुकदेवापेक्षया रसिकाः कवयः केऽत्र विद्यन्ते? न केऽपीत्यर्थः, दानं—वितरणं, किं नाम?—कीदृशं वा? पारितोषिकमित्यर्थः, येन—यादृशेन, दानेन—त्यागेन, सः,—प्रसिद्धः, शुकः,—कविशुकदेवः, तुष्यति?—प्रीणाति? तुष्टो भवितुमर्हतीत्यर्थः, तत्र सभादिकं तादृशमेव न भवति, यद्दर्शनादिना शुकस्य सन्तोषः भवितुमर्हति इति निष्कर्षः ॥ ४ ॥

(ग) आसीत्—अभवत् [अस+लङ्-द] जनोऽयमिति मतिरत्रोपमित वा शेषः।

(घ) श्रीविक्रमनरेन्द्रस्य दानलक्ष्मीः त्वामेव सेवते—विक्रमादित्यराजस्य दानशोभा भवन्तमेव आश्रयति, श्रीविक्रमनृपतिः प्रभूतदानादिना या यशःसम्पदम् अलभत, सेदानीं त्वामेव आश्रित्य वर्त्तते इत्यर्थः; भवान् विक्रमसदृशो दाता इति भावः। सूत्रबद्धाः पक्षिण इव—तन्तुनिबद्धाः पक्षिणो यथा पक्षमत्त्वेऽपि कुत्रापि गन्तु न शक्नुवन्ति, बद्धुः समीपे एव निवसन्ति, तथा कालिदासादयः त्वद्गुणनिबद्धाः पाण्डित्यादिगुणराशिसत्त्वेऽपि त्वां विहाय नान्यत्र गन्तुं शक्नुवन्ति, त्वय्येव निवसन्तीत्यर्थः।

भोजस्य असामान्यप्रभावं विवृणोति, प्रतापेति।—भोजस्य—भोजराजस्य भवतः, प्रतापभीत्या—प्रतापात्—प्रभावात्, कोषदण्डजतेजस इत्यर्थः, भीत्या—भयेन, तपनः,

राजा,—"तिष्ठ सुकवे! (ङ) नापरः श्लोकः पठनीयः"।

"सुवर्णकलशं प्रादात् दिव्यमाणिक्यसम्भृतम्।
भोजः शुकाय सन्तुष्टो दन्तिनश्च चतुःशतम्" ॥ ६ ॥

इति (च) पुण्यपत्रे लिखित्वा सर्वं दत्त्वा कोशाधिकारी

—सर्वलोकसन्तापकः सूर्य्यः, मित्रतां—सखित्वं, मित्र इति नामधेयञ्च, अगात्—प्रापत्, सर्वलोकसन्तापकरोऽपि सूर्य्यः भवतः प्रतापात् भीतः त्वया सह मित्रतां संस्थाप्य तव राज्ये कस्यापि सन्तापं न जनयति, प्रत्युत मित्र इति नाम च गृहीतवान्। ("द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः" इति सूर्य्यपर्य्याये अमरोक्त्या सूर्य्यस्य मित्र इति नामान्तरं ज्ञातव्यम्। और्व्वः,—ऊर्व्वमुनिसम्भूतः सर्वलोकपीडाकारकः अग्निविशेषः, (ऊर्व्वेण किल अयोनिजपुत्रार्थिना ऊरुर्मथितः, तत्र ज्वालामयः पुरुषो जातः, तस्य च समुद्र आधार आसीत" इति स्मृतिः)। तव प्रतापभीत्या वाड़वतां—वड़वानलत्वम्, अश्वमुखान्तःस्थमित्यर्थः, वड़वा—अश्वा तज्जाततां च, घोटकत्वमित्यर्थः, धत्ते—धारयति, [धा+लट्-ते] ऊर्व्वसम्भूतोऽनलः तव भयात् आत्मानं सङ्गोप्य समुद्राभ्यन्तरस्थाश्वमुखविवरे तिष्ठति इत्यर्थः, पक्षान्तरे—घोटकरूपं परिगृह्य त्वामेवोपास्ते इति भावः; और्वस्य वड़वामुखान्तःस्थायित्वं पुराणादौ प्रसिद्धम्। किञ्च, तडित्—विद्युत्, नाभसोऽग्निविशेष इत्यर्थः, तव भयात् क्षणिकतां—क्षणस्थायित्वं, चपलतां च, गता—प्राप्ता, विद्युदपि तव भयेन अतीव चञ्चला सती उदयमात्रेणैव अन्तर्हिता भवतीति भावः; सूर्य्यादिभ्यः निखिलतेजःपदार्थेभ्योऽपि महाप्रतापी भवानित्यहो! किं ते वर्णयेयमिति निष्कर्षः॥ ५॥

(ङ) नापरः श्लोकः पठनीयः,—त्वया पठितस्यैकस्य एवास्य श्लोकस्य अनर्घत्वात् अस्यैव उपयुक्तं मूल्यं कष्टेन दातुमहं समर्थः, अपरं च पठिते कुतस्तस्य मूल्यं दास्यामि? इति भावः; एकेनैव श्लोकेन तव कवित्वशक्तिर्मम विदिता, अलं द्वितीयश्लोकपठनायासेन इति वा भावः।

सुवर्णेति।—सन्तुष्टः,—प्रीतः, भोजः,—भोजराजः, शुकाय—तदाख्यमहाकवये, दिव्यमाणिक्यसम्भृतं—दिव्यैः,—अत्युत्कृष्टैः, माणिक्यैः,—रक्तवर्णमणिविशेषैः, सम्भृतं—पूर्णं, सुवर्णकलसं—स्वर्णमयकुम्भं, चतुःशतं—चतुःशतसङ्ख्यकान्, दन्तिनश्च—गजांश्च, प्रादात्—समर्पयामास। [प्र+दा+लुङ्-द]॥ ६॥

(च) पुण्यपत्रे—धर्मपत्रे, दानपत्रे इत्यर्थः।

शुकं प्रस्थापयामास। राजा स्वदेशं प्रति गतं शुकं ज्ञात्वा तुतोष, सा च परिषत् सन्तुष्टा।

[ इति भोज-शुकदेवकविसंवादः ]।

---

## भोज-वासुदेवसंवादः।

अन्यदा वर्षाकाले वासुदेवो नाम कविः कश्चिदागत्य राजानं दृष्टवान्। राजा,—"सुकवे! (क) पर्जन्यं पठ"। ततः कविराह,—

"नो चिन्तामणिभिर्न कल्पतरुभिर्नो कामधेन्वादिभि-
र्नो देवैश्च परोपकारनिरतैः स्थूलैर्न सूक्ष्मैरपि।
अम्भोदेह निरन्तरं जलभरैस्तामुर्वरां सिञ्चता
धौरेयेण धुरं त्वयाऽद्य वहता मन्ये जगज्जीवति॥ १॥

राजा लक्षं ददौ।

[ इति भोज-वासुदेवसंवादः ]।

(क) पर्जन्यं—मेघं, [ पिपर्त्ति इति जुहोत्यादिगणीय "पॄ" धातोः निपातनात् पर्जन्य इति सिध्यति। यद्वा—पर्षति इति भौवादिक "पृषु सेचने" इत्यस्मात् "पर्जन्यः" (३।१०३ उ०) इति अन्यप्रत्यये षकारस्य जकारभावः। "पर्जन्यौ मेघशब्देऽपि ध्वनदम्बुदशक्रयोः" इति विश्वमेदिनीवचनात् मेघशब्द सशब्दमेघे च पर्जन्यशब्दः प्रयुज्यमानोऽपि "यस्मात् भवति पर्जन्यः" इति श्रीमद्भगवद्गीतामन्वादिदर्शनात् तथा "पर्जन्यः शक्रमेघयोः" इति भट्टोजीदीक्षितकृततद्धितदर्शनाच्च केवलमेघेऽपि पर्जन्यशब्दप्रयोगो बोध्यः ] पठ—वर्णय, मेघं लक्ष्यीकृत्य कश्चित् श्लोकं रचयेत्यर्थः।

मेघवर्णनच्छलेन राजानं स्तौति, नो इति।—अम्भोद!—हे मेघ!, जलधारावर्षणतुल्यसुवर्णराशिवर्षणात् मेघोपम भोज इति भावः; इह—वर्षाकाले इत्यर्थः, चिन्तामणिभिः,—चिन्तामात्रेणैव अभीष्टार्थप्रदैः मणिविशेषैः, नो—न, जगत् जीवति इत्युत्तरेणान्वयः, एवं सर्वत्रैव; कल्पतरुभिः,—कल्पवृक्षैः, याच्ञामात्रेणैव अभि-

# भोज-मुख्यामात्यसंवादः ।

कदाचिद्राजानं निरन्तरं दीयमानमालोक्य मुख्यामात्यो वक्तुमशक्तो राज्ञः शयनभवनभित्तौ व्यक्तान्यक्षराणि लिखितवान्,—

"आपदर्थं धनं रक्षेत्"

राजा शयनादुत्थितो गच्छन् भित्तौ तान्यक्षराणि वीक्ष्य स्वयं द्वितीयचरणं लिलेख,—

"श्रीमतामापदः कुतः ?" ।

---

अर्थितप्रदैः देवतरुविशेषैरित्यर्थः, न, कामधेन्वादिभिः,—ईप्सितार्थप्रदैः स्वर्गीयधेनुविशेषप्रभृतिभिरपि, नो—न, परोपकारनिरतैः,—परेषां हितसाधनपरायणैः, स्थूलैः,—महद्भिरित्यर्थः, ब्रह्मादिभिः श्रेष्ठैरिति यावत्, दृग्गोचरैरित्यर्थो वा, देवैश्च—देवताभिरपि, नो—न, सूक्ष्मैरपि—क्षुद्रैरपि, अप्रधानैरपीत्यर्थः, दृष्ट्यगोचरैरित्यर्थो वा, देवैश्च न, निरन्तरम्—अविरतं, जलभरैः,—जलराशिभिः, जलराशिवत् सुवर्णभारैरिति भावः; तां—ग्रीष्मे शुष्कप्रायामित्यर्थः, उर्वरां—भूमिम्, ("उर्वरा सर्वशस्याढ्यभूमौ स्यात् भूमिमात्रके" इति मेदिनी) सिञ्चता—आर्द्रीकुर्वता, अत एव धुरं—भारं, जलवर्षणेन जगत्पालनरूपं भारमित्यर्थः, प्रभूतधनवितरणेन दरिद्रपालनरूपं राजकार्य्यरूपञ्च भारमिति ध्वनिः; वहता—दधता, धौरेयेण—धुरं—भारं, वहतीति तेन, धुरन्धरश्रेष्ठेन, [ "धुरो यड्ढकौ" (४।४।७७ पा०) इति ढक् ]। भारवाहकाग्रगण्येन, जगत्पालनकर्तृत्वात् गुरुभारं वहतेत्यर्थः, त्वया—भवता हेतुना, अद्य—इदानीं, जगत्—लोकः, जगद्वासिजन इत्यर्थः, जीवति—प्राणिति, इति मन्ये—विवेचयामि, अहमिति शेषः; चिन्तामणिप्रभृतिभ्योऽपि अधिकप्रदस्य तवैव वदान्यतया लोकोऽयं स्वस्थस्तिष्ठतीति निष्कर्षः। "अथोदैन" इति पाठे तु—निरन्तरं स्थूलैः सूक्ष्मैरपि जलभरैः तामुर्वरां सिञ्चता अथोदैनापि न; मन्ये, धुरं वहता धौरेयेण त्वया भोजेन अद्य जगज्जीवति इत्येवमन्वेतव्यः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

---

आपदिति।—आपदर्थं—विपत्कालनिमित्तं, विपदि समुपस्थितायां तन्मोच-

अपरेद्युः अमात्यो द्वितीयं लिखितं दृष्ट्वा स्वयं तृतीयं लिलेख,—

"सा चेदपगता लक्ष्मीः ?"

परेद्युः राजा चतुर्थं लिखति,—

"सञ्चितार्थो विनश्यति" ॥१॥

ततः मुख्यामात्यः राज्ञः पादयोः पतति,—"देव ! क्षन्तव्योऽयं ममापराधः"।

[ इति भोज-मुख्यामात्यसंवादः ]।

---

## भोज-चौरविप्रसंवादः।

अन्यदा धाराधीश्वरम् (क) उपरिसौधभूमौ शयानं मत्वा कश्चिद्द्विजचौरः खातपातपूर्वं राज्ञः कोशगृहं प्रविश्य बहूनि

---

कारार्थमित्यर्थः, धनम्—अर्थं, रक्षेत्—पालयेत. अधुना भवता यथा अपरिणामदर्शिना यथेच्छव्ययः क्रियते, एतत्तु नोचितं, शरीरिणां प्रतिपदं विपद सङ्घटितुमर्हति, तत्प्रतीकारार्थं धनं रक्षितव्यमेवेत्यर्थः। अमात्यलिखं वाचयित्वा राजा तत्प्रत्युत्तरं लिखति, श्रीमतामिति।—श्रीमताम—ऐश्वर्य्यशालिनाम्, आपदः,—विपत्तयः, कुतः ?—कुत्र ? कमलया अनुगृहीतानां कदाऽपि विपदो नैव जायन्ते इति भावः। राज्ञः प्रत्युत्तरं वाचयित्वा परस्मिन् दिने अमात्यः पुनरपि तत्प्रत्युत्तरे स्वाभिप्रायं विज्ञापयति, सेति।—चेत्—यदि, सा—श्रीमतामविपत्तिजननी इत्यर्थः, लक्ष्मीः,—सम्पत्, अपगता—बहिर्गता, श्रीमन्तं परित्यज्य अन्यत्र गतेत्यर्थः, भवेत्, तदा किं भवेदिति शेषः। तत्परदिने राजा अमात्यस्य पुनर्लेखं दृष्ट्वा स्वयमपि पुनर्लिखितवान्, सञ्चितार्थ इति।—सञ्चितार्थः,—रक्षितं धनं, विनश्यति—क्षयमाप्नोति, लक्ष्मीश्चेत् कदाऽपि कुपिता अपगच्छति, तदा लक्ष्मीपरित्यक्तस्य पूर्व्वसञ्चितं धनमपि तथा सहैव क्षयं गच्छति, अतस्ते आपदर्थं धनरक्षणोपदेशः वृथैवेति भावः॥ १ ॥

---

(क) उपरिसौधभूमौ—उपरि—ऊर्द्ध्वदेशे, सौधस्य—प्रासादस्य, या भूमिः,—

विविधरत्नानि वैदूर्य्यादीनि दृष्ट्वा तानि तानि परलोक-ऋणानि मत्वा तत्रैव वैराग्यमापन्नो विचारयामास,—

"यद्व्यङ्गाः कुष्ठिनश्चान्धाः पङ्गवश्च दरिद्रिणः।
पूर्वोपार्जितपापस्य फलमश्नन्ति देहिनः" ॥ १ ॥

ततो राजा (ख) निद्राक्षये दिव्यशयनस्थितो विविध-मणिकङ्कणालङ्कृतं दयितावर्गं दर्शनीयमालोक्य गजतुरगरथ-पदातिसामग्रीञ्च चिन्तयन् राज्यसुखसन्तुष्टः प्रमोदभरादाह,—

"चेतोहरा युवतयः सुहृदोऽनुकूलाः
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः।

स्थाने, कक्षदेश इत्यर्थः, तस्यां प्रासादस्य उपरितलस्थकक्षे। खातपातपूर्वं—खातं—गर्त्तं, सन्धिरिति भावः, तस्य पातः,—पातनं, खननमिति भावः, तत् पूर्वं यस्य तद् यथा तथा, सन्धिखननं कृत्वा इत्यर्थः, यद्वा—खन्यते अनेन इति खातं—खनन-साधनमस्त्रविशेष इत्यर्थः, तत्पातपूर्वं—तन्निक्षेपपूर्वकमित्यर्थः। परलोक ऋणानि—परलोके—लोकान्तरे, ऋणानि—ऋणस्वरूपाणि, इह जन्मनि कस्मांश्चित् चौर्य्येण प्रकारान्तरेण वा गृहीतस्य अपरिशोधितस्य च लोकान्तरेऽपि जन्मान्तरेऽपि वा परिशोध्यत्वादिति भावः। तत्रैव—राज्ञः कोशगृहे एव।

प्राणिनां कुष्ठित्वादौ हेतुं विवृणोति, यदिति।—यत—यस्मात, देहिनः,—शरीरिणः, पूर्व्वोपार्ज्जितपापस्य—पूर्व्वस्मिन् जन्मनि, उपार्ज्जितस्य—सञ्चितस्य, पापस्य—अशुभस्य कर्म्मणः, फलं—परिणामम्, अश्नन्ति—भुञ्जते, [ अश+लट्-अन्ति ] तस्मात् व्यङ्गाः,—विगतानि अङ्गानि येषां तादृशाः विकलाङ्गाः, कुष्ठिनः,—कुष्ठरोगाक्रान्ताः, अन्धाः,—दृष्टिशक्तिविहीनाः, पङ्गवः,—गतिशक्तिरहिताः, दरिद्रिणश्च—दरिद्राः,—दीनाः, धर्म्मधर्म्मिणोरभेदोपचारात् दारिद्र्याणीत्यर्थः, तान्येषां सन्ति इति दरिद्रिणः,—निर्धना इत्यर्थः, भवन्तीति शेषः। यद्वा—देहिनः यत् व्यङ्गाः कुष्ठिनः अन्धाः पङ्गवश्च दरिद्रिणश्च, भवन्ति इति शेषः, तत् पूर्व्वोपार्ज्जितस्य पापस्य फलम् अश्नन्ति, इति ज्ञातव्यमिति शेषः ॥ १ ॥

(ख) निद्राक्षये—निद्राभङ्गे। दिव्यशयनस्थितः,—दिव्ये—रमणीये, शयने—शय्यायां, स्थितः,—आसीनः। प्रमोदभरात्—हर्षाऽऽतिशय्यात्।

सकलीयसुखसाधनानि वर्णयति, चेतोहरा इति।—चेतोहराः,—मनोमोहिन्यः,

वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गा:"

इति चरणत्रयं राज्ञोक्तं, चतुर्थचरणं राज्ञो मुखान्न नि:सरति। तत् तदा चौरेण श्रुत्वा पूरितम्,—

"सम्मीलने नयनयोर्न हि किञ्चिदस्ति" ॥ २ ॥

ततः ग्रथितग्रन्थो (ग) राजा चौरं वीक्ष्य तस्मै वीरवलयमदात्।

ततस्तस्करो वीरवलयमादाय ब्राह्मणगृहं गत्वा शयानं ब्राह्मणमुत्थाप्य तस्मै दत्त्वा प्राह,—"विप्र! एतद्राज्ञः पार्थिववलयं बहुमूल्यम् अल्पमूल्येन न विक्रेयम्"। ततो ब्राह्मणः

युवतयः,—तरुण्यः, अनुकूलाः,—प्रियाचारिण्यः, मनोवृत्त्यनुसारिण्यः इत्यर्थः, सुहृदः,—मित्राणि, सद्बान्धवाः,—सन्तः,—साधवः, सच्चरित्राः इत्यर्थः, बान्धवाः,—ज्ञातयः, ("सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः" इत्यमरः) प्रणयगर्भगिरः,—प्रणयगर्भाः,—प्रीतिपूर्णाः, गिरः,—वाचः येषां ते तादृशाः, भृत्याश्च—परिचारकाश्च, मम सन्तोषसाधनाय वर्त्तन्ते इति शेषः, दन्तिनिवहाः,—गजसमूहाः, तरलाः,—चपलाः, द्रुतगामिन इत्यर्थः, तुरङ्गाः,—अश्वाः, वल्गन्ति—उत्प्लुत्य गच्छन्ति, [ वल्ग + लट्-अन्ति ] ("वल्गन्ति" इत्यत्र "सैन्यानि" इति पाठे—सैन्यानि दन्तिनिवहाः तरलाः तुरङ्गाश्च, रणकुशला एते मे सहाया इति भावः। निजैश्वर्य्यदर्शनेन प्रमुदितो राजा चरणत्रयमेतत् आनन्दाऽऽतिशय्येन पठित्वा चतुर्थचरणपाठकाले देहस्य क्षणभङ्गुरतायाः स्मृत्युदयात् विषण्णः तत् पठितुमशक्तः विरराम, निर्विण्णः चौरश्च तत्रस्थः राज्ञोक्तिं श्रुत्वा तत् पूरयितुमाह, सम्मीलने इति।—नयनयोः,—चक्षुषोः, सम्मीलने—सम्मुद्रणे, नेत्रनिमीलने कृते इत्यर्थः, प्राणे च विगते सतीति भावः; किञ्चित्—किमपि, न हि—नैव, अस्ति—विद्यते, यत् सर्वं सुखसाधनं मत्वा हृष्यसि, तत् सर्व्वमेव ते जीवनावधिकमवगन्तव्यम्, अतो मा हृष्य इति भावः। वसन्ततिलकं वृत्तम् ॥ २ ॥

(ग) ग्रथितग्रन्थः,—ग्रथितः,—निबद्धः, पादपूरणेन सम्पूर्णीकृत इत्यर्थः, ग्रन्थः,—अक्षरसङ्घः, श्लोकस्य तुरीयपादीयाक्षरसङ्घः इति यावत्, ("ग्रन्थो ग्रन्थनाधनयोः स्यात् श्लोकाक्षरसङ्घयोः" इति मेदिनी) यस्य सः चतुर्थपादपूरणेन सम्पूर्णीभूतश्लोक इत्यर्थः;। वीरवलयं—वीरत्वस्य पुरस्काररूपं वलयम्।

पण्यवीथ्यां तद्विक्रीय दिव्यभूषणानि पट्टदुकूलानि च जग्राह। ततो राजकीयाः केचन एनं चौरं मन्यमानाः राज्ञो निवेदयन्ति। ततो राजनिकटे नीतः। राजा पृच्छति,—"विप्र! (घ) धार्य्यं पटमपि नास्ति, अद्य प्रातरेव दिव्यकुण्डलाऽऽभरणपट्टदुकूलानि कुतः?"। विप्रः प्राह,—

"भेकैः कोटरशायिभिर्मृतमिव क्ष्माऽन्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन् मुहुर्मूर्च्छितम्।
तस्मिन् शुष्कसरस्यकालजलदेनाऽऽगत्य तच्चेष्टितं
यत्राऽऽकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते" ॥ ३ ॥

तुष्टो राजा तस्मै वीरवलयं चौरप्रदत्तं निश्चित्य स्वयञ्च लक्षं ददौ।

[ इति भोज-चौरविप्रसंवादः ]।

(घ) धार्य्यं पटमपि—परिधेयं वस्त्रमपि।

दैवानुकूल्यादेतत् सर्वं सम्प्राप्तमिति विज्ञापयितुमाह, भेकैरिति।—यस्मिन्—यत्र, शुष्कसरसि—निर्जलसरोवरे, कोटरशायिभिः,—कोटरे—भूरन्ध्रे इत्यर्थः, गर्त्ते इति यावत्, शेरते—अवतिष्ठन्ते इति तादृशैः, सरःस्थगर्त्तमध्यवर्त्तिभिः, [ शी + णिनिः + श्या बहुव० ] भेकैः,—मण्डूकैः, मृतमिव—मृतवत्, स्थितमिति शेषः, जलाभावादिति सर्व्वत्रैव हेतुरूह्यः; कच्छपैः,—कूर्म्मैः, क्ष्माऽन्तर्गतं—क्ष्मायाः,—पृथिव्याः, अन्तर्गतम्—अभ्यन्तरप्रविष्टं, मृत्तिकानिम्ने प्रविष्टमित्यर्थः; पाठीनैः,—सहस्रदंष्ट्राऽऽख्यमत्स्यविशेषैः, "बोयाल" इति ख्यातैरित्यर्थः, ("सहस्रदंष्ट्रः पाठीनः" इत्यमरः) मुहुः,—पुनः पुनः, पृथुपङ्कपीठलुठनात्—पृथवः,—स्थूलाः, बहुला इत्यर्थः, जलशून्यत्वात् ईषत् कठिना इत्यर्थौ वा, पङ्काः,—कर्द्दमाः, पीठाः इव—आसनानीव, तत्र लुठनात्—इतस्ततः अङ्गास्फालनात्, मूर्च्छितं—मूर्च्छनं प्राप्तं, तस्मिन्—पूर्व्वोक्तप्रकारे शुष्कसरसि, अकालजलदेन—अनार्त्तवमेघेन, वर्षाकालेतरकालिकमेघेनेत्यर्थः, आगत्य—समुदीय, तत्—तादृशं, चेष्टितम्—आचरितं, तादृशं जलवर्षणं कृतमित्यर्थः, यत्र—सरसि, आकुम्भनिमग्नवन्यकरिणां यूथैः,—आकुम्भं—कुम्भपर्य्यन्तं, शिरःस्थोन्नतांशद्वयपर्य्यन्तमित्यर्थः, निमग्नानाम्—अवगाढानां, जलान्तःप्रविष्टानामित्यर्थः, वन्यकरिणाम्—आरण्यगजानां, यूथैः,—समूहैः, पयः,—

# भोज-विष्णुकविसंवादः ।

अन्यदा कोऽपि कवीश्वरः विष्णवाख्यः राजद्वारि समागत्य द्वारपालैः प्रवेशितो राजानं दृष्ट्वा स्वस्तिपूर्वकं प्राह,—

"धाराऽधीश ! धरामहेन्द्रगणनाकौतूहली यामयं
वेधास्त्वद्गणने चकार खटिकाखण्डेन रेखां दिवि ।
सैवेयं त्रिदशाऽऽपगा समभवत्त्वत्तुल्यभूमीधरा-
भावात्तु त्यजति स्म सोऽयमवनीपृष्ठे तुषाराचलः" ॥१॥

जलं, पीयते—पानविषयीक्रियते, दैवानुकूल्येन अकालजलदोदयात् शुष्कमपि सरः यथा सहसा जलपूर्णं सत् मृतप्रायभेकादीन् जीवयति, तथा दैवानुग्रहेण कस्यचिदानुकूल्यात् ममायमवस्थापरिवर्त्तो जातः इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

भोजस्य निरुपमत्वमाह, धारेति ।—धाराऽधीश !—हे धारानगरेश्वर !, धरामहेन्द्रगणनाकौतूहली—धरायां—भुवि, महेन्द्राः,—इन्द्रतुल्याः राजानः, तेषां गणनायां—सङ्ख्याने, पृथिव्यां के के महेन्द्रतुल्या नृपा विद्यन्ते इति गणनया स्थिरीकर्त्तुमित्यर्थः, कौतूहलं—कौतुकमस्यास्तीति तादृशः, अयं—जगत्स्रष्टा इत्यर्थः, वेधाः,—विधाता, त्वद्गणने—प्रथमेको महेन्द्र इति तव गणनाकाले, दिवि—आकाशे, खटिकाखण्डेन—खण्डीभूतकठिन्या, यां रेखां—लेखां, दीर्घाकारचिह्नमित्यर्थः, चकार—विदधे, सा एव—पूर्व्वोक्ता सा रेखैव, इयं—सर्व्वलोकपावनीत्यर्थः, त्रिदशाऽऽपगा—सुरधुनी, गङ्गा इत्यर्थः, समभवत्—समजायत, तु—पुनः, त्वत्तुल्यभूमिधराभावात्—त्वत्तुल्यस्य—भवत्सदृशस्य, भूमीधरस्य—भूपालस्य, धरामहेन्द्रस्येत्यर्थः, अभावात्—असत्त्वात् हेतोः, त्यजति स्म—निचिक्षेप, वेधास्तं खटिकाखण्डमिति शेषः, तव नाम उल्लिख्य रेखापातानन्तरं पृथिव्यां भवत्तुल्यद्वितीयमहेन्द्रभूद्रष्टा द्वितीयरेखापातस्य प्रयोजनाभावात् विधिस्तं खटिकाखण्डं दूरे निचिक्षेप इति समुदितार्थः, अवनीपृष्ठे—भूतले, सोऽयं—वेधसा त्यक्तः खटिकाखण्डः, तुषाराचलः,

राजा (क) लोकोत्तरं श्लोकमाकर्ण्य किं देयमिति व्यचिन्तयत्। तस्मिन् क्षणे तदीयकवित्वम् (ख) अप्रतिद्वन्द्व-माकर्ण्य सोमनाथाख्यकवेर्मुखं विच्छायमभवत्। ततः स (ग) दौष्ट्याद्राजानं प्राह,—"देव! असौ सुकविर्भवति, पर-मनेन न कदाऽपि वीक्षिताऽस्ति राजसभा, यतो दारिद्र्य-वारिधिरयम्, अस्य च जीर्णमपि कौपीनं नास्ति"। ततो राजा सोमनाथं प्राह,—

"निरवद्यानि पद्यानि यद्यनाथस्य का क्षतिः?
भिक्षुणा कक्षनिक्षिप्तः किमिक्षुर्नीरसो भवेत्?" ॥२॥

—हिमगिरिः, समभवदिति पूर्वेणान्वयः; धरातले भवानेक एव महेन्द्रोपम इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(क) लोकोत्तरम्—अलौकिकम्, अपूर्व्वमित्यर्थः।

(ख) अप्रतिद्वन्द्वं—प्रतिपक्षविरहितं, प्रतिवादानर्हमित्यर्थः। विच्छायं—कान्तिशून्यं, विवर्णमित्यर्थः।

(ग) दौष्ट्यात्—दौर्ज्जन्यात्, दुष्टस्वभाववशादित्यर्थः। दारिद्र्यवारिधिः,—दारिद्र्यस्य—दरिद्रतायाः, वारिधिरिव वारिधिः,—सागरः, असीमसागर इव असीमदारिद्र्यसम्पन्न इत्यर्थः; यतोऽय महादरिद्रः, तेन विज्ञायते नानेन कदाऽपि राजसभा दृष्टा; सुकविनाऽनेन दृष्टा चेत् राजसभा, नेदृशी दुर्गतिरस्य स्यातु-मर्हति, अत एव राजकुलमर्य्यादाऽनभिज्ञोऽयं न राजानुग्रहमर्हतीति भावः।

गुणग्राही राजा सोमनाथोक्त्या विरक्तः यथोचितं प्रत्युत्तरति, निरवद्यानीति।—निरवद्यानि—अकुत्सितानि, मनोहराणीत्यर्थः, ("निकृष्टप्रतिकृष्टार्व्वरेफयाप्यावमा-धमाः। कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः) पद्यानि—श्लोकाः, यदि—चेत्, अनाथस्य—निराश्रयस्य, दरिद्रस्येत्यर्थः, स्युरिति शेषः, तदा का क्षतिः,—का हानिः? कवेर्दारिद्र्येण सत्कविता न अनादरणीया भवति इत्यर्थः। अत्र दृष्टान्त-माह, भिक्षुणेति।—भिक्षुणा—भिक्षुकेण, कक्षनिक्षिप्तः,—कक्षे—कक्षदेशे, निक्षिप्तः,—स्थापितः, इक्षुः,—गुडयोनितृणविशेषः, किं नीरसः,—रसविहीनः, त्यक्तमाधुर्य्य इत्यर्थः, भवेत्—स्यात्? भिक्षुस्पर्शात् इक्षुः किं निजरसं परित्यजति? नैवेत्यर्थः ॥ २ ॥

ततः सर्वेभ्यः ताम्बूलं दत्त्वा राजा सभाया उदतिष्ठत्। ततः सर्वैरपि (घ) अन्योऽन्यमित्यभ्यधायि,—“अद्य विष्णुकवेः कवित्वमाकर्ण्य सोमनाथेन सम्यग्दौष्ट्यमकारि”। ततः समुत्थिता विद्वत्परिषत्। ततो विष्णुकविरेकं पद्यं पत्रे लिखित्वा सोमनाथकविहस्ते दत्त्वा प्रणम्य गन्तुमारभत,—“अत्र सभायां त्वमेव (ङ) चिरं नन्द”। ततो वाचयति सोमनाथकविः,—

“एतेषु हा! तरुणमारुतधूयमान-
दावानलैः कवलितेषु महीरुहेषु।
अम्भो न चेत् जलद! मुञ्चसि मा विमुञ्च
वज्रं पुनः क्षिपसि निर्दय! कस्य हेतोः?” ॥२॥

ततः सोमनाथकविः निखिलामपि (च) पट्टदुकूलवित्त-

(घ) अन्योऽन्यं—परस्परम्। अभ्यधायि—अवाचि। [अभि+धा+कर्म्मणि लुङ् तन्]।

(ङ) चिरं—दीर्घकालं यावत्। नन्द—प्रीणीष्व, आनन्दितस्तिष्ठ इत्यर्थः, इत्युक्त्वा इति शेषः, गन्तुमारभत इत्यनेनान्वयः।

सोमनाथप्रातिकूल्येन अपूर्णाभिलाषः कविः खेदं प्रकाशयन्नाह, एतेष्विति। —जलद!—हे मेघ!, तरुणमारुतधूयमानदावानलैः,—तरुणेन—नूतनेन, तारुण्यात् प्रबलेनेत्यर्थः, मारुतेन—वायुना, धूयमानाः,—कम्प्यमानाः, सन्धुक्ष्यमाणा इत्यर्थः, ये दावानलाः,—वनाग्नयः, तैः कवलितेषु—ग्रस्तेषु, एतेषु महीरुहेषु—वृक्षेषु, चेत्—यदि, अम्भः,—जलं, न मुञ्चसि—न क्षिपसि, न वर्षसीत्यर्थः, मा विमुञ्च—न क्षिप, न वर्ष इत्यर्थः, तेन न खिद्यामि इति भावः, पुनः,—किन्तु, हा—खेदे, निर्दय!—हे निष्कृप! कस्य हेतोः,—किन्निमित्तं, वज्रम्—अशनिं, क्षिपसि?—पातयसि? एतत्तु नोचितमिति भावः; दारिद्र्यानलसन्तप्तानामस्माकं तापोपशमाय स्वयं किमपि प्रयत्नं न करोषि न कुरु, तेन न किञ्चित वदामि, किन्तु अस्मत्प्रयत्नविध्वंसार्थं यत् निर्दय इव आचरसि तत्तु अतीव दुःखावहमनुचितञ्चेति आशयः। वसन्ततिलकं वृत्तम् ॥२॥

(च) पट्टदुकूलवित्तहिरण्यमयीं—पट्टदुकूलं—क्षौमवस्त्रं, वित्तं—धनं, हिरण्यं

हिरण्मयीं तुरङ्गमादिसम्पत्तिं कलत्रवस्त्रावशेषं दत्तवान्।

ततो राजा मृगयारसप्रवृत्तो गच्छन् तं विष्णुकविमालोक्य व्यचिन्तयत्,—"मया अस्मै भोजनमपि न प्रदत्तं, मामनादृत्य अयं सम्पत्तिपूर्णः स्वदेशं प्रति यास्यति ; भवतु पृच्छामि,—विष्णुकवे ! कुतः सम्पत्तिः प्राप्ता ?"। कविराह,—

"सोमनाथेन राजेन्द्र ! देव ! त्वद्गृहभिक्षुणा।
अद्य शोच्यतमे पूर्णं मयि कल्पद्रुमायितम्" ॥ ४ ॥

राजा पूर्वं सभायां श्रुतस्य श्लोकस्य अक्षरलक्षं ददौ, सोमनाथेन च (क) यावद्दत्तं तावदपि सोमनाथाय दत्तवान्। सोमनाथः प्राह,—

"किसलयानि कुतः कुसुमानि वा
क्व च फलानि तथा वनवीरुधाम् ?।
अयमकारणकारुणिको यदा
न तरतीह पयांसि पयोधरः" ॥ ५ ॥

—सुवर्णं, सुवर्णाभूषणादिकमिति यावत्, तन्मयीं—तदात्मिकां, तत्प्रचुरामित्यर्थः। तुरङ्गमादिसम्पत्तिम्—अश्वगवाद्यैश्वर्य्यजातम्। कलत्रवस्त्रावशेषं—कलत्रं—भार्य्या, वस्त्रं—परिधेयवसनञ्च, अवशेषः,—तन्मात्रशेषः यस्मिन् कर्म्मणि तद्यथा तथा। [ क्रियाविशेषणमेतत् ]।

सोमनाथेनेति।—हे देव ! राजेन्द्र !—हे नृपश्रेष्ठ ! त्वद्गृहभिक्षुणा—त्वद्गृहे—तव भवने, भिक्षुणा—याचकेन, त्वद्दत्तार्थेन जीविकानिर्वाहकारिणेत्यर्थः, सोमनाथेन—सोमनाथाऽऽख्यकविना, शोच्यतमे—अतीवशोचनीयाऽऽवस्थे, मयि अद्य—अस्मिन् दिवसे, पूर्णं—सम्यक्, कल्पद्रुमायितं—कल्पवृक्षवदाचरितं, कल्पवृक्षो यथा अर्थिमनोरथं पूरयति, तद्वन्मनोरथं मे स प्रपूरयामास इत्यर्थः। [ कल्पद्रुम + आचारार्थे क्यच् + भावे क्तः ] ॥ ४ ॥

(क) यावद्दत्तं—विष्णुकवये यत्परिमितं धनं दत्तम्। तावत्—तत्परिमितम्।

सोमनाथकविः राज्ञः धनं लब्ध्वा निजविनयं प्रकाशयति, किसलयानीति।—

ततः विष्णुकविः सोमनाथदत्तेन राज्ञा दत्तेन च तुष्टवान्। तदा सोमन्तकविः प्राह,—

"वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्य्यते।
तमपि कुरुते क्रोड़ाधीनं पयोनिधिरादरात्
अह ह !! महतां निःसीमानश्चरित्रविभूतयः" ॥ ६ ॥

[ इति भोज-विष्णुकविसंवादः ]।

अयम्—एषः, इति राजनिर्द्देशः ; अकारणकारुणिकः,—अकारणे—कारणाभावेऽपि, कारुणिकः,—सदयः, कृपाप्रकाशस्य हेत्वभावेऽपि कृपापरः इत्यर्थः, पयोधरः,—मेघः, तत्सदृशः राजा इति ध्वनिः ; यदा—यदि इत्यर्थः, इह—अस्मिन् वने, अस्मादृशे इति ध्वनिः ; पयांसि—जलानि, धनानीति ध्वनिः ; न तरति—न वितरतीत्यर्थः, ("अयमकारणकारुणिको न चेत् वितरतीह पयांसि पयोधरः" इति पाठान्तरः सुगमः)। तदा वनवीरुधाम्—अरण्यविटपानां, शाखादिभिर्विस्तृत-वनलतानामिति वा, ("वीरुध् लताविटपयोः स्त्रियाम्" इति मेदिनी। "लता प्रतानिनी वीरुध् गुल्मिन्युलप इत्यपि" इत्यमरश्च)। किसलयानि—पल्लवानि, नवपत्राणीत्यर्थः, कुसुमानि वा—पुष्पाणि च, कुतः,—कस्मात्, तथा फलानि च—शस्याण्यपि, क्व—कुत इत्यर्थः, सम्भवेयुरिति उभयत्रापि शेषः ; मेघश्चेत् जलं न वर्षति तर्हि पत्रपुष्पादिकं न किमपि सम्भवतीत्यर्थः ; भवता मह्यमिदं सर्वं न दत्तञ्चेत् का शक्तिर्मे ईदृशप्रभूतदानस्य ? भवद्दत्तधनमेव मया विप्राय दत्तमतः एतद्दानमपि तवैवेति तात्पर्य्यम्। द्रुतविलम्बितं वृत्तम् ॥ ५ ॥

राजचरित्रमहिम्ना चमत्कृतः कविः सोमन्तः दृष्टान्तद्वारा महतां महत्त्वस्य असीमत्वं समर्थयते, वहतीति।—शेषः,—अनन्तनागः, फणाफलकस्थितां—फणाः,—स्वीयसहस्रसङ्ख्यकाः फटाः, फलकानीव—पट्टकानीव, तत्र स्थितां—वर्त्तमानां, सुविस्तृतफणामण्डलस्थां, भुवनश्रेणीं—चतुर्दश लोकान्, वहति—धारयति, स च—तादृशभुवनसमूहधारी शेषश्च, कमठपतिना—कूर्म्मराजेन, कूर्म्मरूपिणा भगवता नारायणेनेत्यर्थः, मध्येपृष्ठं—पृष्ठमध्ये, पृष्ठोपरीत्यर्थः, [ पृष्ठस्य मध्ये इति "पारे मध्ये षष्ठ्या वा" (२।१।१८ पा०) इति समासः, एदन्तत्वञ्च निपातनात् ] सदा—नित्यं, धार्य्यते—उह्यते, फणाऽऽरोपितचतुर्दशभुवनं गुरुभारं शेषं कूर्म्मराजः

# भोज-श्रीपतिसंवादः।

कदाचित् सौधतले राजानमेत्य भृत्यः प्राह,—"देव! अखिलेष्वपि कोशेषु यद्वित्तजातमासीत्, तत् सर्वं देवेन कविभ्यो दत्तम्, इदानीं कोशगृहे धनलेशोऽपि नास्ति। कोऽपि कविः प्रत्यहं द्वारि तिष्ठति। इतःपरं कविर्विद्वान् वा कोऽपि (क) राज्ञे न प्राप्यः, इति मुख्यामात्येन देवसन्निधौ विज्ञापनीयमित्युक्तम्"। राजा कोशस्थं सर्वं दत्तमिति जानन्नपि प्राह,—"अद्य द्वारस्थं कविं प्रवेशय"। ततः श्रीपतिनामा विद्वानागत्य,—"स्वस्ति" इति वदन् प्राह,—

"नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखविसृष्टोत्तानचञ्चूपुटेन।

---

पृष्ठं धारयति इत्यर्थः ; एतेन कमठपतेः शेषापेक्षयाऽपि गुरुभारवाहित्वं गुरुत्वञ्च सूच्यते ; पयोनिधिः,—समुद्रः, तमपि—तादृशगुरुभारवाहित्वात् गुरुतमं कमठमपि, आदरात्—प्रयत्नातिशयात्, भारबोधाभावात् अवलीलयैवेति भावः, क्रीड़ाधीनम्—अङ्काऽऽरोपितं, कुरुते—विधत्ते, एतेन पयोनिधेः सर्वापेक्षया गुरुत्वं महत्त्वञ्च सूच्यते ; अहह !!—आश्चर्य्यं, महताम्—उत्तमानां, चरितविभूतयः,—चरितसम्पदः, निःसीमानः,—असीमाः, परिमातुमक्षमा इत्यर्थः, भवन्तीति शेषः, पयोनिधिर्यथा सर्वभुवनशेषं कमठं वोढुं न कियानपि कातरो भवति, तथा त्वमपि सर्वविद्वत्-सीमनाथं पालयितुमिति भावः। हरिणी वृत्तम् ॥ ६ ॥

---

(क) राज्ञे—नृपाय, न प्राप्यः,—न नेतव्यः, अस्माभिरिति शेषः, वयमिदानीं कमपि कविं विद्वांसं वा राजसमीपं नेतुं न दास्याम इत्यर्थः।

धनाभावात् विमनस्कं राजानं स्वाभ्यर्थनाविमुखं मौनिनं दृष्ट्वा नैराश्येनाऽऽह, नभसीति।—जलधर!—हे मेघ! राजन्निति ध्वनिः; निरवलम्बे—निराधारे,

जलधर! जलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन" ॥ १ ॥

राजा तदाकर्ण्य—"धिग् जीवितं, यद्विद्वांसः कवयश्च द्वारमागत्य सीदन्ति" इति तस्मै विप्राय सर्वाण्याभरणान्युत्तार्य्य ददौ।

[ इति भोज-श्रीपतिसंवादः ]।

---

## भोज-मुचुकुन्दसंवादः।

ततो राजा कोशाधिकारिणमाहूय प्राह,—"भाण्डारिक! मुञ्जराजस्य तथा मे पूर्वेषाञ्च ये कोशाः सन्ति, तेषां मध्ये रत्नपूर्णाः कलशाः कुत्र?"। ततः काश्मीरदेशान्मुचुकुन्दकविरागत्य "स्वस्ति" इत्युक्त्वा प्राह,—

---

विश्रामार्थं देहभारस्थापनार्हं इत्यर्थः, नभसि—आकाशे, दीर्घकालं—चिरं, सीदता—क्लिश्यता, दीर्घकालं व्याप्य निरालम्बशून्यप्रदेशावस्थानादवसन्नदेहेनेत्यर्थः, [ सद + अत + ३या १व० ] त्वदभिमुखविसृष्टोत्तानचञ्चुपुटेन—त्वदभिमुखं—तव सम्मुखं, विसृष्टं—प्रेरितं, स्थापितमित्यर्थः, उत्तानम्—अगम्भीरं, स्वल्परन्ध्रमित्यर्थः, ऊर्द्ध्वीकृतमित्यर्थो वा, ("उत्तानमगभीरे स्यादूर्द्ध्वाऽऽस्यशायिते त्रिषु" इति मेदिनी) चञ्चूपुटम्—ओष्ठपुटं येन तादृशेन, चातकेन—तदाख्यपक्षिविशेषेण, याचकेन इति ध्वनिः; जलधारा—सलिलाऽऽसारः, वृष्टिसम्पातः इत्यर्थः, धनवृष्टिरिति ध्वनिः; तावत् दूरतः,—दूरे, आस्तां—तिष्ठतु, ते—तव, मधुरः,—श्रुतिसुखदः, ध्वनिरपि—गर्ज्जनमपि, स्वागतसम्भाषणादिकमपीति ध्वनिः; न श्रुतः,—न आकर्णितः; दारिद्र्यसन्तप्तेन निराश्रयेण मया भवतो किञ्चित् लप्स्यते इति त्वत्सकाशं समुपस्थितेन च अभिलषितं धनन्तु नाऽऽप्तमेव, परन्तु तव मधुरसम्भाषणादिकमपि दुरदृष्टवशात् न लब्धमिति तात्पर्य्यम्। मालिनी वृत्तम् ॥ १ ॥

"त्वद्यशोजलधौ भोज! निमज्जनभयादिव।
सूर्य्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः" ॥ १ ॥

राजा तस्मै प्रत्यक्षरं लक्षं ददौ। पुनः कविराह,—

"आसन् क्षीणानि यावन्ति चातकाश्रूणि तेऽम्बुद!।
तावन्तोऽपि त्वयोदार! न मुक्ता जलबिन्दवः" ॥ २ ॥

ततः राजा तस्मै शततुरगानपि ददौ। ततः भाण्डारिको लिखति,—

---

भोजयशस: अप्रमेयत्वमाह, त्वदिति।—हे भोज! नभः,—आकाशं, त्वद्यशो-जलधौ—भवत्कीर्त्तिरेव जलधिः,—समुद्रः, अलङ्घ्यत्वादप्रमेयत्वाच्चेति भावः, तत्र, निमज्जनभयादिव—अन्तःप्रवेशत्रासादिव, सूर्य्येन्दुबिम्बमिषतः,—सूर्य्यचन्द्रमण्डलद्वय-च्छलेन, सूर्य्यचन्द्रमण्डलरूपमित्यर्थः, कुम्भद्वयं—कलसयुगलं, तदवलम्बनेन जलोपरि प्लवनार्थमिति भावः; धत्ते—धारयति, यथा कश्चित् अगाधजलधौ सन्तितीर्षुः निमग्नीभवनभयात् कुम्भयुगलमवलम्ब्य जलोपरि प्लवते, तथा नभोऽपि परिमातुमक्षमं तव यशःपारावारे निमज्जनशङ्कया दिवा सूर्य्यमण्डलरूपं रात्रौ च चन्द्रमण्डलरूपं कलसद्वयम् अवलम्ब्य वर्त्तते इति समुदितार्थः। अहो! ते यशसः असीमत्वं, यत्र असीमं नभोऽपि ससीमं सञ्जातमिति भावः ॥ १ ॥

राजतः प्राप्तेन दानेन अपूर्णाऽऽशः पुनः किञ्चित् प्रार्थयमाह, आसन्निति।—अम्बुद!—हे जलद!, राजन्! इति ध्वनिः; ते—तुभ्यं, त्वामुद्दिश्य इत्यर्थः, यावन्ति—यावत्परिमाणानि, चातकाश्रूणि—चातकस्य नेत्रजलानि, क्षीणानि—क्षयं गतानि, पतितानीति यावत्, दीर्घकालं याचित्वाऽपि जलाप्राप्त्या रोदनकरणा-दिति भावः; आसन्—अभवन्, उदार!—हे दातः! इति सोल्लुण्ठनोक्तिः, विपरीतलक्षणया अनुदार इति भावः; ("उदारो दातृमहतोः" इत्यमरः) त्वया तावन्तः,—तत्परिमिताः, जलबिन्दवोऽपि—सलिलकणा अपि, धनलवा अपि इति ध्वनिः; न मुक्ताः,—न विसृष्टाः, चातकायेति शेषः; क्षुद्रचातकस्य अश्रुबिन्दवः स्वभावतः स्वल्पा एव, स स्वल्पान्यपि यान्यश्रूणि मुमोच, कृपणस्त्वं तावदपि जलं तस्मै न व्यतारीरिति भावः; अहं यावन्ति दिनानि क्लेशं दुर्विषहमनुभूय काश्मीरादिह समागतवानस्मि, यावन्ति च दिनानि भवतो द्वारमवष्टाय क्लेशमन्वभवं, तदुपयुक्तं दानं नालभे इति तात्पर्य्यम् ॥ २ ॥

"मुचुकुन्दाय कवये जात्यानश्वान् शतं ददौ।
भोजः प्रदत्तलक्षोऽपि तेनासौ याचितः पुनः" ॥ ३ ॥

ततो राजा (क) सर्वानपि वेश्म प्रेषयित्वाऽन्तर्गच्छति। ततो राज्ञश्चामरग्राहिणी प्राह,—

"राजन्! मुञ्जकुलप्रदीप! सकलक्ष्मापालचूड़ामणे!
युक्तं सञ्चरणं तवाद्भुतमणिच्छत्रेण रात्रावपि।
मा भूत्त्वद्वदनावलोकनवशात् व्रीड़ाऽभिनम्रः शशी
मा भूच्चेयमरुन्धती भगवती दुःशीलताभाजनम्" ॥ ४ ॥

राजा तस्यै प्रत्यक्षरं लक्षं ददौ।

[ इति भोज-मुचुकुन्दसंवादः ]।

---

मुचुकुन्दायेति।—मुचुकुन्दाय कवये—तदाख्यपण्डिताय, प्रदत्तलक्षोऽपि—प्रदत्तं—वितरितं, लक्षं—लक्षमुद्रा येन तादृशोऽपि, असौ—सुप्रसिद्धः धारेशः, भोजः,—भोजराजः, तेन—मुचुकुन्देन, पुनः,—भूयः, याचितः,—प्रार्थितः सन्, शतं—शतसङ्ख्यकान्, जात्यान्—जातौ—गोत्रे, प्रशस्तवंश इत्यर्थः, भवान् उत्कृष्टजातीयान्, ("जातिः स्त्री गोत्रजन्मनोः" इति मेदिनी) अश्वान्—घोटकान्, ददौ—समर्पयामास ॥ ३ ॥

(क) सर्वानपि, सभ्यानिति शेषः। वेश्म—गृहं, स्वस्वभवनमित्यर्थः। अन्तः,—अन्तःपुरम्।

राज्ञः कन्दर्पाधिकसौन्दर्य्यं विवरीतुमाह, राजन् इति।—राजन्!—हे नरेश्वर!, मुञ्जकुलप्रदीप!—हे मुञ्जकुलोज्ज्वलकारिन्!, सकलक्ष्मापालचूड़ामणे!—सकलानां—सर्वेषां, क्ष्मापालानां—भूपालानां, चूड़ामणे!—मुकुटस्थमणिस्वरूप!, हे निखिलनृपकुलभूषण!, तव—भवतः, रात्रावपि—रजन्यामपि, अनातपेऽपीति भावः; "रात्रौ दण्डी दिवा छत्री सोपानद्युगमावहेत्" इति शास्त्रात् दिवा एव छत्रसहायेन भ्रमणस्य विधेयत्वादित्यपिशब्दार्थः; अद्भुतमणिच्छत्रेण—अद्भुतं—विचित्रं, यत् मणिच्छत्रं—रत्नादिघटितमातपत्रं तेन, तदवलम्बनेनेत्यर्थः, छत्रावरणेनात्मानमावृत्य इति भावः; [ सहार्थे इत्थम्भूतलक्षणे वा तृया ] सञ्चरणं—भ्रमणं, युक्तं—न्याय्यम्। कुतो युक्तम्? इत्याह, मा भूदिति।—शशी—चन्द्रः, त्वद्वदनावलोकनवशात्—तव मुखदर्शनाद्धेतोः, तव मुखं विलोक्येत्यर्थः, व्रीड़ाऽभिनम्रः,

# भोज-गोपालसंवादः।

अन्यदा कुण्डिननगराद्गोपालो नाम कविरागत्य स्वस्तिपूर्वकं प्राह,—

"त्वच्चित्ते भोज ! निर्बाधं द्वयं तृणकणायते।
क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः" ॥ १ ॥

राजा श्रुत्वा तुष्टोऽपि न ददाति, राजपुरुषैः सह (क) चर्चां कुर्वाणस्तिष्ठति। ततः कविः व्यचिन्तयत्,—"किमु राज्ञा

---

—व्रीडया—लज्जया, मुखशोभया त्वया पराजितत्वादिति भावः; अभिनम्रः,—अवनतः, मा भूत—न भवतु, स्वापेक्षयाऽपि अतिकमनीयां तव मुखशोभां शशी पश्येत्, स लज्जया नियतमेव अवनतवदनो भवेत्, छत्रावरणेन आवृतत्वात् तव मुखदर्शनाभावे तस्य सा लज्जा नैव भवेदिति भावः; इयं—नभसि दृश्यमाना पतिव्रतात्वेन सुप्रसिद्धा, भगवती—महैश्वर्य्यमयी, अरुन्धती च—नक्षत्ररूपिणी वशिष्ठपत्नी च, दुःशीलताभाजनं—नष्टचारित्र्यपात्री; निरुपमसौन्दर्य्यसम्पन्नमुखदर्शनेन चित्तचाञ्चल्योदयात् पातिव्रत्यभङ्गेन इति भावः; मा भूत—न भवतु; अतस्ते रात्रावपि छत्रेण सञ्चरणं युक्तमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

---

भोजस्य शौर्य्यौदार्य्ये लोकोत्तरे वित्तणोति, त्वच्चित्ते इति।—हे भोज ! त्वच्चित्ते—तव मनसि, इयं—वक्ष्यमाणमेतद्द्वयं, निर्बाधं—निःसंशयं, निश्चितमित्यर्थः, तृणकणायते—तृणकणावत् प्रतीयते, खण्डिततृणवदनादरणीयो भवति इत्यर्थः। किन्तद्द्वयमित्याह, क्रोधे इति।—क्रोधे—कोपे समुत्पन्ने सति, विरोधिनां—शत्रूणां, सैन्यं—बलं, प्रसादे—अनुग्रहे, अनुग्रहप्रदर्शनकाले इत्यर्थः, कनकोच्चयः,—सुवर्णराशिः, क्रोधे समुपस्थिते शत्रुसैन्यं तृणाय मत्वा विदलसि, सन्तोषे च सञ्जाते सुवर्णराशिं तृणवदकातरेण प्रसादभाजनाय त्यजसीति समुदितार्थः ॥ १ ॥

क) चर्चां—विचारं, ("चर्चा सङ्ख्या विचारणा" इत्यमरः)।

माश्राबि ?"। ततः चणेन समुन्नतमेवावलोक्य राजानं कविराह,—

"हे पाथोद ! यथोन्नतं हि भवता दिग्व्यावृता सर्वतो
मन्ये धीर ! तथा करिष्यसि खलु चीराब्धितुल्यं सरः।
किन्त्वेष चमते न हि चणमपि ग्रीष्मोष्मणा व्याकुलः
पाठीनादिगणस्त्वदेकशरणस्तद्वर्ष तावत् कियत्" ॥ २ ॥

राजा कविहृदयं विज्ञाय—"गोपालकवे ! दारिद्र्याग्निना नितान्तं दग्धोऽसि" इति वदन् षोड़श मणीननर्घ्यान् षोड़श दन्तीन्द्रांश्च ददौ।

[ इति भोज-गोपालसंवादः ]।

---

राजसकाशात् किञ्चिदप्राप्तः कविः मेघं व्याजीकृत्य राज्ञे स्वाभिप्रायं निवेदयति, हे पाथोदेति।—हे पाथोद !—भो मेघ !, राजन् इति ध्वनिः, भवता—त्वया, यथा—येन प्रकारेण, उन्नतम—उदितम, ऊर्द्ध्वमुत्थाय स्थितमित्यर्थो वा, हि—निश्चये, यथा च भवता सर्व्वतः,—सर्व्वतोभावेन, दिक्—पूर्व्वादिः, व्यावृता—आच्छादिता ; यद्वा—सर्वतः,—समन्तात्, दिग्व्यावृता—दिशो व्यावृणोति—आच्छादयति इति दिग्व्यावृत् [ वि + आ + वृ + क्विप् ] तेन, विशेषेण दिङ्मण्डलं व्याप्नुवता, भवता यथा उन्नतम् ; तथा—तेन प्रकारेण, तवोन्नतिप्रकारं दृष्ट्वेत्यर्थः, धीर !—हे धैर्य्यशालिन् ! धीरत्वात् चिरकारिन् इति भावः, मन्ये—सम्भावयामि, अहमिति शेषः, सरः,—सरोवरं, लोकामिति सभामिति वा ध्वनिः ; चीराब्धितुल्यं—चीरसागरोपमं, प्रभूतजलवर्षणेन अतलस्पर्शमतिस्फीतकायञ्चेति भावः ; प्रभूतधनवर्षणेन रत्नाकरतुल्यमिति ध्वनिः ; करिष्यसि—सम्पादयिष्यसि, खलु—निश्चये, किन्तु ग्रीष्मोष्मणा—निदाघसन्तापेन, व्याकुलः,—पीड़ितः, दारिद्र्यसन्तप्त इति ध्वनिः ; त्वदेकशरणः,—त्वमेव एकं—मुख्यं, शरणम्—आश्रयः यस्य तादृशः, एषः,—अयं, पाठीनादिगणः,—सहस्रदंष्ट्रमत्स्यविशेषकूर्म्मादिसमूहः, अस्मद्विधो दरिद्र इति ध्वनिः ; चणमपि— मुहूर्त्तमपि, न हि—नैव, चमते—सहते, वर्षणविलम्बमिति शेषः, तत्—तस्मात्, विलम्बाचमत्वादित्यर्थः, कियत्तावत्—किञ्चिन्मात्रं, कियत्परिमितमित्यर्थः, ("तावन्मानेऽवधारणे" इति मेदिनी) वर्ष—मुञ्च, आदौ किञ्चिद्दत्त्वा अस्माकं दुःखं सान्त्वय, नो वयं विलम्बं सोढुं चमा इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

# भोज-भास्कर-शाकल्यसंवादः।

एकदा राजा धारानगरे विचरन् क्वचिच्छिवालये प्रसुप्तं पुरुषद्वयमपश्यत्। तयोरेको विगतनिद्रो वक्ति,—"अहो! त्वं मम (क) आस्तराऽऽसन्न एव, कस्त्वम्? प्रसुप्तोऽसि, जागर्षि नो वा?"। ततस्त्वपर आह,—"विप्र! प्रणतोऽस्मि, अहमपि ब्राह्मणपुत्रः, त्वामत्र प्रथमरात्रौ शयानं वीक्ष्य प्रदीप्ते च प्रदीपे कमण्डलूपवीतादिभिर्ब्राह्मणं ज्ञात्वा भवदास्तराऽऽसन्न एवाहं प्रसुप्तः। इदानीं त्वद्गिरमाकर्ण्य प्रबुद्धोऽस्मि"। प्रथमः प्राह,—"वत्स! यदि त्वं प्रणतोऽसि, ततो दीर्घायुर्भव; वद, कुत आगम्यते? किन्ते नाम? अत्र च किं कार्य्यम्?"। द्वितीयः प्राह,—"विप्र! भास्कर इति नाम, पश्चिमसमुद्रतीरे प्रभासतीर्थसमीपे वसतिर्मम; तत्र भोजस्य वितरणं बहुभिः व्यावर्णितं, ततो याचितुमहमागतः। त्वं मम वृद्धत्वात् पितृकल्पोऽसि, त्वमपि स्वपरिचयं वद।" स आह,—"वत्स! शाकल्य इति मे नाम, मया एकशिलानगर्य्या आगम्यते भोजं प्रति द्रविणाऽऽशया। वत्स! त्वयाऽनुक्तमपि दुःखं त्वयि ज्ञायते, कीदृशं तद्वद"। ततो भास्करः प्राह,—"तात! किं ब्रवीमि दुःखम्,—

क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाऽऽशया बान्धवा
लिप्ता झर्झरगर्गरी जतुलवैर्नो मां तथा बाधते।

(क) आस्तराऽऽसन्नः,—आस्तरः,—आस्तरणं, शय्याऽऽच्छादनवस्त्रमित्यर्थः, तस्य आसन्नः,—समीपवर्त्ती, तदुपरिस्थ इत्यर्थः, मम शय्योपरि शयान इति समुदितार्थः।

स्वदारिद्र्यवर्णनप्रसङ्गात् प्रतिवासिनां दुर्व्यवहारं विवृणोति, क्षुत्क्षामा

गेहिन्यास्त्रुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं
कुप्यन्ती प्रतिवेश्म लोकगृहिणी सूचिं यथा याचिता"॥१॥

राजा श्रुत्वा सर्व्वाऽऽभरणान्युत्तार्य्य तस्मै दत्त्वा प्राह,—"भास्कर! सीदन्त्यतीव ते बालाः, झटिति देशं याहि"।

ततः शाकल्यः प्राह,—

"अत्युद्धृता वसुमती दलितोऽरिवर्गः
क्रोडीकृता बलवता बलिराजलक्ष्मीः।

इति।—क्षुत्क्षामाः,—क्षुधा—क्षुधया, क्षामाः,—कृशाः, बुभुक्षापीड़िताः, शिशवः,—बालाः, शवा इव—मृता इव, अन्नाभावात् अतिशीर्णा मे पुत्रा मृतवदित-स्ततः पतिता वर्त्तन्ते इत्यर्थः, बान्धवाः,—ज्ञातयः, भृशम्—अत्यर्थं, मन्दाऽऽशयाः,—मन्दः,—क्रूरः, आशयः,—अभिप्रायः येषां तादृशाः, दुर्व्यवहारा इत्यर्थः, बान्धवा अपि निर्धनान् अस्मान् प्रति न सदयव्यवहारकारिण इति भावः; झर्झरगर्गरी—झर्झरः,—वाद्यविशेषः, तद्वत् शब्दकारिणीत्यर्थः, गर्गरी—मन्थनी, दधि-मन्थनपात्रविशेष इत्यर्थः, ("मन्थनी गर्गरी समे" इत्यमरः) भग्नत्वात् लाक्षालिप्त झर्झरशब्दकारिदधिमन्थनपात्रविशेष इति निष्कर्षः, ("झर्झरकर्करी" इति पाठे—कर्करी—भाण्डविशेषः, "झारी" इति ख्यातः सनालजलपात्रविशेषः इत्यर्थः, ("कर्करी भाण्डभेदे ना दर्पणे कठिने त्रिषु" इति मेदिनी) अन्यत् समानम्। "जर्जरकर्करी" "जर्जरगर्गरी" इति पाठे—जर्जरः,—भग्नः। "झर्झरघर्घरी" इति पाठभेदः)। जतुलवैः,—लाक्षाविन्दुभिः, ("लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमाऽऽमयः" इत्यमरः) लिप्ता—दिग्धा, एतत् सर्वं दुःखकारणं, मां तथा—तादृशं, न बाधते—न पीड़यति, गेहिन्याः,—पत्न्याः, त्रुटितांशुकं—छिन्नवसनं, घटयितुं—योजयितुं, सीवितुमित्यर्थः, प्रतिवेश्म—प्रतिगृहं, सूचिं—सीवनार्थां शलाकां, सकाकुस्मितं—काकुः,—ध्वनिविकारः, भिक्षायां लज्जाजनितस्वरविकृतिविशेष इत्यर्थः, ("काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इत्यमरः) तया सह स्मितम्—ईषद्धास्यं, विकृतस्वरेण ईषद्धास्यमित्यर्थः, कृत्वा—विधाय, याचिता—प्रार्थिता, मयेति शेषः, अत एव कुप्यन्ती—क्रुध्यन्ती, लोकगृहिणी—लोकानां—प्रति-वेशवासिजनानां, गृहिणी—भार्य्या, यथा—यादृशं, बाधते इति पूर्वेणान्वयः; ईदृश-दरिद्रोऽहं यत् अकिञ्चनां सूचिमपि क्रेतुमसमर्थः इति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥१॥

भोजस्य सर्व्वदेवमयात् नारायणादपि औत्कर्ष्यं प्रकटयति, अत्युद्धृतेति।—

एकत्र जन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत् पुरुषः पुराणः" ॥ २ ॥

ततो राजा शाकल्याय लक्षत्रयं दत्तवान् ।

[ इति भोज-भास्कर-शाकल्यसंवादः ] ।

## भोज-गालवसंवादः ।

अन्यदा राजा मृगयारसेन विचरन् तत्र पुरः समागत-हरिणीं बाणेन विद्धायामपि वित्ताऽऽशया गालवनामा कोऽपि कविराह,—

यूना—तरुणेन, बलवता—बलिना, अनेन—परिदृश्यमानेन भवता इत्यर्थः, वसुमती—पृथिवी, अभ्युद्धृता—अतिशयेन उच्चैः स्थापिता, भोजभर्तृका इयमिति भुवनत्रयेषु महागौरवं प्रापिता इत्यर्थः, अरिवर्गः,—शत्रुसमूहः, दलितः,—विनाशितः, तथा बलिराजलक्ष्मीः,—बलिनां—बलवतां, राज्ञां—प्रतिपक्षनृपाणां, लक्ष्मीः,—सम्पत्तिः, क्रोडीकृता—अङ्कीकृता, अङ्कारोपितवत् स्वायत्तीकृता इत्यर्थः, अतः एकत्र—एकस्मिन्, जन्मनि—जातौ, यत्—कर्म्म, कृतं—सम्पादितं, पुराणः,—सनातनः, विशेषज्ञ इति भावः, पुरुषः,—पुमान्, विष्णुरित्यर्थः, जन्मत्रये—वराहवामनपरशुरामाऽऽत्मकावतारत्रितये, तत्—कार्य्यं, वसुमत्या उद्धारा-दिरूपं कर्म्मत्रयम् इत्यर्थः, अकरोत्—समपादयत, विष्णुः वराहावतारे जलमग्नां पृथिवीं शौर्य्यविशालदन्तेन उद्धृतवान्, परशुरामरूपं परिगृह्य एकविंशतिवारान् रिपून् निखिलक्षत्रान् व्यनाशयत, तथा वामनरूपेण च वैरोचनेर्बलिराजस्य निखिलै-श्वर्य्यं त्रिपादभूमिप्रार्थनाच्छलेन स्वायत्तमकरोत्, एवञ्च तेन जन्मत्रितये यत् कर्म्म सम्पादितं, तत् तरुणवयस्केन तदपेक्षया च अनभिज्ञेन भवता एकस्मिन् एव जन्मनि सम्पादितम्, अतः पुरुषोत्तमादपि उत्तमपुरुषत्वमिति किमपरं वक्तव्यम् ? इति भावः । वसन्ततिलकं वृत्तम् ॥ २ ॥

"श्रीभोजे मृगयां गतेऽपि सहसा चापे समारोपिते-
ऽप्याकर्णान्तगतेऽपि मुष्टिगलिते बाणेऽङ्गलग्नेऽपि च।
स्थानान्नैव पलायितं न चलितं नोत्कम्पितं नोत्प्लुतं
मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया" ॥१॥

राजा तस्मै लक्षत्रयं प्रयच्छति।

[ इति भोज-गालवसंवादः ]।

## भोज-विदुषीसंवादः।

अन्यदा सिंहासनमलङ्कुर्वाणे श्रीभोजनृपतौ द्वारपाल आगत्य प्राह—"देव! जाह्नवीतीरवासिनी काचन वृद्धब्राह्मणी

मृगयावर्णनप्रसङ्गेन भोजस्य अप्रतिमसौन्दर्यं प्रकटयति, श्रीभोजे इति।—श्रीभोजे—श्रीमद्भोजनृपतौ, मृगयाम्—आखेटं, गतेऽपि—प्रस्थितेऽपि, सहसा—झटिति, मृगं दृष्ट्वेत्यर्थः, चापे—धनुषि, समारोपितेऽपि—कृताधिज्येऽपि, तथा आकर्णान्तगतेऽपि—कर्णसमीपपर्यन्तमाकृष्टेऽपि, आकर्णाऽऽकृष्टशरासनेऽपीत्यर्थः, बाणे—शरे, मुष्टिगलिते—मुष्टितः,—बद्धपाणेः, गलिते—निर्गतेऽपि, तथा अङ्गलग्ने-ऽपि च—शरीरप्रविष्टेऽपि च, बाणेन देहे विद्धेऽपीत्यर्थः, मृग्या—हरिण्या, कामोऽयं—कन्दर्पोऽयं, दयितं—प्रियं, भर्तारमित्यर्थः, मद्वशगं—मद्वशीभूतं, मदधीनमित्यर्थः, करोति—विदधाति, इत्याशया—एवं मनसि कृत्वा, स्थानात—स्वस्थानात्, नैव पलायितं—नैव पलायनं कृतं, द्रुतगमनेन नैव अदृश्यया सञ्जातमित्यर्थः, न चलितं—न गतं, स्थानान्तरगमनोद्योगोऽपि न कृत इत्यर्थः, न उत्कम्पितम्—अङ्गानां किञ्चिच्चालनमपि न कृतमित्यर्थः, गमनप्रारम्भे अङ्गचालनादिना स्थानान्तरगमनस्य अभिप्रायोऽपि न प्रकाशित इति भावः; न उत्प्लुतं—न उल्लम्फनमपि कृतम्; अनुपमरूपसम्पन्नं त्वां दृष्ट्वा मृग्या अपि कन्दर्पभ्रमः भवतीत्यहो! सुभगत्वं ते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

विदुषी द्वारि तिष्ठति"। राजाऽऽह—"प्रवेशय"। तत आगच्छन्तीं राजा प्रणमति। सा तं "चिरञ्जीव"इत्युक्त्वाऽऽह,—

"भोजप्रतापाग्निरपूर्व एष जागर्त्ति भूभृत्कटकस्थलीषु।
यस्मिन् प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु"॥१॥

राजा तस्यै रत्नपूर्णं कलशं प्रयच्छति। ततो लिखति भाण्डारिकः,—

"भोजेन कलशो दत्तः सुवर्णमणिसम्भृतः।
प्रतापस्तुतितुष्टेन वृद्धायै राजसंसदि"॥ २॥

[इति भोज-विदुषीसंवादः]।

---

भोजप्रतापस्य अपूर्व्वत्वमाह, भोजेति।—एषः,—जगति सुविदित इत्यर्थः, अपूर्व्वः,—अन्यत्रादृष्टपूर्व्वः, अतिविस्मयकर इत्यर्थः, भोजप्रतापाग्निः,—भोजस्य वीर्य्यवह्निः, भूभृत्कटकस्थलीषु—भूभृतां—राज्ञां, भूमिधराणाञ्च, पर्व्वतानाञ्चेत्यर्थः, कटकस्थलीषु—राजधानीप्रदेशेषु, नितम्बदेशेषु च, ("कटकोऽस्त्री नितम्बोऽद्रेर्दन्तिनां दन्तमण्डले। सामुद्रलवणे राजधानीवलययोरपि" इति मेदिनी) जागर्त्ति—ज्वलतीत्यर्थः, भोजस्य वीर्य्यानलः प्रतिपक्षनृपाणां राजधानीषु विचक्षभावेण स्वप्रभावं प्रकाशयतीति समुदितार्थः। कीदृशं तदपूर्व्वत्वमित्याह, यस्मिन्निति।—यस्मिन्—प्रतापाग्नौ, प्रविष्टे—भवनान्तर्गते इत्यर्थः, रिपुपार्थिवानां—शत्रुनृपतीनां, गृहाङ्गणेषु—भवनचत्वरेषु, ("अङ्गनं प्राङ्गणे याने कामिन्यामङ्गना मता" इति विश्वे नान्तवर्गे अङ्गनशब्दः पठितः। "अङ्गणम्" इति मूर्द्धण्यान्तपाठे तु पृषोदरादिः" इति भानुजीदीक्षितकृतामरटीका) तृणानि—शष्पाणि, रोहन्ति—उत्पद्यन्ते इत्यर्थः,भोजभयेन गृहाधिकारिणां पलायनात् शून्यगृहतया तृणाद्युत्पत्तिरिति भावः; साग्निकस्थानं तृणादिविहीनमेव जायते इति लोके दृश्यते, भोजप्रतापाग्नेरिदमेव वैचित्र्यं यत्, सोऽग्निर्यत् स्थानं दहति, तत्र तृणान्युद्गच्छन्तीति महाप्रतापी भवान् रिपुकुलतापनः इति तात्पर्य्यम्। इन्द्रोपेन्द्रवज्रयोरुपजातिः वृत्तम्" ॥ १ ॥

भोजेनेति।—राजसंसदि—राजसभायां, प्रतापस्य—पराक्रमस्य, या स्तुतिः,—स्तवः, कीर्त्तनमित्यर्थः, तया तुष्टेन—प्रीतेन, भोजेन—भोजनृपेण, वृद्धायै—स्थविरायै ब्राह्मण्यै, सुवर्णमणिसम्भृतः,—सुवर्णैः,—स्वर्णैः, मणिभिः,—रत्नैश्च, सम्भृतः,—परिपूर्णः, कलसः,—कुम्भः, दत्तः,—समर्पितः ॥ २॥

# भोज-चौरसंवादः।

अन्यदा दूरदेशादागतः कश्चिच्चौरो राजानं प्राह,—"देव ! सिंहलदेशे मया काचन (क) चामुण्डाऽऽलये राजकन्या दृष्टा, सा च मां दृष्ट्वा, 'मालवदेशदेवस्य महिमानं बहुधा श्रुतं त्वमपि वद' इति पप्रच्छ; मया च तस्या देवगुणा व्यावर्णिताः; सा चात्यन्ततोषाच्चन्दनतरोर्निरुपमं गर्भखण्डं दत्त्वा यथास्थानं प्रपेदे। देव ! (ख) गुणाभिवर्णनप्राप्तं तदेतद्गृहाण, एतत्प्रसृत-परिमलभरेण भृङ्गा भुजगाश्च समायान्ति"। राजा तद्गृहीत्वा तुष्टस्तस्मै लक्षं दत्तवान्। ततो दामोदरकविः (ग) तन्मिषेण राजानं स्तौति,—

"श्रीमच्चन्दनवृक्ष ! सन्ति बहवस्ते शाखिनः कानने
येषां सौरभमात्मकं निवसति प्रायेण पुष्पश्रिया।

(क) चामुण्डाऽऽलये—कालिकामन्दिरे। मालवदेशदेवस्य—मालव-देशाधिपतेः भोजस्य। तस्याः,—राजकन्यायाः [सम्बन्धविवक्षया षष्ठी]। देवगुणाः,—देवस्य—भवतः, गुणाः,—शौर्य्यौदार्य्यादयः। गर्भखण्डं—गर्भे—अभ्यन्तरदेशे, यत् खण्डम्—अंशः तत्, अभ्यन्तरस्थं सारांशम्। प्रपेदे—प्रतस्थे। [प्र+पद+लिट्-ए]।

(ख) गुणाभिवर्णनप्राप्तं—गुणानां—भवदीयशौर्य्यौदार्य्यादीनाम्, अभि-वर्णनेन—कीर्त्तनेन, प्राप्तं—लब्धम्। एतत्प्रसृतपरिमलभरेण—एतस्मात्—चन्दनतरो गर्भखण्डात्, प्रसृतः,—निर्गतः, यः परिमलः,—सौरभः, तस्य भरेण—आतिशय्येन, यद्वा,—एतस्य प्रसृतः,—प्रहृद्धः, ("प्रवृद्धप्रसृते" इत्यमरः) यः परिमलः तस्य भरेण।

(ग) तन्मिषेण—चन्दनखण्डच्छलेन, चन्दनखण्डं लक्ष्यीकृत्येत्यर्थः।

चन्दनवृक्षवर्णनच्छलेन राज्ञो गुणचतुष्टयं विवरीतुमाह, श्रीमदिति।—

प्रत्यङ्गं सुकृतेन तेन शुचिना ख्यातः प्रसिद्धाऽऽत्मना
याऽसौ गन्धगुणस्त्वया प्रकटितः क्वासाविह प्रेक्ष्यते ?" ॥१॥

राजा स्वस्तुतिं बुद्ध्वा लक्षं ददौ।

[ इति भोज-चौरसंवादः ]।

## भोज-सूत्रधारस्त्रीसंवादः।

ततो द्वारपाल आगत्य प्राह,—"देव ! काचित् सूत्रधारस्त्री द्वारि वर्त्तते"। राजाऽऽह—"प्रवेशय"। ततः साऽऽगत्य राजानं प्रणिपत्याऽऽह,—

---

श्रीमन्—हे शोभासम्पन्न ! चन्दनवृक्ष !—भोः श्रीखण्डतरो !, कानने—वने, ते—तादृशाः, बहवः,—प्रभूताः, शाखिनः,—वृक्षाः, सन्ति—विद्यन्ते, येषां—शाखिनां, प्रायेण—बाहुल्येन, पुष्पश्रिया—कुसुमसम्पदा, सौरभमात्रकं—सद्गन्धः एव, ("मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः) निवसति—वर्त्तते इत्यर्थः, पुष्पमात्रे एव सौरभः निवसति, नान्येषु अङ्गेषु इति भावः; यद्वा—सौरभमात्रकं—कृत्स्नसौरभः, निखिलसद्गन्ध इत्यर्थः, तेषां यावान् सौरभः, सः सर्वः पुष्पश्रिया निवसति, नान्येनाङ्गेनेत्यर्थः; किन्तु प्रसिद्धाऽऽत्मना—प्रसिद्धः,—सुविदितः, आत्मा—स्वरूपं यस्य तेन, सर्वजनविदितमहिम्ना लब्धप्रतिष्ठेनेत्यर्थः, त्वया—भवता, शुचिना—पवित्रेण, तेन—प्राक्तनेन, सुकृतेन—पुण्येन, ख्यातः,—प्रसिद्धः, प्रत्यङ्गं—प्रत्यवयवं, पत्रपुष्पकाण्डमूलादिसर्वावयवेषु इत्यर्थः, योऽसौ—योऽयं, गन्धगुणः,—सौरभोत्कर्षः, प्रकटितः,—प्रकाशितः, असौ—गुणः, इह—एषु शाखिषु, क्व—कुत्र, प्रेक्ष्यते ?—अवलोक्यते ? न क्वापि प्राप्यते इत्यर्थः; दानवित्ताः बहवो नृपा इह सन्ति, किन्तु त्वत्तुल्यः शौर्यौदार्यविनयाऽऽर्जवादिसर्वगुणवित्तो नृपतिरिह नैव दृश्यते, पृथिव्यां भवानेक एव सर्वगुणसमन्वितः इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

"बलिः पातालनिलयोऽधःकृतश्चित्रमत्र किम्?।
अधःकृतो दिविस्थोऽपि चित्रं कल्पद्रुमस्त्वया" ॥ १ ॥

राजा तस्मै प्रत्यक्षरं लक्षं ददौ।

[ इति भोज-सूत्रधारस्त्रीसंवादः ]।

## भोज-मल्लिनाथसंवादः।

ततः कदाचित् मृगयापरिश्रान्तः राजा क्वचित् सहकार-तरोरधस्तात्तिष्ठति स्म। तत्र मल्लिनाथाख्यः कविरागत्य प्राह,—

"शाखाशतशतविततः सन्ति कियन्तो न कानने तरवः।
परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः" ॥ १ ॥

ततो राजा तस्मै हस्तवलयं ददौ।

[ इति भोज-मल्लिनाथसंवादः ]।

भोजस्य दातृश्रेष्ठत्वं प्रतिपादयति, बलिरिति।—पातालनिलयः,—रसातल-वासी; अत एव अधःस्थ इति भावः, बलिः,—विरोचनात्मजबलिराजः, अधः-कृतः,—नीचैःकृतः, त्वयेति शेषः, सुप्रसिद्धः अतिदाता बलिः दानबाहुल्येन त्वया पराजितः इत्यर्थः, अत्र किं चित्रम्?—किमाश्चर्य्यम्? यः स्वयमेव अधस्तिष्ठति, तस्य अधःकरणे विस्मयकारणं किमपि नास्ति, नास्ति च कोऽपि पौरुषहेतुरिति भावः; किन्तु दिविस्थः,—दिवि—सुरलोके, तिष्ठतीति तादृशः, नन्दनकाननस्थित इत्यर्थः, [ "सुपि स्थः" ( ३।२।४पा० ) इति दिवि+स्था+कः, ततः "आतो लोपः—" ( ६।४।६४ पा० ) इति आकारलोपः, "हलदन्तात सप्तम्याः संज्ञायाम" ( ६।३।९ पा० ) इति सप्तम्या अलुक् ] कल्पद्रुमोऽपि—ईप्सितप्रदः प्रसिद्धः कल्पवृक्षोऽपि, त्वया—भवता, अधःकृतः,—नीचैःकृतः, पातित इत्यर्थः, अर्थिना-मभिलषितपूरणेन पराजित इति भावः; एतदेव चित्रम्—आश्चर्य्यम्; अत्युच्चैरवस्थितस्य वस्तुनः अधःकरणमेव आश्चर्य्यमित्यर्थः; कल्पवृक्षादपि दानशौण्डो भवानिति भावः॥ १ ॥

काननवर्णनच्छलेन भोजस्य निरुपमत्वं व्यनक्ति, शाखेति।—शाखाशतशत-

# भोज-मान्त्रिकविप्रसंवादः।

तत्रैव आसीने राज्ञि कोऽपि विद्वानागत्य "स्वस्ति" इत्युक्त्वा प्राह,—"राजन्! काशीदेशमारभ्य तीर्थयात्रया परिभ्रम्यते (क)क्षीणदेशवासिना मया"। राजा,—"भवादृशानां तीर्थवासिनां दर्शनात् कृतार्थोऽस्मि"। स आह,—(ख) "वयं मान्त्रिकाश्च"।

---

विततः,—शाखानां—विटपानां, शतशतेन—बहुसङ्ख्यकैः, सङ्ख्यातीतशाखाभिः इत्यर्थः, विततः,—व्याप्ताः, विस्तृता इत्यर्थः, ("शाखाशतचितवियत:" इति पाठे—शाखाशतेन चितं—व्याप्तं, वियत्—आकाशं यैस्तादृशाः) कियन्तः,—कति, तरवः,—वृक्षाः, कानने—अरण्ये, न सन्ति?—न विद्यन्ते?, एवम्भूतास्तरवः कानने प्रभूता एव सन्तीत्यर्थः, किन्तु परिमलभरमिलदलिकुलदलितदलाः,—परिमलभरेण—सौरभातिशय्येन, मिलद्भिः,—सङ्गच्छमानैः, अलिकुलैः,—भ्रमरवृन्दैः, दलितानि—विमर्दितानि, दलानि—पत्राणि येषां तादृशाः, कुसुमसौरभेण समाकृष्टमधुकरवृन्दैः विमर्दितपत्राः, मनोहरसौरभवन्तः इति यावत्, शाखिनः,—वृक्षाः, विरलाः,—स्वल्पाः, काननदेशे महामहीरुहाः असङ्ख्याः सन्ति, किन्तु सहकाराः तत्सदृशा वा वृक्षा अत्यल्पा एव इत्यर्थः; ऐश्वर्य्यसम्पन्नाः रत्नालङ्कारादिविभूषिताः बहवो भूपाला अत्र वर्त्तन्ते, किन्तु भवत्सदृशः शौर्य्यौदार्य्यादिगुणसमन्वितः महाशयाः इह दुर्लभ एव इति भावः। आर्य्या वृत्तम्॥ १॥

---

(क) क्षीणदेशवासिना—क्षीणः,—स्वल्पः, हीनो वा, देशे वासः अस्य अस्तीति तेन, देशत्यागिनेत्यर्थः, परिव्राजकेनेति यावत्। ("दक्षिणदेशवासिना" इति पाठः साधुः)।

(ख) वयम्—अहमिति यावत्। [अविशेषणस्यास्मदः एकत्वेऽपि बहुवचनम्]। मान्त्रिकाः,—मन्त्रज्ञाः, [मन्त्रं विदन्ति इत्यर्थे मन्त्रशब्दात् ठक्]।

राजा,—"विप्रेषु सर्वं सम्भाव्यते"। राजा पुनः प्राह,—"विप्र ! मन्त्रविद्यया यथा परलोके फलप्राप्तिः, तथा किमिह लोकेऽप्यस्ति ?"। विप्रः,—"राजन् ! सरस्वतीचरणाऽऽराधनाद्विद्याऽवाप्तिर्विश्वविदिता, परं धनावाप्तिर्भाग्याधीना,—

गुणाः खलु गुणा एव न गुणा भूतिहेतवः।
धनसञ्चयकर्त्तॄणि भाग्यानि पृथगेव हि ॥ १ ॥

देव ! (ग) विद्यागुणा एव लोकानां प्रतिष्ठायै भवन्ति, न तु केवलं सम्पदः। देव !—

आत्माऽऽयत्ते गुणग्रामे नैर्गुण्यं वचनीयता।
दैवाऽऽयत्तेषु वित्तेषु पुंसां का नाम वाच्यता ? ॥ २॥

---

विद्वत्त्वादिगुणानां धनलाभे अहेतुकत्वमाह, गुणा इति।—गुणाः,—विद्वत्त्वधीरत्वादयः, गुणा एव—गुणपदवाच्या एव, उत्कर्षसम्पादका एवेत्यर्थः, खलु—निश्चये, गुणाः,—विद्वत्त्वादयः, भूतिहेतवः,—सम्पत्कारणानि, न, भवन्तीति शेषः, हि—यतः, धनसञ्चयकर्त्तॄणि—अर्थोपार्ज्जनकारीणि, भाग्यानि—दैवानि, अदृष्टानि इत्यर्थः, पृथगेव—अन्यविधान्येव, विद्यादिसञ्चयकारकात् भाग्यात धनोपार्ज्जकं भाग्यमन्यविधमेवेत्यर्थः ; भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् इति भावः ॥१॥

(ग) विद्यागुणाः,—विद्यया—ज्ञानेन हेतुना, ये गुणाः,—उत्कर्षाः। प्रतिष्ठायै—गौरवाय, कीर्त्तिसम्मानादिलाभायेत्यर्थः। ("प्रतिष्ठा गौरवे स्थितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः" इति मेदिनी) न तु केवलं सम्पदः,—धनसम्पदादिकं न गौरवकारणं, विद्वत्त्वादिकमेव प्रतिष्ठाकारणमिति निष्कर्षः।

निर्गुणत्वनिर्धनत्वयोर्निन्द्यत्वानिन्द्यत्वमाह, आत्माऽऽयत्ते इति।—गुणग्रामे—विद्वत्त्वादिगुणसमूहे, आत्माऽऽयत्ते—निजाधीने सति, विद्यावत्त्वादिगुणसमूहार्जनस्य स्वचेष्टासापेक्षत्वे सतीत्यर्थः, नैर्गुण्यं—गुणहीनत्वं, मूर्खत्वादिकमित्यर्थः, वचनीयता—निन्दनीयता, निन्दार्हतुरित्यर्थः, यत्ने कृते एव यदा गुणवान् भवितुमर्हति, तदा निर्गुणत्वं निन्दाकारणमिति भावः ; वित्तेषु—धनेषु, धनोपार्ज्जनेष्विति यावत्, दैवाऽऽयत्तेषु—भाग्याधीनेषु, शुभादृष्टेषु सत्स्वेव अर्थाऽऽगमसम्भवादित्यर्थः, पुंसां—नृणां, का नाम वाच्यता ?—कैव निन्दनीयता ? न काऽपीत्यर्थः ; धनोपार्जनं हि शुभादृष्टाधीनं, दुरदृष्टवशात् धनार्ज्जनाशक्तौ निन्दाहेतुः कोऽपि नास्तीति समुदितार्थः ;

देव ! मन्त्राऽऽराधनेन (घ) अप्रतिहता शक्तिः स्यात्; देव ! एवं कुतूहलं, मया यस्य शिरसि करो निधीयते, स सरस्वतीप्रसादेन अस्खलितविद्याप्रसारः स्यात्”। राजा प्राह,—“सुमते ! महती देवताशक्तिः”। ततो राजा कामपि दासीमाकार्य्य विप्रं प्राह,—“द्विजवर ! अस्या वेश्यायाः शिरसि करं निधेहि”। विप्रस्तस्याः शिरसि करं निधाय तां प्राह,—“देवि ! यद्राजाऽऽज्ञापयति,तद्वद”। ततो दासी प्राह,—“देव ! अहमद्य (ङ) समस्तवाङ्मयजातं हस्ताऽऽमलकवत् पश्यामि, देव ! आदिश, किं वर्णयामि ?”। ततो राजा पुरः खड्गं वीक्ष्य प्राह,—“खड्गं मे व्यावर्णय” इति। दासी प्राह,—

“धाराधरस्त्वदसिरेष नरेन्द्र ! चित्रं
वर्षन्ति वैरिवनिताजनलोचनानि।

शुभादृष्टे सति प्रयत्नं विनाऽपि धनाऽऽगमो भवति, गुणाऽऽगमस्तु प्रयत्नं विना नैव भवति, अतोऽस्माभिर्विद्याऽर्ज्जनार्थमेव प्रयत्नः कृतः, न धनार्जनार्थमिति भावः॥ २॥

(घ) अप्रतिहता—अप्रतिस्खलिता, अव्यर्था इत्यर्थः। एवं—वक्ष्यमाणम्। कुतूहलं—कौतुकम्, आश्चर्य्यम् इत्यर्थः। निधीयते—संस्थाप्यते। [नि+धा+कर्म्मणि लट्-ते]। अस्खलितविद्याप्रसारः,—अस्खलितः,—अप्रतिहतः, बाधाविरहित इत्यर्थः, विद्यायाः,—ज्ञानस्य, प्रसारः,—विस्तरः, ख्यातिरित्यर्थः, यस्य तादृशः, अप्रतिहतज्ञानसम्पन्न इत्यर्थः।

(ङ) समस्तवाङ्मयजातं—निखिलवागात्मकशास्त्रसमूहमित्यर्थः। हस्ताऽऽमलकवत्—करस्थिताऽऽमलकफलमिव, करस्थितक्षुद्राऽऽमलकफलं यथा सर्वावयवेषु सुस्पष्टं दृश्यते, तथा अहमपि श्रुतिस्मृत्यादिकं निखिलशास्त्रसमूहमपठितमपि सुपठितमिव अवगच्छामीत्यर्थः।

खड्गवर्णनप्रसङ्गेन राज्ञः प्रतापं प्रकटयति, धाराधर इति।—नरेन्द्र !—हे नरेश्वर !, एषः,—अयं, त्वदसिः,—तव खड्गः, धाराधरः,—धारायाः,—निशितमुखस्य, सुतीक्ष्णाग्रभागस्येत्यर्थः, धरः,—धारकः, धारायाः,—तदाख्यायाः भवन्नगर्य्याः, धरः इत्यर्थो वा ; रिपुकुलोच्छेदनेनेति भावः, अन्यत्र—धारायाः,—

कोषेण सन्ततमसङ्गतिराहवेऽस्य
दारिद्र्यमभ्युदयति प्रतिपार्थिवानाम्” ॥ २ ॥

राजा तस्मै रत्नकलशाननर्घ्यान् पञ्च ददौ।

[ इति भोज-मान्त्रिककविप्रसंवादः ]।

---

## भोज-कविपञ्चकसंवादः।

ततस्तस्मिन् क्षणे कुतश्चित् पञ्च कवयः समाजग्मुः।

जलधारायाः, धरः, जलधरो मेघ इत्यर्थः, ( “धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके। घटादिच्छिद्रसन्तत्योः प्रपाते स्यादृवस्य च ॥ खड्गादेर्निशितमुखे” इति मेदिनी। “अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः। धाराधरो जलधरः” इत्यमरश्च ) किन्तु वैरिवनिताजनलोचनानि—वैरिवनिताजनानां—शत्रुस्त्रीणां, लोचनानि—नयनानि, वर्षन्ति—स्रवन्ति, रिपुनारीणां नेत्रेभ्यः अश्रूणि स्रवन्तीत्यर्थः, चित्रम्—आश्चर्यम्; एतदेवाश्चर्य्यं यत् कार्य्य-कारणयोर्भिन्नदेशत्वं, तथा हि समुदितः मेघ एव जलं वर्षति इति हि स्वभावः, तव खड्गमेघोदये तु शत्रुस्त्रीणां नेत्राणि वर्षन्तीति विपरीतम्; तवासेरीदृशः प्रभावो यत् शत्रून् निःशेषं न हत्वा न विरमतीति भावः; अन्यदपि चित्रं प्रकटयति, कोषेणेति। —आहवे—युद्धे, अस्य—असेः, कोषेण—पिधानेन, खड्गावरणेनेत्यर्थः, अन्यत्र—कोषेण—शत्रूणां धनागारेण, ( “कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके। जातिकोषेऽर्थसङ्घाते” इति मेदिनी ) सन्ततं—निरन्तरम्, असङ्गतिः, —सम्बन्धाभावः, शत्रुनिपातमकृत्वा न हि असिं कोषे स्थापयसीति भावः; अन्यत्र—न चायं ते खड्गः कदाऽपि शत्रोः कोषागारं प्रविशतीति भावः, अथच, प्रतिपार्थिवानां—विपक्षनृपतीनां, दारिद्र्यं—निर्धनत्वम्, अभ्युदयति—समुदितं भवति, अन्यत्र—दारिद्र्यम् अभ्युदयति—अभ्युदयसम्पन्नं करोति, विपक्षाणां दारिद्र्यवर्द्धनेनेति भावः; एतदपि चित्रम्—आश्चर्य्यम्, एतदपि महच्चित्रं यदयं युद्धे कोषहीनः सङ्गति-विहीनो भवति, अथच विपक्षाणां दारिद्र्यं वर्द्धते इति विपरीतम्; अप्रतिमवीरस्त्वं, श्रियाऽपि ते गरीयसीति भावः। वसन्ततिलकं वृत्तम् ॥ २ ॥

---

तानवलोक्य ईषद्विच्छायमुखं राजानं दृष्ट्वा महेश्वरकविः वृक्षमिषेणाऽऽह,—

"किं जातोऽसि चतुष्पथे ? घनतरच्छायोऽसि किं छायया ?
छन्नश्चेत् फलितोऽसि किं ? फलभरैः पूर्णोऽसि किं सन्नतः ? ।
हे सद्वृक्ष ! सहस्व सम्प्रति चिरं शाखाशिखाऽऽकर्षण-
क्षोभाऽऽमोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः" ॥ १ ॥

भोजं दानविमुखमनुमाय कविर्वृक्षच्छलेन तस्य गुणवत्तां प्रकटयति, किमिति।—हे सद्वृक्ष !—भोः फलच्छायादिसमन्वित पादप !, विनयार्ज्जवादिगुणसम्पन्न राजन् ! इति च ध्वनिः ; चतुष्पथे—चतुर्मार्गसङ्गमे, ("चतुष्पथं चतुर्मार्गसङ्गमे ब्राह्मणे तु ना" इति मेदिनी) चतुष्पथवत् सर्व्वलोकसुविदिते वंशे इति ध्वनिः ; किं—कथं, जातोऽसि ?—उत्पन्नोऽसि ? चतुष्पथं यथा सर्व्वजनाभिगमनीयं भवति, तथा त्वमपि प्रसिद्धवंशसमुत्पन्नत्वात् स्वयञ्च शौर्य्यौदार्य्यादिभिः सुविदितत्वात् सर्व्वलोकाश्रयणीयोऽसीति भावः ; जातश्चेत् छायया—अनातपेन, सन्तापापनोदकया इति यावत्, छायावत् दारिद्र्यसन्तापप्रशमकेन दातृत्वगुणेनेति ध्वनिः ; किं—कथं, घनतरच्छायोऽसि ?—घनतरा—अतिनिविडा, छाया—अनातपः यस्य तादृशः भवसि ? शाखापल्लवबाहुल्यैः निविडतमो भवसि इत्यर्थः, निखिलदरिद्राणां दारिद्र्यापनोदनेन महोदारोऽसीति च ध्वनिः ; छन्नश्चेत्—निविडतरच्छायया आच्छन्नोऽसि यदि, किं—कथं, फलितोऽसि ?—फलवान् भवसि ? विनयादिगुणसम्पन्नोऽसि इति च ध्वनिः ; फलितश्चेत्, फलभरैः,—फलाऽऽतिशय्यैः, पूर्णः,—परिपूरितः सन्, किं—कथं, सन्नतोऽसि ?—समवनतो भवसि ? ; विनयाद्यातिशय्यैः एतादृक् समवनतो भवसीति ध्वनिः ; अत एव स्वैरेव—निजैरेव, दुश्चेष्टितैः,—दुष्टाचारैः, चतुष्पथादिषु जन्मादिरूपैः गर्हितैः कर्म्मभिरित्यर्थः, सम्प्रति—इदानीं, जनतः,—लोकेभ्यः, चिरं—दीर्घकालं यावत्, शाखाशिखाऽऽकर्षणक्षोभाऽऽमोटनभञ्जनानि—शाखाशिखानां—विटपाग्राणां, शाखा इव शिखाः,—केशगुच्छा इत्यर्थः, इति ध्वनिः ; तासाम् आकर्षणम्—आक्षेपः, क्षोभः,—इतस्ततः सञ्चालनम्, आमोटनम्—आ—सर्व्वतोभावेन, मोटनं—विमर्द्दनं, भञ्जनं—द्विखण्डीकरणं तानि, विविधानुपद्रवांश्चेति ध्वनिः ; सहस्व—क्षमस्व, सह्यं कुरु इत्यर्थः ; महाकुलीनस्य सत्पात्रे निरन्तरदानशीलस्य विनयाऽऽर्जवादिगुणसम्पन्नस्य च ते इदानीं

ततो राजा तस्मै लक्षं ददौ। ततस्ते द्विजवराः पृथक् पृथगाशीर्वचनम् (क) उदीर्य्य यथाक्रमं राजाऽऽज्ञया कम्बले उपविश्य मङ्गलं चक्रुः। तत एकः पठति,—

"कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्ता-
मादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः।
दिङ्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः
सर्वे स्वैरं चरन्तु त्वयि वहति विभो! भोज! देवीं धरित्रीम्"॥२॥

मर्थिभ्यो विमुखीभावो न युज्यते, सर्वेषामेव प्रार्थना यथासाध्यमवश्यमेव त्वया पूरणीयेति वक्तुतात्पर्य्यम्। शार्दूलविक्रीडितं वृत्तम्॥१॥

(क) उदीर्य्य—उच्चार्य्य। [उत्+ईर+ल्यप्]। मङ्गलं चक्रुः,—माङ्गलिकश्लोकं पेठुः।

निखिलभूभारधारिणि भोजे तिष्ठति कूर्म्मादयः पुराणाः भूभारधारकाः कार्य्याभावादिदानीं विश्राम्यन्तु इत्याशयेनाऽऽह, कूर्म्म इति।—विभो!—हे प्रभो! निखिलभारधारणसमर्थ इति भावः; भोज!—भोजराज!, त्वयि—भवति, देवीं—देवता, धरित्रीं—पृथिवीं, वहति—धारयति, पालयति सतीत्यर्थः, कूर्म्मः,—पृष्ठे भूभारधारणकारी विष्णोरवतारविशेषः महाकमठः, पातालगङ्गापयसि—पातालस्थगङ्गाया भोगवत्याः जले, विहरतां—क्रीडतु, भोजेन भूभारधारणादिति भावः; एवमग्रेऽपि बोद्धव्यम्; आदिपोत्री—प्रथमवराहः, ("वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिः" इत्यमरः) दशनमण्डलेन प्रलयपयोधिमग्नायाः पृथिव्या उद्धारकः विष्णोरवतारभूतः महावराहः इत्यर्थः, तत्तटीरूढमुस्तां—तस्याः,—पातालगङ्गायाः, तटीषु—तटप्रदेशेषु, रूढा—उत्पन्ना, या मुस्ता—मुस्तकाख्यतृणविशेषः ताम्, आदत्तां—गृह्णातु, भक्षणार्थमिति भावः; [आ+दा+लोट् ताम्, "आङो दोऽनास्यविहरणे" (१।३।२० पा०) इत्यात्मनेपदम्]। कुण्डलीन्द्रः,—भुजगेन्द्रः, शेषः इत्यर्थः, फणामण्डलं—फणासमूहम्, उपर्य्युपरिस्थितपृथिवीं सहस्रसङ्ख्यकफणामिति यावत्, शिथिलयतु—सङ्कोचयतु, फणामण्डलस्य विस्तारकरणप्रयोजनाभावादिति भावः; ["तत्करोति तदाचष्टे" (ग०) इति शिथिल+णिच्+लोट् तुप्]। दिङ्मातङ्गाः,—पृथ्वीधरा ऐरावतादयः अष्टौ दिग्गजाः, ("ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः॥" इत्यमरः) मृणाली-

राजा चमत्कृतः तस्मै शताश्वान् ददौ। ततो भाण्डारिको लिखति,—

"क्रीड़ोद्याने नरेन्द्रेण शतमश्वा मनोजवाः।
प्रदत्ताः कामदेवाय सहकारतरोरधः" ॥ ३ ॥

[ इति भोज-कविपञ्चकसंवादः ]।

---

## विक्रमार्कप्रसङ्गे भोज-मुख्यामात्यसंवादः।

ततः कदाचिद्भोजो विचारयति स्म,—"मत्सदृशो (क) वदान्यः कोऽपि नास्ति" इति। तद्भवं विदित्वा

कवलनकलनां—मृणालीनां—बिसतन्तूनां, कवलनस्य—कवलस्य, ग्रासस्येत्यर्थः, कलना—ग्रहणं, कुर्व्वतां—सम्पादयन्तु, मृणालं भक्षयन्तु इत्यर्थः, [कृ + लोट्-अन्ताम] सर्वे—निखिलाः, पर्व्वतेन्द्राः,—भूधरश्रेष्ठाः, स्वच्छन्दगतिनियमनेन महाचलसमूहाः इत्यर्थः, स्वैरं—स्वच्छन्दं, चरन्तु—भ्रमन्तु, यथोचितमार्गे भुवः गतिनियमनकार्य्याभावादिति भावः ; दोर्दण्डप्रतापशालिना त्वया पृथ्वीभारवहनात् स्वप्नावस्थायामपि ते दृष्टा नोपद्रवं कर्त्तुं शक्नुवन्ति अतः कूर्म्मस्य विश्रामावसरः ; महाभुजः त्वं सुशासनेन पापार्णवनिमग्नामपि उद्धरसि, शास्त्रनिर्द्दिष्टे खलु सुनियमे इमां सुदृढं स्थापितवान्, दिग्भि दिग्भि सुशासकं विनियोज्य कुशासनात् इमां समुद्दधार, तथा स्वयमेव स्वैरगतिनिवारणेन उचितकक्षायां प्रवर्त्तयस्येनामिति कूर्म्मादीनामिदानीं प्रयोजनाभावात ते विश्रान्तिं लभन्तामिति वक्तुराशयः। स्रग्धरा वृत्तम ॥ २ ॥

क्रीड़ोद्याने इति।—नरेन्द्रेण—नृपेण भोजेन, क्रीड़ोद्याने—विहारोपवने, सहकारतरोः,—अतिसौरभयुक्ताम्रवृक्षस्य, ("आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः) अधः,—निम्ने, कामदेवाय—तदाख्याय पञ्चकवीनामेकस्मै, मनोजवाः,—मनोवद्वेगवन्तः, अतिद्रुतगामिन इत्यर्थः, शतं—शतसङ्ख्यकाः, अश्वाः,—हयाः, प्रदत्ताः,—समर्पिताः ॥ ३ ॥

---

(क) वदान्यः,—दाता। ("वदान्यो दातृवाग्मिनोः" इत्यजयः)।

मुख्यामात्यो विक्रमार्कस्य (ख) पुण्यपत्रं भोजाय प्रदर्शयामास। भोजस्तत्र पत्रे कञ्चित् (ग) प्रस्तावमपश्यत्,—तथाहि, विक्रमार्कः पिपासया प्राह,—

"स्वच्छं सज्जनचित्तवल्लघुतरं दीनाऽऽर्त्तिवच्छीतलं
पुत्राऽऽलिङ्गनवत्तथैव मधुरं तद्बाल्यसञ्जल्पवत्।
एलोशीरलवङ्गचन्दनलसत्कर्पूरकस्तूरिका-
जातीपाटलिकेतकैः सुरभितं पानीयमानीयताम्" ॥ १ ॥

ततो (घ) मागधः प्राह,—

(ख) पुण्यपत्रं—धर्म्मपत्रं, धर्म्मार्थदानस्य प्रमाणसूचकं पत्रमित्यर्थः। ("पुण्यस्त्रिषु मनोज्ञे स्यात् क्लीबं सुकृतधर्म्मयोः" इति विश्वः)।

(ग) प्रस्तावं—प्रसङ्गम्।

पिपासोर्विक्रमादित्यस्य जलप्रार्थनां वर्णयति, स्वच्छमिति।—सज्जनचित्तवत्—सज्जनानां—साधूनां, चित्तवत्—मानसमिव, स्वच्छम्—अकलुषं, निर्म्मलमित्यर्थः, दीनाऽऽर्त्तिवत्—दीनानां—दरिद्राणाम्, आर्त्तिवत्—पीड़ा इव, लघुतरम्—अतिशयेन लघु, गुरुत्वविहीनमित्यर्थः, गुरुत्ववत्पानीयस्य स्वास्थ्यविघातकत्वात् स्वादुताऽऽभावाच्चेति बोद्धव्यम्; पुत्राऽऽलिङ्गनवत्—तनयाऽऽश्लेष इव, शीतलं—हिमं, पुत्राऽऽलिङ्गनं यथा सर्व्वसन्तापहारकं, शीतगुणविशिष्टत्वेन तद्वत् सन्तापहारकमित्यर्थः, तथा—किञ्च, तद्बाल्यसञ्जल्पवदेव—तस्य—पुत्रस्य, बाल्ये—शैशवे, यः सञ्जल्प,—अस्फुटं भाषणं, तद्वदेव—तत्तुल्यमेव, मधुरं—मिष्टं, हृदयग्राहि इत्यर्थः, एलोशीरलवङ्गचन्दनलसत्कर्पूरकस्तूरिकाजातीपाटलिकेतकैः,—एला—बहुला, "एलाचि" इति प्रसिद्धा, उशीरं—वीरणमूलं, लवङ्गं—देवकुसुमं, चन्दनं—श्वेतचन्दनं, तानि एलोशीरलवङ्गचन्दनानि तैः लसत्—श्लिष्यत्, मिश्रीभवदित्यर्थः, यत् कर्पूरं—घनसारः, कस्तूरिका—मृगमदः, जाती—जातीपुष्पं, पाटलिः,—पाटलापुष्पं, केतकं—केतकीपुष्पं तानि [ द्वन्द्वस० ] तैः सुरभितं—सुवासितं, पानीयं—जलम्, आनीयतां—प्रापय्यताम्। [ आ + नी + कर्म्मणि लोट्-ताम् ]। शार्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

(घ) मागधः,—राज्ञां स्तुतिपाठकः, वंशपरम्पराऽऽख्यापको वा, ("स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः" इत्यमरः)।

"वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्य्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः
वाहिन्यः पार्श्वमेताः कथमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छे चित्ते कुतोऽभूत् कथय नरपते! तेऽम्बुपानाभिलाषः?"॥२॥

प्रत्युत्तरच्छलेन राज्ञो विद्वत्त्वादिगुणवत्तां विवृणोति, वक्त्रेति।—नरपते!—हे लोकनाथ!, सरस्वती—वाग्देवी, तदाख्या पुण्या नदी च, ("सरस्वती सरिद्भेदे। वाच्यापगाया स्त्रीरत्ने गोवाग्देवतयोरपि" इति हैमः)। ते—तव, वक्त्राम्भोजं—वदनकमलम्, ["उपान्वध्याङ् वसः" (१।४।४८ पा०) इत्यधिकरणस्य कर्मत्वम्] अधिवसति—अधितिष्ठति; जिह्वाग्रे ते सरस्वती देवी विद्यते, सुपण्डितस्त्वमिति भावः; पक्षान्तरे—पुण्यतोया सरस्वती नदी ते मुखमध्यवर्त्तिनी, अतः पिपासा ते अयुक्ता इति भावः; अधरः,—ओष्ठः, ओष्ठद्वयमित्यर्थः, ("अधरस्तु पुमानोष्ठे हीनेऽनूर्द्ध्वे तु वाच्यवत्" इति मेदिनी) शोण एव—कोकनदच्छाय एव, रक्तवर्ण एवेत्यर्थः, तदाख्यः नदविशेष एव च, ओष्ठावपि ते रक्तवर्णौ अत एव सुलक्षणः पुरुषश्रेष्ठो भवानिति भावः; पक्षान्तरे—ते ओष्ठावेव शोणाऽऽख्यो नदः, अतोऽपि पिपासा ते न युज्यते इति भावः; ("शोणः कृशानौ श्योणाके लोहिताश्वे नदे पुमान्। त्रिषु कोकनदच्छाये" इति मेदिनी) काकुत्स्थवीर्य्यस्मृतिकरणपटुः,—काकुत्स्थस्य—श्रीरामचन्द्रस्य, वीर्य्यं—पराक्रमः, तस्य स्मृतिकरणे—स्मरणोत्पादने, पटुः,—समर्थः, ते—तव, दक्षिणः,—वामेतरः, बाहुः,—भुजदण्डः, समुद्रः,—मुद्रा—प्रत्ययकारकाचिह्नविशेषाङ्कनयुक्तः अङ्गुलिस्थः अङ्गुरीयकविशेषः, धारयितुर्नामाक्षरमुद्रासहितः अङ्गुलीभूषणविशेष इत्यर्थः, तया सह वर्त्तमानः, अङ्गुरीयविशेषभूषित इत्यर्थः, सागरश्च; समुद्रं ते बाहुं दृष्ट्वा रामचन्द्रस्य दक्षिणसमुद्रबन्धनादिकमलौकिककर्मजातं स्मृतौ समुदेति, अतः रामचन्द्रवत् महाभुजस्त्वमपि तत्तत्कर्मसु अतिनिपुण एवेति भावः; पक्षान्तरे—तव दक्षिणबाहुरेव दक्षिणसमुद्रः, एवञ्च तव भुजस्य समुद्रस्वरूपत्वात् तृष्णाया अनवसर एवेति भावः; एताः,—परिदृश्यमानाः, वाहिन्यः,—सैन्यानि, अन्यत्र—एताः,—पूर्वोक्ताः सरस्वत्यादयः, वाहिन्यः,—तरङ्गिण्यः, नद्यः इत्यर्थः, ("वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः" इति मेदिनी) कथमपि—कदाऽपीत्यर्थः, भवतः,—तव, पार्श्वम्—अन्तिकं, नैव—न हि, मुञ्चन्ति—त्यजन्ति, सदैव तव समीपे तिष्ठन्तीत्यर्थः, अत एव हे नरपते! ते—तव,

ततो विक्रमार्कः प्राह, तथाहि,—

"अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः
पञ्चाशन्मधुगन्धमत्तमधुपाः क्रोधोद्धताः सिन्धुराः।
अश्वानामयुतं प्रपञ्चचतुरं वाराङ्गनानां शतं
दत्तं पाण्ड्यनृपेण यौतुकमिदं वैतालिकायार्प्यताम्"॥२॥

ततो भोजः प्रथमत एव अद्भुतं विक्रमार्कचरितं दृष्ट्वा निजगर्वं तत्याज।

[ इति विक्रमार्कप्रसङ्गे भोज-मुख्यामात्यसंवादः ]।

अभीक्ष्णम्—अत्यर्थं, स्वच्छे—नदनदीनां सान्निध्येन तज्जले धौतत्वात् निर्मले, अकपटे चेत्यर्थः, चित्ते—मनसि, अम्बुपानाभिलाषः,—जलपिपासा, कुतः,—कस्मात्, अभूत् ?—अजनि ? कथय—वद, विदुषः सुरूपस्य महाभुजस्य चतुरङ्ग-बलसमन्वितस्य च अत एव सर्वैश्वर्य्यवतस्ते कोऽभिलाषः अपूर्णोऽस्ति ? यदर्थं विषया-न्तराभिलाषः सञ्जातः इत्यर्थो व्यज्यते। स्रग्धरा वृत्तम् ॥ २ ॥

मागधवाक्येन सुप्रीतो विक्रमार्कः तस्य पुरस्कारमादिशति, अष्टाविति।—अष्टौ हाटककोटयः,—अष्टकोटिसङ्ख्याकाः सुवर्णमुद्रा इत्यर्थः, मुक्ताफलानां—मौक्तिकानां, त्रिनवतिः,—त्र्यधिकनवतिसङ्ख्याकाः, तुलाः,—शतपलानि, सार्द्धद्विशशरावा इत्यर्थः, "तुला पलशतं प्रोक्तम्" इत्युक्तेः, तेन सार्द्धद्विपञ्चाधिकैकादशशतशरावपरिमितं मुक्ताफ-लमित्यर्थः, मधुगन्धमत्तमधुपाः,—मधुगन्धेन—मद्यगन्धेन, मदजनकत्वात् मद्यतुल्य-मदगन्धेनेत्यर्थः, ("मधु मद्ये पुष्परसे क्षौद्रेऽपि" इत्यमरः) मत्ताः,—उन्मत्ताः, मधुपाः,—भ्रमरा येषु तादृशाः, क्रोधोद्धताः,—क्रोधेन—कोपेन, उद्धताः,—प्रचण्डाः, सदैव अतिकोपनत्वेन भीषणदर्शना इत्यर्थः, पञ्चाशत्—पञ्चाशत्सङ्ख्याकाः, सिन्धुराः,—सिन्धुः,—इभदानं, गजमदजलमित्यर्थः, ("सिन्धुः समुद्रे नद्याञ्च नदे देशेभदानयोः" इति विश्वः) एषामस्तीति [ सिन्धु+रः ] मदवर्षिणो गजाः इत्यर्थः, ("नैवान्यत्र मदान्धसिन्धुरघटासङ्घट्टघण्टारणत्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः" इति गङ्गालवे सिन्धुरशब्दस्य गजार्थकस्य प्रयोगदर्शनात्) अश्वानां—तुरङ्गमाणाम्, अयुतं—दशसहस्रं, प्रपञ्चचतुरं—प्रपञ्चे—सञ्चये, प्रतारणायां वा, ("प्रपञ्चः सञ्चयेऽपि स्यात् विस्तरे च प्रतारणे" इति मेदिनी) चतुरं—निपुणं, वाराङ्गनानां—वेश्यानां, शतं—शतसङ्ख्याकं, शतसङ्ख्याकाः वारस्त्रियः इत्यर्थः, पाण्ड्यनृपेण—पाण्ड्यदेशाधिपेन, दत्तम्

# भोज-दरिद्रविप्रसंवादः ।

ततः कदाचिद्धारानगरे रात्रौ विचरन् राजा कस्मिंश्चित् देवालये (क) शीतालुं ब्राह्मणमित्थं पठन्तमवलोक्य स्थितः,—

"शीतेनाध्युषितस्य माघजलवच्चिन्तार्णवे मज्जतः
शान्ताग्नेः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम ।
निद्रा क्वाप्यवमानितेव दयिता सन्त्यज्य दूरङ्गता
सत्पात्रप्रतिपादितेव कमला नो हीयते शर्वरी" ॥ १ ॥

इति श्रुत्वा राजा प्रातः तमाहूय पप्रच्छ,—"विप्र !

—अर्पितं, प्रेरितमिति यावत्, इदम्—उक्तरूपं, यौतुकम्—उपहारमिति यावत्, वैतालिकाय—मागधाय, अर्प्यतां—दीयताम्, [अर्प + णिच् + कर्म्मणि लोट्-ताम् ]। शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

---

(क) शीतालुं—शीतासहं, शीतपीड़ितमित्यर्थः। [ शीतं न सहते इति वाक्येन "शीतोष्णतृप्रेभ्यस्तदसहने" (वा०) इति शीत + चालुः ] ।

शीतक्षुत्पीड़ितब्राह्मणस्य खेदमाह, शीतेनेति ।—शीतेन—हिमेन, हिमगुणेनेत्यर्थः, ("वेतसे बहुवारे ना गुणे शीतं हिमे विषु" इति रभसः। "शीतं हिमगुणे क्लीवं शीतलालसयोस्त्रिषु" इति विश्वश्च ) अध्युषितस्य—अधिष्ठितस्य, शीताऽऽक्रान्तस्येत्यर्थः, माघजलवत्—माघमासीयवारिवत् ; स्पर्शमात्रेणैव अवसादकं अतिदुःसहं चेति भावः ; चिन्तार्णवे—भावनासागरे, मज्जतः,—निमग्नीभवतः, दुःसहदुरवस्थायाः स्मरणमात्रेणैव अपारार्णवान्तः प्रविशत इव अवसीदत इति भावः ; [ मस्‍ज + शतृ + ६ष्ठी १व० ] शान्ताग्नेः,—शान्तः,—निर्वाणं गतः, अग्निः,—शीतनिवारणार्थं प्रज्वालितो वह्निर्यस्य तादृशस्य ; शान्ताग्नित्वात् शीतनिवारणोपाय-विहीनस्येति भावः ; स्फुटिताधरस्य—स्फुटितः,—शीतवायुस्पर्शात् विदीर्णः, अधरः,

(ख) पूर्वेद्युः रात्रौ त्वया दारुणः शीतभारः कथं सोढ़ः ?"। विप्र आह,—

"रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः।
एवं शीतं मया नीतं जानुभानुकृशानुभिः" ॥ २ ॥

राजा तस्मै सुवर्णकलशत्रयं प्रादात्। ततः कविः राजानं स्तौति,—

---

—ओष्ठो यस्य तस्य, धमतः,—अग्निं प्रज्वालयतः, स्फुटिताधरत्वात् फुत्कारदानासामर्थ्येऽपि अतिक्लेशेन कथञ्चित् वह्निं प्रज्वालयितुं प्रवर्त्तमानस्येति भावः ; [ आ + ध्मा "पाघ्राध्मास्था—"( ७।३।७८ पा० ) इति धमादेशः। ततः ६ष्ठी १ व० ] क्षुत्क्षामकुक्षेः,—क्षुधा—बुभुक्षया, क्षामः,—कृशः, कुक्षिः,—उदरः यस्य तादृशस्य, अन्नाभावात् शीर्णोदरस्येत्यर्थः, अतीव क्षुधार्त्तस्येति भावः ; मम निद्रा—स्वापः, अवमानिता—अवज्ञाता, दयितेव—प्रियेव, प्रियभार्य्येवेत्यर्थः, सन्त्यज्य—विहाय, मामिति शेषः, दूरं—विप्रकृष्टं, क्वापि—कस्मिन्नपि, अविज्ञात देश इत्यर्थः, गता—प्रस्थिता, पलायितेत्यर्थः, अवमानिता पत्नी यथा भर्त्तारं परित्यज्य प्रतिष्ठते, तथा निद्राऽपि मां परित्यज्य प्रस्थिता इति निष्कर्षः ; शीतेन क्षुधया चातिपीड़ितस्य मे निद्राऽपि नाऽऽयाति इति भावः ; तथा सत्पात्रप्रतिपादिता—सत्पात्राय—सज्जनाय, प्रतिपादिता—समर्पिता, कमलेव—लक्ष्मीरिव, सम्पदिवेत्यर्थः, शर्व्वरी—रात्रिः, नो क्षीयते—न क्षीयते, रात्रेरवसानं न भवतीत्यर्थः ; साधूनां सदाशयशीलानां वितरितमपि धनादिकं यथा जन्मान्तरार्थं सञ्चितं तिष्ठति, कदाऽपि न क्षयितं भवति, तथा अतिदीर्घा शीतरात्रिरपि मदर्थं सञ्चिता एव वर्त्तते, नावसीदति, अहो ! मे दुरदृष्टं यदस्यामेव निशायां शीतेन क्षुधया च पीड़ितः मरिष्यामीति भावः। [ क्षि + कर्म्मकर्त्तरि लट् ते ] शार्द्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

(ख) पूर्वेद्युः,—पूर्व्वस्मिन् दिने। [ "पूर्व्वादिभ्योऽष्टभ्योऽहन्येद्युस्" (वा०) इति पूर्व्व + एद्युस् ]। सोढ़ः,—क्षान्तः, सह्यः कृत इत्यर्थः। [ सह + क्तः ]।

शीतसहनप्रकारमाह, रात्राविति।—रात्रौ—रजन्यां, जानुः,—ऊरुपर्व्वा, अष्ठीवीः सन्धिदेश इत्यर्थः, शीतनिवारकः इति सर्व्वत्रैव शेषः ; शीतवस्त्राभावात् रात्रौ ऊर्द्धजानुरुपविश्य जानुद्वयान्तरे मस्तकं निवेश्य सङ्कुचितदेहः कथमपि शीतं सहे इति भावः ; दिवा—दिवसे, भानुः,—सूर्य्यः, सूर्य्यातापेनात्मानं सन्ताप्य शीतं सहे

"धारयित्वा त्वयाऽऽत्मानं महात्यागधनाऽऽयुषा।
मोचिता बलिकर्णाद्याः स्वयशोगुप्तकर्म्मणः" ॥ २ ॥

राजा तस्मै लक्षं ददौ।

[ इति भोज-दरिद्रविप्रसंवादः ]।

## भोज-मयूरकविसंवादः।

एकदा क्रीड़ोद्यानपाल आगत्य एकमिक्षुदण्डं राज्ञः पुरो मुमोच। तं राजा करे गृहीतवान्। ततो मयूरकविः

---

इत्यर्थः, द्वयोः,—उभयोः, सायं प्रातश्चेत्यर्थः, सन्ध्ययोः,—सन्धिकालयोः, कृशानुः,—अग्निः, उभयोः सन्ध्ययोः होमार्थं प्रज्वालितवह्निनैव शीतं सहे इति भावः; ("कृशानुः पावकोऽनलः" इत्यमरः) एवम्—उक्तप्रकारेण, मया जानुभानुकृशानुभिः,—ऊरुपर्व्वसूर्य्यवह्निभिः, एतत्त्रयावलम्बनेनेत्यर्थः, शीतं—हिमं, नीतम्—अतिवाहितमित्यर्थः ॥ २ ॥

भोजकीर्त्तेः सर्वातिशायित्वमाह, धारयित्वेति।—महात्यागधनाऽऽयुषा—त्यागः,—दानं, धनं—सम्पत, आयुः,—जीवितकालं तानि त्यागधनाऽऽयूंषि, महान्ति—प्रभूतानि, त्यागधनाऽऽयूंषि—दानसम्पत्तिजीवितकालानि यस्य तादृशेन, ("महात्यागधनाधुना" इति पाठे—महान् त्याग एव धनं यस्य तादृशः तत्सम्बोधने, भो दाननिधे ! अधुना इत्यर्थः ) त्वया—भवता ; आत्मानं,—शरीरम्, ("आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि" इति मेदिनी ) धारयित्वा—धृत्वा, [ धृ + स्वार्थे णिच् + क्त्वाच् ] त्वया जन्म परिगृह्येत्यर्थः, स्वयशोगुप्तकर्म्मणः,—स्वेषां—निजानां, बलिकर्णादीनामित्यर्थः, स्वेन वा यशसा—कीर्त्त्या, गुप्तं—रक्षितम्, एतावत्कालपर्य्यन्तं सुदृढमवस्थितमित्यर्थः, कर्म्म—लोकहितसाधिनी क्रिया, यदा—कर्म्म—व्याप्यम्, अनुमितिसाधनं लिङ्गमित्यर्थः, इदानीं तेषां सत्त्वाभावेऽपि कालान्तरे सत्त्वानुमापकं चिह्नसमूहमिति यावत्, तस्मात्, यद्वा—स्वस्य—निजस्य, भवत इति भावः, यशसा,—कीर्त्त्या, दानादिजनितख्यात्या

(क) नितान्तपरिचयवशात् आत्मनि राज्ञा कृतामवज्ञां मनसि निधाय इक्षुमिषेणाऽऽह,—

"कान्तोऽसि नित्यमधुरोऽसि रसाऽऽकुलोऽसि
किञ्चासि पञ्चशरकार्मुकमद्वितीयम्।
इक्षो! तवास्ति सकलं परमेकमूनं
यत्सेवितो भजसि नीरसतां क्रमेण" ॥ १ ॥

राजा कविहृदयं ज्ञात्वा मयूरं सम्मानितवान्।

[ इति भोज-मयूरकविसंवादः ] ।

इत्यर्थः, गुप्तम्—आवृतं, तिरोहितमित्यर्थः, कर्म्म—नामोत्कीर्त्तनादिरूपं लोकहित-क्रिया वा, ("कर्म्म व्याप्ये क्रियायाञ्च पुंनपुंसकयोर्मतम्" इति रुद्रः) तस्माद्धेतोः, बलिकर्णाद्याः,—दातृत्वेन प्रसिद्धाः ते ते राजानः, मोचिताः,—मुक्ता जाताः, तव दानादिजनितकीर्त्त्या तेषां कीर्त्तिविलोपात् ते विस्मारिता इति भावः; बलि-कर्णादिभ्योऽपि दाता भवानिति तात्पर्य्यम् ॥ २ ॥

(क) नितान्तपरिचयवशात—पुनः पुनरागमनादिजनितविदितस्वरूपत्वात् इत्यर्थः, अतिशयप्रणयाद्धेतोरित्यर्थो वा। अतिपरिचयादवज्ञाजनने उद्भटश्लोको यथा—"अतिपरिचयादवज्ञा भवति सन्ततगमनादनादरोऽपि। मलये भिल्लपुरन्ध्री चन्दनतरुमिन्धनं कुरुते ॥" इति।

अतिपरिचयात् किञ्चिदनादृतो मयूरकविः इक्षोः स्वरूपवर्णनाच्छलेन भोजमभि-युञ्जन्नाह, कान्त इति।—इक्षो!—हे रसालदण्ड!, हे इक्षुधर्म्मिं राजन्! इति भावः; कान्तः,—कमनीयः, अभीष्टः इत्यर्थः, अन्यत्र—सुकोमलदेहः, सर्वेषां प्रिय इत्यर्थो वा; असि—भवसि, त्वमिति शेषः, एवमग्रेऽपि कर्तृपदमध्याहरणीयम्; नित्यमधुरः,—नित्यं—सर्व्वकालं, मधुरः,—मिष्टः, अन्यत्र—मधुरः,—प्रियः, शोभनं वा, रम्यदर्शनः इत्यर्थः, मधुरस्वभावो वा, ("मधुरौ स्वादुशोभनौ" इति व्याड़िः। "स्वादुप्रियौ च मधुरौ" इत्यमरः) असि—भवसि, कदाऽपि त्वं स्वकीय-स्वादुत्वं नैव त्यजसीत्यर्थः, रसाऽऽकुलः,—रसेन—सुस्वादुद्रवविशेषेण, ("रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्य्ये तिक्तादौ द्रवरागयोः। देहधातुप्रभेदे च पारद-

# भोज-तस्करसंवादः ।

ततः कदाचिद्रात्रौ सौधोपरि क्रीड़ापरो राजा शशाङ्क-मालोक्य प्राह,—

"यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते

तदाचष्टे लोकः शशक इति नो मां प्रति तथा" ।

ततश्चाधोभूमौ सौधान्तरप्रविष्टः कश्चिच्चोर आह,—

"अहन्त्विन्दुं मन्ये त्वदरिविरहाऽऽक्रान्ततरुणी-

कटाक्षोल्कापातव्रणकणकलङ्काङ्किततनुम्" ॥ १ ॥

राजा तत् श्रुत्वा प्राह,—"अहो ! महाभाग ! कस्त्वमर्द्ध-रात्रे कोशगृहमध्ये तिष्ठसि ?" इति । स आह—"देव !

---

स्वादयोः पुमान्" इति मेदिनी ) आकुलः,—व्याप्तः, परिपूर्ण इत्यर्थः, अन्यत्र—रसेन—रागेण, अनुरागेणेत्यर्थः, आकुलः—पूर्णः, आश्रितानुरागी इत्यर्थः ; असि—भवसि, किञ्च—अन्यच्च, अद्वितीयम्—एकमात्रं, प्रधानमित्यर्थः, पञ्चशरकार्म्मुकं—पञ्चशरस्य—कन्दर्पस्य, कार्म्मुकं—धनुः, अन्यत्र—पञ्चशरस्य कार्म्मुकमिव कार्म्मुकं—कामिनीमोहनरूप इत्यर्थः ; कर्म्मणे प्रभवति इति कार्म्मुकं, पञ्चशरकार्म्मुकं—कामक्रियानिपुण इत्यर्थो वा, असि—भवसि, तव—ते, सकलं—सर्व्वं, कान्त्वादिकमित्यर्थः, अस्ति—वर्त्तते, परं—किन्तु, एकम्—एकं वस्तु, ऊनं—हीनम्, एकं वस्तु त्वयि नास्तीत्यर्थः, यत—यतः, सेवितः,—भजितः, अन्यत्र—आराधितः, क्रमेण—अनुक्रमेण, शनैः शनैरित्यर्थः ; नीरसतां—रसहीनतां, शुष्कतामित्यर्थः, अन्यत्र—अनुरागहीनतां, भजसि—आश्रयसि, रसविहीनः विरक्तश्च भवसीत्यर्थः, एष एव ते महान् दोष इति भावः । वसन्ततिलकं वृत्तम् ॥ १ ॥

---

चन्द्रमण्डलं पश्यतो राज्ञो वितर्कमाह, यदिति ।—चन्द्रान्तः,—चन्द्रस्य—शशाङ्कस्य, अन्तः,—मध्ये, एतत्—परिदृश्यमानं, यत्—अङ्कात्मकं वस्तु इत्यर्थः,

अभयं (क) नो देहि" इति। राजा—"तथा" इत्याह। ततो राजानं स चोरः प्रणम्य स्ववृत्तान्तमकथयत्। तुष्टो राजा चोराय दशकोटीः सुवर्णानामष्टौ मत्तान् गजेन्द्रांश्च ददौ। ततः कोशाधिकारी धर्म्मपत्रे लिखति,—

"तदस्मै चोराय प्रतिनियतमृत्युप्रतिभिये
प्रभुः प्रीतः प्रादादुपरितनपादद्वयकृते।

---

जलदलवलीलां—जलदलवस्य—मेघखण्डस्य, लेशमितमेघस्येत्यर्थः, लीलां—विलासं, वितनुते—विस्तारयति, अनुकरोतीति यावत्, [वि+तन+लट्-ते] लोकः,—जनः, तत्—वस्तु, शशकः,—मृगविशेषः, इति—एवम्, आचष्टे—कथयति, [आ+चक्ष+लट्-ते] मां प्रति—मम तु इत्यर्थः, [प्रतिशब्दयोगात् "माम्" इति द्वितीया विभक्तिः] तथा—तादृक्, नो—न, प्रतिभातीति शेषः। राज्ञाऽभिहितमेतत् श्लोकार्द्धमाकर्ण्य, नृपाधिष्ठितसौधान्तर एव प्रविष्टः कश्चिच्चोरः प्रत्युत्तरति, अहमिति।—अहन्तु—अहं तस्करः किन्तु, इन्दुं—शशाङ्कं, त्वदरिविरहाऽऽक्रान्ततरुणीकटाक्षोल्कापातव्रणकणकलङ्काङ्कितततनुं—तव—भवतः, अरीणां—रिपूणाम्; त्वया निहतानामिति भावः; विरहाऽऽक्रान्ताः,—वियोगविधुराः, निहतभर्तृकत्वादिति भावः; याः तरुण्यः,—युवतयः, विधवाः पत्न्य इत्यर्थः, तासां कटाक्षाः,—अपाङ्गवीक्षणानि, विरहिसन्तापकत्वात् चन्द्रं प्रति सक्रोधवक्रदृष्टिविक्षेपा इत्यर्थः, ते एव उल्काः,—तेजःपुञ्जविशेषाः, तेषां पातः,—पतनं, चन्द्राङ्गे इति भावः; तेन यो व्रणः,—दाहजक्षतः, तस्य कणः,—स्वल्पपरिमितः, कलङ्कः,—चिह्नं, ("कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्" इत्यमरः) दृश्यते च लोके यत्, अग्निदाहादिजे व्रणे शुष्केऽपि तस्य कृष्णवर्णचिह्नविशेषः सुदीर्घकालमविलीनस्तिष्ठति; तेन अङ्किता—चिह्निता, चित्रिता वा, तनुः,—देहो यस्य तं तादृशं, मन्ये—तर्कयामि; चन्द्रान्तर्यत् कृष्णवर्णचिह्नं दृश्यते, तत्तु कालान्तरेण शुष्कीभूतस्य दाहजक्षतस्यैव इत्यहं मन्ये इति निष्कर्षः। शिखरिणी वृत्तम्॥ १॥

(क) नः,—अस्मभ्यम्। ["अस्मदो द्वयोश्च" (१।२।५९ पा०) इति अविशेषणाभावे एकत्वेऽपि बहुवचनम्]।

दानपरिमाणं तस्य हेतुञ्च लिखति, तदिति।—प्रभुः,—स्वामी, भोजराज इत्यर्थः, उपरितनपादद्वयकृते—उपरितनस्य—अग्रिमस्य, पश्चादुक्तस्य इत्यर्थः, पादद्वयस्य—उत्तरार्द्धचरणद्वयस्य, कृते—निमित्तं, प्रीतः,—सन्तुष्टः सन्, तत्—

सुवर्णानां कोटीर्दश दशनकोटिक्षतगिरीन्
गजेन्द्रानप्यष्टौ मदमुदितकूजन्मधुलिहः" ॥ २ ॥

[ इति भोज-तस्करसंवादः ]।

---

## भोज-सुदीनविद्वत्संवादः।

ततः कदाचित् द्वारपाल आगत्य प्राह,—"देव ! कौपीनावशेषो विद्वान् द्वारि वर्त्तते" इति। राजाऽऽह,—"प्रवेशय" इति। ततः प्रविष्टः स कविर्भोजमालोक्य,—"अद्य मे दारिद्र्यनाशो भविष्यति" इति मत्वा तुष्टो हर्षाश्रूणि मुमोच। राजा तमालोक्य प्राह,—"कवे ! किं रोदिषि ?" इति। ततः कविराह,—"राजन् ! आकर्णय (क) मद्गृहस्थितिम्,—

---

ताहृशाय, अपहरणार्थं कोषगृहं प्रविष्टाय इति यावत्, अत एव प्रतिनियतमृत्युप्रतिभिये—प्रतिनियता—सुनिश्चिता, मृत्योः,—मरणात्, राजाऽऽदेशेन चौर्य्यापराधजनितजीवनदण्डादित्यर्थः, प्रतिभीः,—प्रतिभयं, भयमित्यर्थः, ("प्रतिभयं भयं भीष्मे" इति हैमः) यस्य तस्मै ; ("प्रतिनिहतमृत्युप्रतिभिये" इति पाठे तु—प्रतिनिहता—प्रतिविनष्टा, अपगता इति यावत्, राज्ञा अभयदानादिति भावः ; मृत्योः प्रतिभीः यस्य तस्मै) अस्मै—अत्र उपस्थिताय, चोराय—तस्कराय, सुवर्णानां दश कोटीः,—दशकोटीसङ्ख्यकाः सुवर्णमुद्राः, दशनकोटिक्षतगिरीन्—दशनानां—दन्तानां, कोटिभिः—अग्रभागैः, अश्रिभिर्वा, कोणैरित्यर्थः, ("कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः" इति मेदिनी) क्षताः,—विदारिताः, गिरयः,—पर्व्वता यैस्तान् ताहृशान्, मदमुदितकूजन्मधुलिहः,—मदेन—गजकपोलस्रुतदानजलेन, मुदिताः,—हृष्टाः, अत एव कूजन्तः,—गुञ्जन्तः इत्यर्थः, मधुलिहः,—भ्रमराः येषु ताहृशान्, अष्टौ—अष्टसङ्ख्यकान्, गजेन्द्रानपि—करिश्रेष्ठान्, प्रादात्—व्यतारीत्, [ प्र + दा + लुङ्-द ]। शिखरिणी वृत्तम् ॥ २ ॥

---

( क ) मद्गृहस्थितिं—मम आवासस्य अवस्थामित्यर्थः।

अये! लाजा उच्चैः पथि वचनमाकर्ण्य गृहिणी
शिशोः कर्णौ यत्नात् सुपिहितवती दीनवदना।
मयि क्षीणोपाये यदकृत दृशावश्रुबहुले
तदन्तःशल्यं मे त्वमसि पुनरुद्धर्त्तुमुचितः" ॥ १ ॥

राजा,—"शिव! शिव! कृष्ण! कृष्ण!" इत्युदीरयन् प्रत्यक्षरलक्षं दत्त्वा प्राह,—"सुकवे! त्वरितं गच्छ गेहं, त्वद्गृहिणी खिन्नाऽभूत्" इति।

[ इति भोज-सुदीनविद्वत्संवादः ]।

## भोज-शाम्भवदेवसंवादः।

ततः कदाचित् मृगयापरिश्रान्तो राजा कस्यचिन्महाब्राह्मणस्य

स्वकीयदारिद्र्यं विवृणोति, अये इति।—अये इति सम्बोधनं कामपि मार्गस्थां प्रति कस्यचिदिति बोध्यम्; लाजाः,—अक्षताः, "खै" इति ख्याता भ्रष्टधान्यविशेषा इति यावत्, [ "दारबर्षासिकताजलौकावस्त्रान्तर्वाचदशाबहुलाः कृत्तिकामघालाजागृहेभ्यो नित्यं बं" [illegible] नित्यबहुवचनम् ] इति पथि—मार्गे, उच्चैः,—तारम्, उच्चैःस्वरेण केनापि उच्चारितमित्यर्थः, वचनं—वाक्यम्, आकर्ण्य—श्रुत्वा, गृहिणी—मम भार्य्या, दीनवदना—मलिनमुखी, दारिद्र्यनिपीड़ितत्वात् प्रार्थनापूरणाक्षमतया शिशोः क्रन्दनभयात् विषण्णानना इति भावः; यत्नात्—आग्रहातिशयात्; सत्वरतयेति भावः; शिशोः,—बालकस्य, शिशुपुत्रस्येत्यर्थः, कर्णौ—श्रवणयुगलं, सुपिहितवती—सुदृढमाच्छादितवती, खाद्यद्रव्यनामश्रवणेन शिशोः क्रन्दनभयादिति भावः; [ सु+अपि+धा+क्तवतु:+ङीप् "दधातेर्हिः" (७।४।४२ पा०) इति हि-आदेशः "वष्टिभागुरि—"इत्यादिना अपेरकारलोपश्च ] मयि—भर्त्तरि इति यावत्, क्षीणोपाये—निष्फलप्रयत्ने, दारिद्र्यात् लाजाऽऽहरणाऽसमर्थे इति भावः; दृशौ—अक्षिणी, अश्रुबहुले—अश्रुपूर्णे, अकृत—व्यधात्, [ कृ+लुङ् त ] गृहिणीति शेषः, इति यत्, तत्—दृशोरश्रुबहुलत्वरूपमित्यर्थः, मे—मम,

छायामाश्रित्य तिष्ठति स्म। तत्र शाम्भवदेवो नाम कविः कश्चिदागत्य राजानं वृक्षमिषेणाऽऽह,—

"आमोदैर्मरुतो मृगाः किसलयोल्लासैस्त्वचा तापसाः
पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दितास्छायया।
स्कन्धैर्गन्धगजास्त्वयैव विहिताः सर्वे कृतार्थास्ततः
त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नाऽऽपदोऽन्ये द्रुमाः॥१॥

अन्तःशल्यम्—अभ्यन्तरस्थं कीलं, हृदि निखातं लौहादिमयं कीलकमिति यावत्, उद्धर्तुम्—उत्पाटयितुं, त्वं पुनः,—त्वमेव, उचितः,—योग्यः, समर्थः इति यावत्, असि—भवसि; दानशौण्डो भवानेव मे दारिद्र्यशल्यमपनेतुं समर्थः, नान्य इति सरलार्थः। शिखरिणी वृत्तम्॥१॥

---

वृक्षवर्णनाच्छलेन राज्ञः सर्व्वाश्रयत्वं प्रकटयति, आमोदैरिति।—हे वृक्ष! इत्यामन्त्रणपदमत्र अध्याहरणीयम्। त्वया—भवता, मरुतः,—गन्धवहाः वायवः, आमोदैः,—सौरभैः; गन्धवहाः वाताः त्वया अन्वर्थसञ्ज्ञा जाता इति भावः; (अत्र वृक्षशब्देन महकार एव ध्वन्यते, तस्यैव सौरभाऽऽतिशय्यात्) मृगाः,—हरिणाः पशवो वा, किसलयोल्लासैः,—पल्लवविकाशैः, मृगाणामाहारार्थमिति भावः; तापसाः,—तपस्विनः, त्वचा—वल्कलेन, तेषां परिधानार्थमिति भावः; षट्चरणाः,—भ्रमराः, पुष्पैः,—सुमनोभिः कुसुमविकाशैरित्यर्थः, मकरन्दसङ्ग्रहार्थमिति भावः, शकुनयः,—पक्षिणः, फलैः,—शस्यैः, फलप्रसवैरित्यर्थः, तेषां भक्षणार्थमिति भावः; घर्म्मार्द्दिताः,—आतपपीड़िताः, छायया,—अनातपेन, छायाप्रदानेनेत्यर्थः, क्लान्तिनिवारणार्थमिति भावः; गन्धगजाः,—गन्धप्रधानाः गजाः, मदस्राविणो हस्तिन इत्यर्थः, स्कन्धैः,—प्रकाण्डैः, मूलात् शाखापर्य्यन्तभागैरित्यर्थः, ("अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधिस्तरोः" इत्यमरः) गात्रकण्डूतिनिवारकैरिति भावः; सर्वे एव—निखिला एव प्राणिनः, कृतार्थाः,—सिद्धप्रयोजनाः, सफलमनोरथा इत्यर्थः, विहिताः,—कृताः, ततः,—तस्मात्, सर्वानेव कृतार्थीकरणात् इत्यर्थः, त्वं—भवान्, विश्वोपकृतिक्षमः,—विश्वस्य—जगतः, जगद्वासिनामित्यर्थः, उपकृतौ—हितसाधने, क्षमः,—समर्थः, असि—भवसि, भवता—त्वया, अन्ये—अपरे, द्रुमाः,—वृक्षाः, क्षुद्रा इति भावः;

किञ्च,—

अविदितगुणाऽपि सत्कविभणितिः कर्णे वमति हि मधुधाराम् ।
अनधिगतपरिमलाऽपि च हरति दृशं मालतीमाला" ॥ २ ॥

ताभ्यां श्लोकाभ्यां चमत्कृतो राजा प्रत्यक्षरं लक्षं ददौ ।

[ इति भोज-शाम्भवदेवसंवादः ] ।

## भोज-शैवविप्रसंवादः ।

अन्यदा श्रीभोजः श्रीमहेश्वरं नन्तुं शिवालयमभ्यगात् । तदा कोऽपि ब्राह्मणो राजानं शिवसन्निधौ प्राह,—"देव !—

---

भग्नापदः,—भग्नाः,—विनष्टाः, आपदः,—विपत्तयः येषां ते तादृशाः, जाता इति शेषः, त्वत्त एव सर्व्वप्राणिनां प्रयोजनसिद्धेः अन्येषां क्षुद्रवृक्षाणां प्रयोजनाभावादिति भावः ; अत्रायमाशयः,—हे महावृक्षधर्म्मिन् ! भोज ! आमोदरूपं-रौदार्य्यादिगुणैः मरुन्मार्गाः सर्व्वत्रैव निर्बाधविचरणशीलाः गन्धरूपगुणग्राहिणो विद्वांसः, किशलयविकाशरूपमहाभुजप्रसारणपूर्व्वकाभयप्रदानैः मृगधर्म्माणः भीताः प्राणिनः, त्वग्रूपवस्त्रप्रदानैः तापसधर्म्माणो निःस्वाः वस्त्रार्थिनः, सुमनोऽपराह्न-पुष्परूपसुमनोभिः ( हृद्यैः व्यवहारैः ) षट्पदधर्म्माणः स्तुतिपराः पार्श्वचराः, फलरूपाहार्य्यप्रदानैः शकुनिधर्म्माणो यायावरा अतिथयः, छायारूपाश्रयदानैः घर्म्मपीडितवत् दारिद्र्यसन्तापक्लिष्टाः, वृक्षस्कन्धरूपस्वकीयभुजशिरसि रणकण्डूति निवारणाय ताडनसङ्घनादिभिः गन्धगजधर्म्माणो मदोद्धता भटाश्च त्वयैव कृतार्था जाताः, भवत्त एव तेषां सर्वार्थसिद्धेः अन्येषां नृपाणामाश्रयग्रहणस्य प्रयोजनाभावात् ते निरापदास्तिष्ठन्तीति । शार्द्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

"भग्नाऽऽपदोऽन्ये द्रुमाः" इति यत् त्वयोक्तं, तत् कथं ज्ञायते अत्रावस्थितेन त्वया द्रुमान्तरमपश्यता इत्याशङ्क्य तज्ज्ञानसम्भावनां प्रति दृष्टान्तमुपन्यस्यति, अथवा अविज्ञातपरिचयस्यापि मे सुकवित्वं भवान् मद्वाक्येनैव ज्ञास्यतीत्याशयेनाह, अविदितेति ।—सत्कविभणितिः,—सत्कवीनां—सुकवीनां, भणितिः,—उक्तिः, कवितेति यावत्, अविदितगुणाऽपि—अविदितः,—अज्ञातः, सम्यक्तया

अर्द्धं दानववैरिणा गिरिजयाऽप्यर्द्धं शिवस्याऽऽहृतं
देवेत्थं जगतीतले पुरहराभावे समुन्मीलति ।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत् त्वां मान्तु भिक्षाऽटनम्" ॥१॥

राजा अक्षरलक्षं ददौ ।

[ इति भोज-शैवविप्रसंवादः ] ।

बोधविषयनपरिगत इत्यर्थः, गुणः,—ओजःप्रसादादिरूपः यस्याः तादृशी अपि, श्रवणमात्रेणैव अनधिगतगुणादिकाऽपीत्यर्थः, कर्णे—श्रोत्रे, श्रोतुरिति शेषः, ("कर्णेषु" इति पाठान्तरम्) मधुधारां—मधुप्रपातं, माधुर्य्यसन्ततिमिति यावत्, वमति—उद्गिरति, वर्षतीत्यर्थः, हि—निश्चये, शब्दविन्यासनैपुण्येनेति भावः ; तथाहि, मालतीमाला—मालतीपुष्पस्रक्, अनधिगतपरिमलाऽपि—अनधिगतः,—दूरत्वादिदोषात् अप्राप्तः, परिमलः,—सौरभं यस्यास्तादृशी अपि, दृशं—नयनं, हरति च—आकर्षति च, गुम्फनादिवैशिष्ट्येनेति भावः ; सुकवेः कविता निगूढार्था अत एव झटिति अनधिगततात्पर्य्याऽपि केवलं शब्दमाधुर्य्येणैव यथा कवयितुः गुणग्रामं प्रकटयति, यथा च अनाघ्राताऽपि मालतीमाला द्रष्टृचित्ते स्वप्रभावं प्रकटयति, एवमविज्ञातेनापि मया अवस्थेनैव वृक्षदर्शनादेव ज्ञायते यत् अनेन वृक्षेण अन्ये द्रुमाः भग्नापदः इति भावः ; अथवा अनाघ्राताऽपि मालतीमाला यथा दृशं हरति, तथा अपरिचितस्यापि मम कवितैव भवन्तं मां परिचाययिष्यति इति भावः । आर्य्या वृत्तम् ॥ २ ॥

---

ब्राह्मणः किञ्चित् भिक्षितुं राज्ञः शङ्करतुल्यत्वादिकं प्रकटयति, अर्द्धमिति ।—देव !—हे राजन् !, शिवस्य—महादेवस्य, अर्द्धम्—अर्द्धाङ्गं, दक्षिणाङ्गमिति यावत्, दानववैरिणा—असुरविनाशिना, हरिणेत्यर्थः, हरिहररूपेणेति भावः ; गिरिजयाऽपि—गौर्य्या अपि, अर्द्धम्—अपरार्द्धं, वामार्द्धमिति यावत्, हरगौरीरूपेणेति भावः ; आहृतं,—गृहीतं, स्वस्वार्द्धाङ्गेनावृतमिति यावत्, इत्थम्—एवम्प्रकारेण, जगतीतले—भुवनमध्ये, पुरहराभावे—पुरहरस्य—त्रिपुरविध्वंसिनः शिवस्य, अभावे—अवस्थायाम्, अदर्शने इति यावत्, समुन्मीलति—प्रकटयति सति, समुपतिष्ठति सतीत्यर्थः, [ सम्+उत्+मील+शतृ+भावे ७मी १ व० ] गङ्गा—शिवमूर्द्धस्था

# भोज-धर्म्मदत्तसंवादः ।

ततः कदाचित् द्वारपाल आगत्य प्राह,—"देव ! धर्म्मदत्ताऽऽख्यः कोऽपि विद्वान् द्वारि तिष्ठति" इति । राजा,—"प्रवेशय" इत्याह । ततः प्रविष्टो विद्वान् पठति,—

"क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी ।
ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र ! दरिद्रता" ॥ १ ॥

---

भागीरथी, सागरं—समुद्रं, शशिकला—शिवललाटस्था चन्द्रकला, अम्बरम्—आकाशं, नागाधिपः,—सर्पराजः वासुकिः, शिवस्य भूषणभूतः, यज्ञोपवीतभूतो वा इति भावः, क्ष्मातलं—क्ष्मायाः,—पृथिव्याः, तलम्—अधोदेशं, पातालमित्यर्थः, सर्व्वज्ञत्वं—शिवस्य सर्व्ववेत्तृत्वं, तथा अधीश्वरत्वम्—अधिक ईश्वरः तस्य भावः तत्त्वं, शिवस्य महेश्वरत्वं, प्रणताशेषसामन्तत्वञ्च, ( "राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः" इत्यमरः ) त्वां—भवन्तम्, अगमत्—अगात्, गङ्गादिकाः सर्वाः शिवविभूतयः तदभावात् एकमेकं स्थानमशिश्रियन्, भिक्षाऽटनन्तु—शिवस्य भिक्षार्थमितस्ततः भ्रमणं पुनः, माम्, अगमदित्यनेनान्वयः, शिवस्य ऐश्वर्य्यजातं भाग्यवन्तः सर्वे अलभन्त, दारिद्र्यसूचिकां भिक्षावृत्तिं पुनः दुर्भाग्यः अहमेव लभे इत्यर्थः ; दैवविभूतिसम्पन्नो भवान् वाणीकमलयोरुभयोरेव सुमहान् आश्रय इति भावः । शार्द्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

राजानुग्रहस्य दारिद्र्यनाशकत्ववर्णनमुखेन स्वाभिप्रायं प्रकटयति, क्षणमिति ।—नरेन्द्र !—भो नरश्रेष्ठ ! ते—तव, अनुरागिणी—सुप्रसन्ना इत्यर्थः, दृष्टिः,—दर्शनं, कटाक्षवीक्षणमिति यावत्, क्षणमपि—अत्यल्पकालमपि, यं, जनमिति शेषः, अनुगृह्णाति—अनुकम्पते, यं प्रति क्षणकालमपि भवान् सानुरागकटाक्षपातं करोतीत्यर्थः, दरिद्रता—निर्धनत्वम्, ईर्ष्ययेव—असूयया इव, तं, जनमिति शेषः,

राजा लक्षं ददौ। पुनरपि पठति कविः,-

"केचिन्मूलाऽऽकुलाऽऽशाः कतिचिदपि पुनः स्कन्धसम्बन्धभाजः
छायां केचित् प्रपन्नाः प्रपदमपि परे पल्लवानुश्रयन्ति।

आशु—शीघ्रं, त्यजति—जहाति, तं परित्यज्य गच्छतीत्यर्थः, यथा नायकं प्रति कस्याश्चित् परकीयायाः सानुरागकटाक्षवीक्षणं दृष्ट्वा तं तदनुरागिणमवधार्य्य स्वीया त्यजति, तद्वत् इति भावः; तव कृपाकटाक्षेण दारिद्र्यपीड़ितः अचिरेणैव सम्पन्नो भवतीति अहमपि तथैव भविष्यामीति तात्पर्य्यम् ॥ १ ॥

लक्षप्राप्त्या प्रीतः कविः राज्ञो मर्म्मज्ञत्वं द्योतयितुं स्तौति, केचिदिति।—केचित्, जना इति शेषः, वाग्वल्ल्याः,—वाक्—वाक्यं, वल्लीव—लतेव तस्याः, लताप्रतानवत् विस्तृतवचनजातस्य; शब्दावलीगुम्फितायाः कवितात्मिकाया वाच इति भावः; मूलाकुलाशाः,—मूले—शिफायां, कियन्निम्ने अस्याः मूलमस्ति इत्यन्वेषणे इत्यर्थः, आकुला—व्यस्ता, आशा—तृष्णा, अभिलाष इत्यर्थः, येषां तथाभूताः, मूलान्वेषणव्यग्रा इत्यर्थः, अन्यत्र—मूले—आद्ये, किं मूलकमिदं वाक्यमित्यादिकारणानुसन्धाने इत्यर्थः, ("मूलमाद्ये शिफाभयोः" इत्यमरः) आकुला आशा येषां तादृशाः, एतादृशकवितारचनस्य को हेतुः इत्येवंरूपमूलकारणानुसन्धानपरा इत्यर्थः, कतिचिदपि पुनः,—केचिच्च पुनः, स्कन्धसम्बन्धभाजः,—स्कन्धेन—प्रकाण्डदेशेन, सम्बन्धं—संसर्गं, भजन्ते—आश्रयन्ति ये ते तादृशाः, कुत्रास्याः स्कन्धदेशः, कियति वा ऊर्द्ध्वं वर्त्तते इत्यादिनिर्णयपरा इत्यर्थः, अन्यत्र—स्कन्धेन—छन्दोविशेषेण, ("स्कन्धः स्याद्भूपतावंसे सम्परायसमूहयोः। काये तरुप्रकाण्डे च भद्रादौ छन्दसो भिदि॥" इति मेदिनी) सम्बन्धं भजन्ते ये ते तादृशाः, श्लोकात्मकं वाक्यमिदं केन छन्दसा निबद्धं, कश्चिद्दोषोऽवास्ति न वा इत्याद्यवधारणपरा इत्यर्थः, केचित् छायाम्—अनातपं, प्रपन्नाः,—प्राप्ताः, वल्लीयं छायाबहुला न वा इत्याद्यनुसन्धाननिरताः इत्यर्थः; छायामाश्रित्य सुखेन वर्त्तन्ते इत्यर्थो वा; अन्यत्र—छायां—शोभां, रीतिगुणालङ्कारादिजनितामित्यर्थः, ("छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोर्दीप्तिसच्छोभापंक्तिषु स्त्रियाम्॥" इति मेदिनी) प्रपन्नाः, श्लोकस्यास्य गुणालङ्कारादिजनिता शोभा कीदृशी इत्याद्यवधारणनिरता इत्यर्थः; श्लोकोऽयं सुशोभनः इत्युक्तैव स्थिता इत्यर्थो वा, केचित् प्रपदमपि—पादाग्रमपि, सूच्यधःस्थमूलस्योपरिभागं भूमिस्थं दृश्यमानांशविशेषमित्यर्थः, ("पादाग्रं प्रपदम्" इत्यमरः) प्रपन्ना इत्यनेनान्वयः; प्रपदमस्याः दृढमदृढं वा स्थूलं सूक्ष्मं वा इत्यादि-

अन्ये पुष्पाणि पाणौ दधति तदपरे गन्धमात्रस्य पात्रं
वाग्वल्लग्नाः किन्तु मूढ़ाः फलमहह ! न हि द्रष्टुमप्युत्सहन्ते"॥२॥

---

निर्णयव्यग्रा इत्यर्थः, प्रपदोपरि सुखमासीना इत्यर्थो वा; यद्वा—प्रपदं—प्रकृष्टं पदं—स्थानं, कीदृशि स्थाने एषा समुत्पन्ना, स्थानमिदं सारवदसारं वा इत्याद्यनुसन्धानरता इत्यर्थः, अन्यत्र—प्रपदं—प्रकृष्टं शब्दं, शब्दसौष्ठवमित्यर्थः, श्लोकपादं वा, ("पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः। पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः॥ श्लोकपादेऽपि च क्लीवं पुंलिङ्गः किरणे पुनः" इति मेदिनी) प्रपन्नाः, कीदृगस्य शब्दसौष्ठवं, पादविन्यासमाधुर्य्यं वा इत्यादितत्त्वानुसन्धाननिरता इत्यर्थः, परे—अपरे च केचित्, पल्लवान्—किशलयान्, उन्नयन्ति—वितर्कयन्ति, किशलयशोभया वल्लीयं रमणीयतां दधाति इत्यादिकमालपन्तीत्यर्थः, अन्यत्र—पल्लवान्—विस्तरान्, उक्तिबाहुल्यानीत्यर्थः, प्रभावान् वा, शक्तीरित्यर्थः, ("पल्लवोऽस्त्री किशलये विटपे विस्तरे बले। शृङ्गारेऽलक्तरागे च प्रभावे शान्तितेजसोः॥" इति मेदिनी) विस्तरोक्तिदुष्टोऽयं श्लोको न वा, यद्वा—श्लोकोऽयं श्रोतृचेतसि प्रभावविस्तारं कर्त्तुं शक्नोति न वा इत्यादिकमित्यर्थः, उन्नयन्ति—विचारयन्ति, अन्ये—अपरे केचित्, पाणौ—हस्ते, पुष्पाणि—कुसुमानि, दधति—धारयन्ति, कुसुमान्युच्चित्य तेषां शोभां पश्यन्त एव तिष्ठन्तीत्यर्थः, अन्यत्र—पुष्पाणि—विकाशान्, स्फुटार्थानित्यर्थः, ("पुष्पं विकाश आर्त्तवे। धनदस्य विमाने च कुसुमे नेत्ररुज्यपि" इति हैमः) दधति—अवलम्बन्ते, श्लोकोऽयं सुगमार्थो वा जटिलार्थो वा इत्यादिकमवलम्ब्य तिष्ठन्तीत्यर्थः, तदपरे—तेभ्यः अन्ये केचित्, गन्धमात्रस्य—केवलसौरभस्यैव, पात्रं—भाजनं, सुगन्धिर्दुर्गन्धिर्वा इतिमात्रविचारणपराः, न मूलाद्यन्वेषणव्यग्रा इत्यर्थः, अन्यत्र—गन्धमात्रस्य—केवलसम्बन्धस्यैव, केवलगर्व्वस्यैवेति वा, ("गन्धः सम्बन्धलेशयोः। गन्धकाऽऽमोदगर्व्वेषु" इति हैमः) पात्रं, श्लोकोऽयं पूर्व्वापरसङ्गतियुक्तः डित्थडवित्थादिवत् निराकाङ्क्षो वा इत्यादिवितर्कपरा इत्यर्थः, श्लोकोऽयमसारो नात्र किञ्चिदपि सौन्दर्य्यादिकमस्ति इत्येवं गर्व्वितवचनजातवादनिरता इत्यर्थो वा, भवन्तीति शेषः, किन्तु—परन्तु, अहह—खेदे, मूढ़ाः,—मूर्खाः ते सर्व्वे इत्यर्थः, फलं—शस्यं, द्रष्टुमपि—अवलोकयितुमपि, ग्रहणस्य तु का कथा इत्यपेरर्थः, न हि—नैव, उत्सहन्ते—प्रयतन्ते, उत्साहिता भवन्तीत्यर्थः, फलमस्याः कीदृशं जातमणु दृहत् वा, दीर्घं वर्त्तुलं वा इत्यादिकं परीक्षितुमपि नेच्छन्ति, स्वादग्रहणादेस्तु कथैव नास्तीति भावः; अन्यत्र—फलं—सारं,

एतदाकर्ण्य बाणः प्राह,—

"परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां
कदाचिच्चाभ्यासाद्भजति ननु वैरस्यमधिकम्।

व्युष्टिं वा, समृद्धिमित्यर्थः, ("फलं जातीफले शस्ये हेतृत्थे व्युष्टिलाभयोः" इति मेदिनी) द्रष्टुमपि नोत्सहन्ते; श्लोकमिममाकर्ण्य कीदृग्ज्ञानं लब्धं, किं वा वस्तु अवगत, अथवा चमत्कारित्वादिरूपा समृद्धिर्वा अस्य कीदृशी, एतद्द्रष्टुमपि नेच्छन्ति बोधस्तु दूरापास्तमिति भावः; भवान् वाङ्मर्मज्ञः अत एव फलस्य द्रष्टा बोद्धा च, न मूर्खवत् केवलं मूलाद्यन्वेषणाकुलाः, बोद्धृत्वात् प्रयोक्तुः सम्मानयिता च इति तात्पर्य्यम्। यद्वा—श्रहह—खेदे, केचित् वाग्वल्ल्याः,—वागेव वल्ली तस्याः [ रूपककर्म्मधारयः ] सुभाषितरूपलतायाः, मूले—अभिप्रायरूपे, आकुला—व्याकुला, विपरीतेत्यर्थः, आशा—आशयः, बोध इत्यर्थः, येषां ते तादृशाः, भवन्तीति शेषः, केचित् वाक्यस्य अभिप्रायमपि न बुध्यन्ते इत्यर्थः, कतिचिदपि—केचिच्च, स्कन्धसम्बन्धभाजः,—स्कन्धे—वाग्वल्ल्याः काण्डदेशे, शब्दविस्तरे इत्यर्थः, सम्बन्धं—मनोयोगं भजन्ते ये ते तादृशाः, भवन्तीति शेषः, केचित् वाक्यस्य शब्दविस्तरमेव विचारयन्तीत्यर्थः, केचित्—केऽपि च, छायां—वाग्वल्ल्या आभासमात्रं, ध्वनितार्थमित्यर्थः, प्रपन्नाः,—प्राप्ताः, केचित् वाक्यस्य ध्वनितार्थमेव पर्य्यालोचयन्तीत्यर्थः, परे—अन्ये च, पल्लवान्—वाग्वल्ल्याः पत्राणि, शब्दसौष्ठवमित्यर्थः, उन्नयन्ति—विचारयन्ति, केचित् प्रपदं—पादाग्रं, वाग्वल्ल्या अवलम्बनभूतमर्थमित्यर्थः, उन्नयन्तीति शेषः, अन्ये—अपरे, पुष्पाणि—वाग्वल्ल्याः अर्थसौष्ठवरूपाणि, पाणौ—हस्ते, दधते—धारयन्ति, अर्थसौष्ठवं विचारयन्तीत्यर्थः, अपरे च गन्धमात्रस्य—केवलस्य गन्धस्यैव, वाग्वल्ल्याः पुष्पभूतस्य अर्थसौष्ठवस्य चमत्कारित्वरूपस्य गन्धस्यैवेत्यर्थः, पात्रम—आश्रयः, ग्राहका इत्यर्थः, भवन्तीति शेषः, किन्तु—परन्तु, सर्व्व एव मूढाः,—मूर्खाः, अतः न केऽपि फलं—वाग्वल्ल्यास्तात्पर्य्यरूपां परिणतिं, द्रष्टुमपि—विलोकयितुमपि, न हि—नैव, उत्सहन्ते—क्षमन्ते; वाक्यतात्पर्य्यग्राहका विरलाः, ग्रहणवार्त्ता तु दूरापास्तामिति भावः। स्रग्धरा वृत्तम् ॥ २ ॥

कवेराधिक्षेपवाक्यं श्रुत्वा बाणः प्रत्युत्तरति, परिच्छिन्नेति।—अमृतगुडमधुक्षौद्रपयसां—अमृतं—सुधा, गुडः,—इक्षुरसजातः, मधु—पुष्परसः, ("मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे" इति विश्वः) क्षौद्रं—क्षुद्रा—मक्षिकाविशेषः, तेन कृतं, मधु, ("मधु

प्रियाबिम्बौष्ठे वा रुचिरकविवाक्येऽप्यनवधि-
र्नवाऽऽनन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः" ॥२॥

ततो राजा लक्षं दत्तवान्।

[ इति भोज-धर्म्मदत्तसंवादः ]।

## भोज-भवभूतिसंवादः।

ततः कदाचित् सिंहासनमलङ्कुर्वाणे श्रीभोजे द्वारपाल आगत्य प्राह,—"देव ! वाराणसीदेशादागतः कोऽपि भवभूति-र्नाम कविः द्वारि तिष्ठति" इति। राजा प्राह,—"प्रवेशय" इति। ततः प्रविष्टः सोऽपि सभामगात्। ततः सभ्याः सर्वे तदागमनेन तुष्टा अभूवन्। राजा च भवभूतिं प्रेक्ष्य प्रणमति स्म। स च—"स्वस्ति" इत्युक्त्वा तदाज्ञयोपविष्टः। भवभूतिः प्राह,—"देव !—

---

क्षौद्रं मधु माक्षिकादि" इत्यमरः) पयः,—दुग्धं तानि तेषां, परिच्छिन्नस्वादः,—परिच्छिन्नः,—सावधिकः, स चासौ स्वादः,—आस्वादः तथाभूतः, ससीमास्वाद इत्यर्थः, तन्निर्द्दिष्टस्वाद इति यावत्, ("परिच्छेदे विलेऽवधिः" इत्यमरः) अभ्यासात्—सातत्यात्, पुनः पुनरुपयोगादित्यर्थः, कदाचित—कस्मिन्नपि समये, अधिकं—प्रभूतं यथा तथा, वैरस्यं—विस्वादुतां, भजति—प्राप्नोतीत्यर्थः, ननु—निश्चये, नित्यसेवनादमृतादावपि लोकानामरुचिर्जायते इति समुदितार्थः; तु—किन्तु, प्रियाबिम्बौष्ठे वा—प्रियायाः,—कान्तायाः, बिम्बौष्ठे वा—बिम्बफलवदारक्ताधरे इव, ("इववत् वा-यथाशब्दौ" इति कोषः) रुचिरकविवाक्येऽपि—श्लोकरचयितुर्मनोहरवचस्यपि, मनोज्ञकवितायामपीत्यर्थः, अनवधिः,—अपरिच्छिन्नः, असीम इत्यर्थः, निरुपमः,—अतुलनीयः, अत एव नवानन्दः,—नवः,—अपूर्व्वः, आनन्दः,—हर्षः यत्र तादृशः विचित्रामोदजनकः, कोऽपि—अनिर्वचनीयः, असौ—आस्वाद्यमानः;

नाऽऽनीयन्ते मधूनि मधुपाः पारिजातप्रसूनैः
नाभ्यर्थ्यन्ते तुहिनरुचिना चन्द्रिकायां चकोराः ।
अस्मद्वाङ्माधुरिमधुरमापद्य पूर्वावताराः
सोल्लासाः स्युः स्वयमिह बुधाः किं मुधाऽभ्यर्थनाभिः ॥१॥

रसः,—स्वादः, स्फुरति—प्रतिभासते, प्रियाधरास्वादे यथा कदाऽपि कस्यापि अरुचिर्न जायते, तथा कविवाक्यमपि रम्यञ्चेत् तत्र कदाऽपि कस्यापि नारुचिर्भवति, सर्व्व एव तस्य फलदर्शनोत्साहिनो भवन्ति, परन्तु तादृशं वाक्यं दुर्लभम्, अत एव लोका यथारुचि मूल्याद्याकुलाशा जायन्ते, तव वाक्यं मनोज्ञम्, अतो नृपतिरपि तस्य फलद्रष्टा, यथोचितं ते मानयिता च इति तात्पर्य्यम् । शिखरिणी वृत्तम् ॥२॥

राज्ञा उपवेशनाय अभ्यर्थितः कविः अविज्ञातपाण्डित्येन त्वया नाहमितराऽऽमन्तुवत् आचारमात्रेणैव अभ्यर्थनार्हः, किन्तु पाण्डित्यबलेनैव मे तुष्टाः सर्वे स्वयमेव मां समागत्य अभ्यर्थयन्ते, इत्यभिप्रायेणाऽऽह, नानीयन्ते इति ।—पारिजातप्रसूनैः,—पारिजाताऽऽख्यसुरतरुविशेषस्य कुसुमैः, मधुनि—पुष्परसे, मकरन्दपानार्थमित्यर्थः, [ "निमित्तात कर्म्मयोगे" ( वा० ) इति ७ मी । एवं चन्द्रिकायामित्यत्रापि ] मधुपाः,—भ्रमराः, नानीयन्ते—नाहूयन्ते इत्यर्थः, स्वमधुपायनाय पारिजातपुष्पाणि मधुपान् नाभ्यर्थयन्ते, परन्तु ते स्वयमेव तद्गन्धाऽऽकृष्टाः समुपगच्छन्ति इति समुदितार्थः, तुहिनरुचिना—हिमद्युतिना, चन्द्रेणेत्यर्थः, चन्द्रिकायां—कौमुद्यां, चन्द्रमण्डलनिःसृतसुधापानार्थमिति यावत, चकोराः,—चन्द्रिकापायिनः रक्ताक्षाः स्वनामख्यातपक्षिविशेषाः, नाभ्यर्थ्यन्ते—न याच्यन्ते, चन्द्रः स्वचन्द्रिकापायनाय चकोरान् नाभ्यर्थयते, परन्तु ते तदास्वादलोलुपाः स्वयमेव यान्तीत्यर्थः, [ अभि + अर्थ + णिच् + कर्म्मणि लट्-अन्ते ] ( "तुहिनरुचिनः" इति पाठे—तुहिने—तुषारे, रुच्—इच्छा, ( "रुक् स्त्री शोभाद्युतीच्छासु" इति मेदिनी ) अस्ति एषामिति [ इन् ] तादृशाः, चकोरा इत्यस्य विशेषणम् ; पाठेऽस्मिन् "चन्द्रेण" इति कर्त्तृपदमध्याहरणीयम् ) इह—अस्यां सभायां, पूर्वावताराः,—पूर्वं—प्रथमं, मदग्रे इत्यर्थः, अवतारः,—अवतरणम्, आगमनमिति यावत्, येषां ते तादृशाः, मदागमनात् पूर्वावधि अत्रैवावस्थायिन इत्यर्थः, बुधाः,—पण्डिताः, अस्मद्वाङ्माधुरिमधुरम्—अस्माकं वाचां—रसात्मिकानां कवितानामिति यावत्, या

नास्माकं शिविका न काऽपि कटकाद्यालङ्क्रियासत्क्रिया
नोत्तुङ्गस्तुरगो न कश्चिदनुगो नैवाम्बरं सुन्दरम्।
किन्तु क्ष्मातलवर्त्त्यशेषविदुषां साहित्यविद्याजुषां
चेतस्तोषकरी शिरोनतिकरी विद्याऽनवद्याऽस्ति नः" ॥२॥

इत्याकर्ण्य बाणपण्डितपुत्त्रः प्राह,—"आः पाप! धाराधीशसभायामहङ्कारं मा कृथाः,—

माधुरि—माधुर्य्ये, "माधुरि" इत्यत्र इस्वान्तप्रयोगः कवीनां निरङ्कुशत्वात् समर्थनीयः; तस्याः मधुरं—शोभनं, शोभामित्यर्थः, सौन्दर्य्यमिति यावत्, ("मधुरौ स्वादुशोभनौ" इति व्याडिः) यद्वा—अस्मद्वाचां यः माधुरिमा—माधुर्य्यम् [अत्रापि कवीनां निरङ्कुशत्वात् "माधुरिमा" इति प्रयोगः समर्थनीयः] तस्य धुरं—भारम्, आतिशय्यमित्यर्थः, माधुर्य्यप्रवाहमिति यावत्; आपद्य—प्राप्य, अनुभूय इत्यर्थः, स्वयम्—आत्मनैव, सोल्लासाः,—सहर्षाः, स्युः,—भवेयुः, अतः मुधा—वृथा, अभ्यर्थनाभिः,—पूजनादिसत्कारैरित्यर्थः, किम्?—किं प्रयोजनम्? न किमपीत्यर्थः; मध्वादिपानैः मधुपादयो यथा स्वयमेव उल्लसन्ति, न तेन पारिजातादीनां किमपि उल्लासादिकारणं, न च वा पारिजातादयः मधुपादिभ्यः अभ्यर्थनां कामयन्ते, एवं महाकाव्यश्रवणेन एते पण्डिताः स्वयमेवोल्लसन्तः मामभ्यर्थयन्ते, न तैनाभ्यर्थनैश्च मम कोऽप्युल्लासहेतुर्विद्यते, अतोऽभ्यर्थनं मे निष्प्रयोजनमिति भावः; नाहमभ्यर्थनाकामः भवत्सभां समागतः, किन्तु पाण्डित्यप्रदर्शनेन सर्वानेव भवतः उल्लासयितुं स्वप्राधान्यं प्रतिष्ठापयितुञ्च समागतः, अतः अभ्यर्थनायामकृतायामपि नाहमस्मात् प्रत्यावर्त्तिष्ये इति तात्पर्य्यम्। मन्दाक्रान्ता वृत्तम् ॥ १ ॥

अभ्यर्थनाया निष्प्रयोजनत्वे हेत्वन्तरमाह, नास्माकमिति।—अस्माकं शिविका—मनुष्यवाह्ययानविशेषः, न—नास्ति, काऽपि—काचिदपि, कटकाद्यालङ्क्रियासत्क्रिया—कटकाद्यैः,—वलयकेयूरादिरूपैः भूषणैः, या अलङ्क्रिया—भूषा, अलङ्करणमित्यर्थः, आत्मनः प्रसाधनमिति यावत्, तया सत्क्रिया—सम्मानना, कटकाद्यलङ्कारधारणजनितसमादरलाभ इत्यर्थः, न—नास्ति, उत्तुङ्गः,—उन्नतः, वृहत्काय इति यावत्, तुरगः,—अश्वः, न, कश्चित्—कोऽपि, अनुगः,—अनुचरः इत्यर्थः, न, सुन्दरं—शोभनम्, अम्बरं—वस्त्रम्, अपीति शेषः, नैव—न हि, विद्यते इति शेषः, किन्तु—परन्तु, साहित्यविद्याजुषां—काव्यशास्त्रमनुशीलयतां, काव्यानुरागिणामित्यर्थः, क्ष्मातलवर्त्त्यशेषविदुषां—क्ष्मातले—पृथिव्यां, वर्त्तन्ते—विराजन्ते ये ते

निःश्वासोऽपि न निर्याति बाणे हृदयवर्त्मनि ।
किं पुनः प्रकटाऽऽटोपपदबद्धा सरस्वती ?" ॥ ३ ॥

ततो भवभूतिः पराभवमसहमानः प्राह,—

"हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्द्धालुश्चेदहह ! कविना वश्यवचसा ।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः" ॥ ४ ॥

पुनराह,—

तादृशाः, अशेषाः,—निखिलाः, विद्वांसः,—पण्डिताः तेषां भूतलस्थसर्व्वविपश्चितां, चेतस्तोषकरी—मनस्तुष्टिविधायिनी, शिरोनतिकरी—मूर्द्धविनमनकारिणी, कवये गौरवप्रदर्शनार्थमिति भावः ; अनवद्या—अनिन्द्या, प्रशंसनीया इत्यर्थः, विद्या—ज्ञानं, नः,—अस्माकम्, अस्ति—विद्यते ; साधारणजनानां समादरबुद्धिजनकं धनवत्त्वाज्ञापकं यानवाहनादिकमस्माकं नास्ति, तत्र तु वयं दरिद्रा एव, किन्तु महाधना वयं विद्याधनेनैव सर्व्वत्र समादरभाजः इति हृदयम् । शार्द्दूलविक्रीडितं वृत्तम् ॥ २ ॥

भवभूतेः साहङ्कारवचसा क्रुद्धो बाणपुत्रः स्वपितुः कविकुलगर्व्वविमर्द्दकत्वं प्रख्यापयितुं सश्लेषमाह, निःश्वास इति ।—बाणे—बाणाख्ये कविकुलशेखरे, शरे च, हृदयवर्त्मनि—मानसपथे सति, स्मृतिविषयीभूते सतीत्यर्थः, हृत्स्रोतसि विद्धे सति इत्यर्थश्च, निःश्वासोऽपि—श्वासवायुरपि, न निर्याति—न निर्गच्छति ; एकत्र—बाणकवितः पराजयभयात्, अन्यत्र—प्राणवायोर्निःशेषेणापगमादिति भावः ; प्रकटाटोपपदबद्धा—प्रकटः,—सुव्यक्तः, आटोपः,—दर्पः येषु तादृशैः, प्रचुरगर्व्वव्यञ्जकैरित्यर्थः, पदैः,—वाक्यैः, बद्धा—ग्रथिता, विरचिता इत्यर्थः, सरस्वती—वाणी, किं पुनः ?—न निर्याति इत्यत्र किं पुनर्व्वक्तव्यम् ? बाणकवेरग्रे कोऽपि किमपि उच्चारयितुमपि न समर्थो भवति, अन्यत्र—प्राणवायोरपगमात् वाक्स्फूर्त्तिर्न भवतीति भावः ; सभायामस्यां बाणकवौ वर्त्तमाने ईदृशी ते सदम्भोक्तिः विसदृशी एवेति तात्पर्य्यम् ॥ ३ ॥

गर्व्वोद्धतो भवभूतिः कवीनामन्येषां स्वतो महदन्तरं तृणवत् तुच्छत्वञ्च प्रतिपादयितुमाह, हठादिति ।—हठात्—बलात्कारात्, अतिकष्टेनेति यावत्, आकृ-

"कालिदासकवेर्वाणी कदाचिन्मद्गिरा सह।
कलयत्यर्थसाम्यं चेद्भीता भीता पदे पदे" ॥ ५ ॥

ततः कालिदासः प्राह,—"सखे भवभूते! महाकविरसि, अत्र किमु वक्तव्यम्?—

ष्टानाम्—आनीतानां, बहुचिन्तया समुपस्थापितानामित्यर्थः, यद्वा—हठात्—सहसा, पुण्याचरन्यायेनेति भावः; आकृष्टाना—समापतितानां, स्वत एव स्फुरितानामित्यर्थः, कतिपयपदानां—इतिवाक्यानां, श्लोकपादानां वा, रचयिता—निबन्धयिता, जनः,—लोकः, चेत्—यदि, वश्यवचसा—वश्यं—वशतां गतम्, आयत्तीभूतमित्यर्थः, वचः,—वाक्यं यस्य तेन, वाक्सिद्धिमाप्तवता इत्यर्थः, कविना—पण्डितेन, वश्यवचस्त्वात् वशीकृतवाग्देवतेनेति भावः, सह स्पर्द्धालुः,—स्पर्द्धाकारी, [स्पर्द्धां—पराभिभवेच्छां साम्यं वा, लाति—आददाति, स्वीकरोतीत्यर्थः, इति "मृगय्वादयश्च" (उ०) इति स्पर्द्धा+ला+कुः] भवेदिति शेषः, तर्हि अहह—विस्मये खेदे वा, ("अहहेत्यद्भुते खेदे परिक्लेशप्रकर्षयोः। सम्बोधनेऽपि च" इति मेदिनी) किं बहुना?—बहुना—आधिक्येन उक्तेन, किम्—अलं, निष्प्रयोजनमित्यर्थः, ("किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी) बाहुल्योक्तिर्निष्प्रयोजना, एतस्मात्मेव वदामि यत्, इह—अस्मिन्, पापिनि—पापबहुले, कलौ—जघन्ययुगे, अद्य—अस्मिन् अहनि, श्वो वा—आगामिनि अहनि वा, ("अनागतेऽह्नि श्वः" इत्यमरः) घटानां—कुम्भानां, निर्मातुः,—रचयितुः, कुम्भकारस्येत्यर्थः, त्रिभुवनविधातुश्च—जगत्स्रष्टुः ब्रह्मणश्च, कलहः,—विवादः, भवेत्—स्यात्, कपालनिर्माणसाम्यादिति भावः; [आशंसायां लिङ्] विधातृकुम्भकारयोः यावदन्तरं, मम कवीनामन्येषाञ्च तावदन्तरं बोद्धव्यमित्याशयः। शिखरिणी वृत्तम् ॥ ४ ॥

स्वस्य विद्वत्कुलश्रेष्ठत्वं प्रतिपादयितुमाह, कालिदासेति।—कालिदासकवेः,—कालिदासाख्यसुप्रसिद्धपण्डितस्य, वाणी—वाक्, गद्यपद्यात्मकं वाक्यमिति यावत्, कदाचित्—कदाऽपि, मद्गिरा—मम वाचा, मद्रचितगद्यपद्यात्मकवचसा इति यावत्, सह—समम्, अर्थसाम्यम्—अर्थेन—अभिधेयेन, साम्यं—समतां, तुलनम् इत्यर्थः, कलयति—गृह्णाति, कर्त्तुमिच्छतीत्यर्थः, [कल+णिच्+लट्-तिप्] चेत्—यदि, साऽपि पदे पदे—प्रतिपदं, भीता भीता—कालिदासकवेर्वाणी अपि अत्यन्तभीता सती, कलयतीति शेषः, कालिदासस्य काव्यं सावहितविरचितं कथञ्चिदपि मदीयेन तुलनामर्हति, नान्यस्य कस्यापि इति निष्कर्षः ॥ ५ ॥

एषा धारेन्द्रपरिषन्महापण्डितमण्डिता ।
आवयोरन्तरं वेत्ति राजा वा शिवसन्निभः" ॥ ६ ॥

तच्छ्रुत्वा राजा प्राह,—"युवाभ्यां (क) रत्यन्तो वर्णनीयः" इति । भवभूतिः प्राह,—

"मुक्ताभूषणमिन्दुबिम्बमजनि व्याकीर्णतारं नभः
स्मारं चापमपेतचापलमभूदिन्दीवरे मुद्रिते ।
व्यालीनं कलकण्ठमन्दरणितं मन्दानिलैर्मन्दितं
निष्पन्दस्तवका च चम्पकलता साऽभून्न जाने ततः" ॥ ७ ॥

ततः कालिदासः प्राह,—

भवभूतिना धर्षितः प्रच्छन्नरोषः कालिदासः उभयोरुत्कर्षनिरूपणाय आह, एषेति ।—महापण्डितमण्डिता—महद्भिः,—गुणगरिष्ठैः, पण्डितैः,—विद्वद्भिः, मण्डिता—अलङ्कृता, शोभिता इत्यर्थः, एषा—इयं, धारेन्द्रपरिषत्—धारेन्द्रस्य—धारानगराधिपस्य श्रीभोजस्य, परिषत्—सभा, सभास्थजनमण्डलीति भावः; ("समज्या परिषद्गोष्ठीसभासमितिसंसदः" इत्यमरः) वा—अथवा, शिवसन्निभः,—शङ्करोपमः, महाप्राज्ञः आशुतोष इति यावत्, राजा—नृपतिर्भोजः, आवयोः,—तव मम च, अन्तरं—प्रभेदम्, आवयोर्मध्ये कः श्रेष्ठः, तद्विषयकं तारतम्यमित्यर्थः, वेत्ति—जानाति ॥ ६ ॥

(क) रत्यन्तः,—सुरतावसानं, सुरतक्रीडावसाने नायकयोरवस्थाविशेष इत्यर्थः ।

भङ्ग्या भवभूतिः सुरतान्ते खिन्नायाः नायिकायाः अवस्थां वर्णयति, मुक्तेति ।—इन्दुबिम्बं—चन्द्रमण्डलं, चन्द्रमण्डलवत् शोभनं मुखमण्डलमित्यर्थः, वदनसुधाकरमिति यावत्, मुक्ताभूषणं—मुक्तानां—मौक्तिकानां, भूषणम्—अलङ्कारः यत्र तादृशं, मुक्ताः भूषणं यत्र तादृशमिति वा, परिहृतमुक्ताहारमित्यर्थः, अजनि—जातम्; खेदातिशय्यात् मुक्तासदृशस्वेदबिन्दूद्गमेन मुक्ताविभूषितमिव परिदृश्यमानमभूदिति भावः; यद्वा—मुक्तं—त्यक्तम्, अपगतमित्यर्थः, आभूषणं—भूषणसदृशं स्मितविकाशादिकमित्यर्थः, यस्मात् तादृशमजनि, खेदातिशय्येन अपररात्रीयेन्दुमण्डलवत् विच्छायमलिनं जातमिति भावः; नभः,—आकाशमण्डलम्, आकाशमण्डलवत् सुनीलः केशपाश इति भावः; व्याकीर्णतारं—व्याकीर्णाः,—इतस्ततो विक्षिप्ताः, ताराः,—नक्षत्राणि, नक्षत्रवत् उज्ज्वलानि शिरोमाल्यस्थकुसुमानि इति भावः;

"स्विन्नं मण्डलमैन्दवं विलुलितं स्रग्भारनद्धं तमः
प्रागेव प्रथमानकेतकशिखालीलायितं सुस्मितम् ।
श्रान्तं कुण्डलताण्डवं कुवलयद्वन्द्वं तिरोमीलितं
वीतं विद्रुमसीत्कृतं न हि ततो जाने किमासीदिति"॥८॥

यत्र तादृशम्, अजनि इत्यनेनान्वयः ; सुरतावमर्द्दात् शिथिलितकेशपाशतया त्रुटितग्रन्थिकतया च मालास्थकुसुमानि इतस्ततो विक्षिप्तानि अभूवन्निति भावः, स्मारं—स्मरस्य इदं, मान्मथं, चापं—धनुः, कामकार्म्मुकवत् सुवक्रभ्रूयुगलमिति भावः ; अपेतचापलम्—अपगतचाञ्चल्यं, सम्भोगसमाप्तेः विलसनादिक्रियायाः प्रयोजनाभावात् निर्व्यापारमिति यावत्, अभूत्—अजनि, इन्दीवरे—नीलोत्पले, इन्दीवरवत् सुनीले आयते च लोचने इत्यर्थः, मुद्रिते—निमीलिते, अभूतामिति शेषः, सुरतखेदजनितावसादात् इति भावः ; कलकण्ठमन्दरणितं—कलकण्ठस्य—कपोतस्य, कलकण्ठवत् अव्यक्तमधुरध्वनिविशिष्टकण्ठस्येत्यर्थः, मन्दरणितं—मृदुध्वनिः, व्यालीनं—विलुप्तम् ; सम्भोगावसानात् रतिकालिकमृदुशीत्कारः विरतोऽभूदिति भावः ; मन्दानिलैः,—मृदुमारुतैः, मन्दानिलवत् मृदुप्रवाहितैः निःश्वासवायुभिरित्यर्थः, मन्दितं—मन्दत्वं गतं, क्षीणभावः प्राप्तः इत्यर्थः, अत्रापि अवसादाधिक्यादिति भावः ; सा—सुकोमलत्वेन प्रसिद्धा, चम्पकलता—चाम्पेयवल्ली, चम्पकलतावत् सुकुमाराङ्गी सा नायिका इत्यर्थः, निष्पन्दस्तवका—निष्पन्दः,—निष्कम्पः, स्तवकः,—गुच्छः, गुच्छाकारः स्तनयुग इति भावः, यस्याः सा तादृशी, अनिलमान्द्यादिति भावः ; अभूत—बभूव, सात्त्विकभावापगमात् स्तनयुगः स्फुरणविरहितः अभूदिति भावः ; ततः,—तदनन्तरं, न जाने—किमभूत् तन्न वेद्मि, अवसादाधिक्यात् शिथिलकायमनोवृत्तितया निःसंज्ञप्रायत्वादिति भावः । शार्द्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

अथ कालिदासोऽपि रतावसानिकं विवृणोति, स्विन्नमिति ।—ऐन्दवम्—इन्दुसम्बन्धि, चान्द्रमित्यर्थः, मण्डलं—बिम्बं, चन्द्रमण्डलवत् मुखमण्डलमित्यर्थः, स्विन्नं—स्वेदार्द्रं जातम्, अत्रापि पूर्व्ववत् रतिखेदादिति भावः ; एवं सर्व्वत्र ; ("खिन्नम्" इति पाठे—खेदं प्राप्तं, म्लानं जातमित्यर्थः) स्रग्भारनद्धं—स्रजां—मालानां, शिरःस्थानामिति भावः ; ("माल्यं मालास्रजौ मूर्द्ध्नि" इत्यमरः) भारेण—भरेण, मालासमूहेनेत्यर्थः, नद्धं—संयतं, बद्धमित्यर्थः, तमः,—अन्धकारम्, अन्धकारवत् कृष्णवर्णकेशपाश इत्यर्थः, विलुलितं—विस्रस्तं, शिथिलितमित्यर्थः, सुस्मितं—चेतोहरमीषद्धास्यं, प्रागेव—प्रथमत एव, सुरता-

राजा कालिदासं प्राह,—"सुकवे ! (ख) भवभूतिना सह साम्यं तव न वक्तव्यम्" । भवभूतिराह,—"देव ! (ग) किमिति वारयसि ?" । राजा,—(घ) सर्व्वप्रकारेण कविरसि" । ततो बाणः प्राह,—"राजन् ! भवभूतिः कविश्चेत् कालिदासः किं वक्तव्यः ?" । राजा,—"बाणकवे ! कालिदासः कविर्न, किन्तु (ङ) पार्व्वत्याः कश्चिदवनौ पुरुषावतार एव" । ततो भवभूति·

वसानात् पूर्व्वत एवेत्यर्थः, प्रथमानकेतकशिखालीलायितं—प्रथमाना—विस्तारमापद्यमाना, [ प्रथ + शानच् ] प्रस्फुटन्तीत्यर्थः, या केतकशिखा—केतकीपुष्पाग्रभागः, तस्याः लीलायितं—लीला—विलासः, तद्वदाचरितं, विकसितकेतकीशिखा अष्टपरागत्वात् किञ्चित् म्लाना तथा विनताग्रभागत्वात् किञ्चिदवसन्ना इव च दृश्यमाना भवति, स्मितमपि तथा म्लानं परिश्रान्तमिव च दृश्यमानमभूदिति भावः ; यद्वा—प्रथमाना—विस्तारमापद्यमाना, वर्द्धमाना इत्यर्थः, या केतकशिखा, तस्या लीलायितम् ; वर्द्धमाना केतकशिखा यथा क्रमशः सूक्ष्मात् सूक्ष्मतरा भवति, तथा स्मितमपि क्रमशः क्षीणतरं जातमिति भावः ; कुण्डलताण्डवं—कुण्डलयोः,—कर्णभूषणयोः, ताण्डवं—नर्त्तनं, द्रुतान्दोलनमिति यावत्, श्रान्तं—निवृत्तम् ; गात्रचालनादिक्रियावसानादिति भावः ; कुवलयद्वन्द्वम्—इन्दीवरयुगलं, नीलोत्पलवत् लोचनद्वयमित्यर्थः, ("श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरञ्च नीलाब्जम्" इति नाममाला ) तिरोमीलितं—तिरः,—तिर्य्यक्, वक्रभावेनेत्यर्थः, ईषदिति भावः ; मीलितं—मुद्रितम्, ईषान्नमीलितमित्यर्थः, विद्रुमसीत्कृतं—विद्रुमयोः,—प्रवालयोः, प्रवालवदारक्तयोरोष्ठाधरयोरित्यर्थः, सीत्कृतं,—भणितं, रतिकालिकाव्यक्तध्वनिविशेष इत्यर्थः, यातम्—अपगतं, निवृत्तमित्यर्थः, ततः,—तदनन्तरं, किम् आसीत्,—किमभवत्, इति—इत्येतत्, न हि—नैव, जाने—वेद्मि, अत्रापि पूर्व्ववत् भावोऽनुसन्धेयः । शार्द्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

( ख ) भवभूतिनेति ।—भवभूतितस्ते महोत्कर्षात् तस्य तव च महदन्तरमिति भावः ।

( ग ) किमिति—कथम् । वारयसि—निषेधयसि, न करोषीत्यर्थः, साम्यमिति शेषः, उभयोस्तुलना निषिद्धा, इति कथं वदसीति निष्कर्षः ।

( घ ) सर्व्वप्रकारेण—सर्व्वथा, कविरसि, न तु महाकविरिति भावः ।

( ङ ) पार्व्वत्याः,—महाशक्तिरूपायाः दुर्गाया अंशसम्भूतत्वात् सरस्वत्या

राह,—"देव! किमत्र (च) प्राशस्त्यं भाति?"। राजा प्राह,—"भवभूते! किमु वक्तव्यं प्राशस्त्यं कालिदासश्लोके? यतः कैतकशिखालोलायितं सुस्मितमिति पठितम्"। ततो भवभूतिराह,—"देव! पक्षपातेन वदसि" इति। ततः कालिदासः प्राह,—"देव! (छ) अपख्यातिर्मा भूत्, भुवनेश्वरीदेवताऽऽलयं गत्वा तत्सन्निधौ तां पुरस्कृत्य घटे शोधनीयं त्वया"। ततो भोजः सर्व्वकविवृन्दपरिवृतः सन् भुवनेश्वरीदेवाऽऽलयं प्राप्य तत्र तत्सन्निधौ भवभूतिहस्ते घटं दत्त्वा श्लोकद्वयञ्च तुल्यपत्रद्वये लिखित्वा तुलायां मुमोच। ततो भवभूतिभागे (ज) लघुत्वोद्भूताम् ईषदुन्नतिं ज्ञात्वा, देवी भक्तपराधीना, सदसि तत्परिभवा मा भूदिति स्वावतंसकह्लारमकरन्दं वामकरनखाग्रेण गृहीत्वा भवभूतिपत्रे चिक्षेप। ततः कालिदासः प्राह,—

"अहो! मे सौभाग्यं मम च भवभूतेश्च भणितम्
घटायामारोप्य प्रतिफलति तस्यां लघिमनि।

---

इत्यर्थः। पुरुषावतारः,—पौरुषमूर्त्तिविशेषः; सरस्वत्याः पुरुषावतार इत्युक्त्वा पार्व्वत्या इति कथनेन महाशक्तेरंशसम्भूतत्वात् कविषु कालिदासस्य महाशक्तिमत्त्वं व्यज्यते।

(च) प्राशस्त्यम्—उत्कर्षं, कालिदासस्येति शेषः।

(छ) अपख्यातिः,—अपकीर्त्तिः, तवेति शेषः। घटे—परीक्षार्थतुलायन्त्रे। ("परीक्षार्थतुलायाञ्च घटः सूरिभिरिष्यते" इति विश्वः। "घटी दिव्यतुलायां स्यात् घटी चोरे च शासके:" इति मेदिनी)। शोधनीयं—परीक्षणीयमित्यर्थः, अावयोः प्राशस्त्यमिति शेषः। यद्वा—शोधनीयं—क्षालनीयं, पक्षपातित्वरूपं ते अपयशः इति शेषः।

(ज) लघुत्वोद्भूतां—लाघवजन्याम्। तत्परिभवः,—तस्य—भवभूतेः, परिभवः,—पराजयः। स्वावतंसकह्लारमकरन्दं—स्वावतंसं—स्वकीयकर्णभूषणं, यत् कह्लारं—श्वेतोत्पलं, तस्य मकरन्दः,—पुष्परसः, मधु इत्यर्थः, तम्। भवभूतिपत्रे चिक्षेप, लघुत्वपूरणाय इति भावः।

देव्याश्चेष्टितं पश्यन् तत्प्रकाशनाय कालिदासः आह, अहो इति।—अहो!—आश्चर्यम्, अभूतपूर्व्वमित्यर्थः, मे—मम, सौभाग्यं—शुभादृष्टम्; किन्तत्?

गिरां देवी सद्यः श्रुतिकलितकह्लारकलिका-
मधूलीमाधुर्य्यं क्षिपति परिपूर्त्त्यै भगवती" ॥ ९ ॥

ततः कालिदासपादयोः पतति भवभूतिः, राजानञ्च विशेषज्ञं मनुते स्म। ततो राजा भवभूतिकवये शतं मत्त-गजान् ददौ।

[ इति भोज-भवभूतिसंवादः ]।

---

इत्यादि, ममेति।—मम च भवभूतेश्च भणितं—वाक्यं, पदाङ्कितं श्लोकरूपमित्यर्थः; घटायां—तुलायां, (प्रयोगदर्शनात् "घटा" शब्दोऽपि घटार्थकः इति समर्थनीयम्। "तुलायाम्" इति पाठकल्पना साध्वी ) आरोप्य—संस्थाप्य, तस्यां—भवभूति-पक्षीयायां घटायामित्यर्थः, लघिमनि—औन्नत्यरूपे लाघवे, प्रतिफलति—आभासमाने सति, न तु सुस्पष्टं प्रकाशमाने, तथात्वे भवभूतेः पराजयनिश्चयात इति भावः; भगवती—षडैश्वर्य्यशालिनी, गिरां देवी—वाग्देवी, स्वांशभूतायाः सरस्वत्याः प्रकृतिरूपा पार्व्वती देवीत्यर्थः, सद्यः,—तत्क्षणादेव, उन्नयनप्रारम्भे एवेत्यर्थः, परिपूर्त्त्यै—परिपूरणाय, भवभूतिपक्षीयघटायाः गौरवसम्पादनायेत्यर्थः, श्रुतिकलित-कह्लारकलिकामधूलीमाधुर्य्यं—श्रुतौ—कर्णे, कलिता—गृहीता, कर्णपूरीकृतेत्यर्थः, या कह्लारकलिका—श्वेतोत्पलकोरकः, तस्याः मधूलीमाधुर्य्यं—मधूली—[ मधु लाति—ददाति, मधु उलति—ददाति इति वा मधु+ला उल वा+क, पृषोदरादित्वात साधुः, ततः ङीष् ] आम्रफलं, तद्वत् माधुर्य्यं—मधुरत्वं, घनीभूतामसारवत् मकरन्दविन्दुमिति यावत, ("मधूली मधुकर्कट्याम् आम्रे क्षौतमके च" इति वाचस्पत्यमहाकोष: ) यद्वा—उलीमाधुर्य्यम—उर्री—रलयोरैक्यात उरी—अङ्गीकृतं, सर्वैः स्वीकृतमित्यर्थः, उरी—विस्तृतं, सर्व-विदितमित्यर्थो वा, ("उर्य्यूरी चाप्युभौ शब्दौ विस्तारेऽङ्गीकृतावपि" इति मेदिनी ) माधुर्य्यं—मधुरत्वं यस्य तादृशं, श्रुतिकलितकह्लारकलिकामधु, क्षिपति—पातयति, ददातीत्यर्थः, भवभूतिपक्षे इति शेषः; एतदेव मे महत् सौभाग्यं यत् देवी स्वयमेव मदुत्कर्षं जानती अपि भवभूतेः खेदाच्छन्दस्य पराजयभयात् स्वकरेण तल्लाघवापनोदनाय यतते इत्याश्चर्य्यं सर्वे पश्यन्तु पश्यन्तु इति भावः। शिखरिणी वृत्तम् ॥ ९ ॥

# भोज-स्वैरिणीसंवादः ।

अन्यदा राजा धारानगरे रात्रावेकाकी विचरन् काञ्चन (क) स्वैरिणीं सङ्केतं गच्छन्तीं दृष्ट्वा पप्रच्छ,—"देवि ! का त्वम् ? एकाकिनी मध्यरात्रे क्व गच्छसि ?" इति । ततश्चतुरा स्वैरिणी सा तं रात्रौ विचरन्तं श्रीभोजं निश्चित्य प्राह,—

"त्वत्तोऽपि विषमो राजन् ! विषमेषुः क्षमापते ! ।
शासनं यस्य रुद्राद्या दासवन्मूर्द्ध्नि कुर्व्वते" ॥ १ ॥

ततस्तुष्टो राजा (ख) दोर्दण्डादादाय अङ्गदं वलयञ्च तस्यै दत्तवान् । सा च यथास्थानं प्राप ।

[ इति भोज-स्वैरिणीसंवादः ] ।

(क) स्वैरिणीं—कुलटाम् । सङ्केतम्—अभिसारस्थानम् ।

जगद्वासिनां सर्वेषामेव कामाधीनत्ववर्णनामुखेन स्वस्या अपि तथात्वं प्रकटयितुं भङ्ग्या आह, त्वत्तोऽपीति ।—राजन् ! हे—नरेन्द्र ! क्षमापते !—हे पृथिवीनाथ !, ("क्षमा तितिक्षा पृथ्वी च" इति धरणिः) विषमेषुः,—अयुग्मशरः, पञ्चबाणः काम इत्यर्थः, त्वत्तोऽपि—अप्रतिहतप्रभावात् भवत्तोऽपि, विषमः,—दारुणः, अप्रतिहतशासन इत्यर्थः, यस्य—विषमेषोः, शासनम्—आज्ञां, रुद्राद्याः,—शङ्करादयो देवाः, दासवत्—भृत्यवत्, मूर्द्ध्नि—शिरसि, कुर्वते—दधते, स्मरहरादयोऽपि यस्य स्मरस्य आदेशं शिरोधार्य्यं कुर्वन्ति, तदादेशावहेलनाय मादृशां क्षुद्राणां का शक्तिः ? अतस्तदादेशप्रतिपालनाय यामीति निष्कर्षः ॥ १ ॥

(ख) दोर्दण्डात्—दोः,—बाहुः, ("भुजबाहू प्रवेष्टो दोः स्यात्" इत्यमरः) दण्डः,—यष्टिरिव, दीर्घत्वात् आपन्निवारकत्वाच्च इति भावः, तस्मात्, भुजदण्डात्, आजानुलम्बितभुजादित्यर्थः । अङ्गदम्—"अनन्त" वा "बाजु" इति नाम्ना प्रसिद्धं भुजाभरणविशेषम् ।

## भोज-वृद्धासंवादः ।

ततो वर्त्मनि गच्छन् क्वचित् गृहे एकाकिनीं रुदतीं नारीं दृष्ट्वा,—"किमर्थमर्द्धरात्रे रोदिति, किं दुःखमेतस्याः" इति (क) विचारयितुमेकमङ्गरक्षकं प्राहिणोत् । ततोऽङ्गरक्षकः पुनरागत्य प्राह,—"देव ! मया पृष्टा यदाह, तत् शृणु,—

वृद्धो मत्पतिरेष मञ्चकगतः स्थूणाऽवशेषं गृहं
कालोऽयं जलदाऽऽगमः कुशलिनो वत्सस्य वार्त्ताऽपि न।
यत्नात् सञ्चिततैलविन्दुघटिका भग्नेति पर्य्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति" ॥ १ ॥

ततः कृपावारिधिः क्षोणीपालः तस्यै लक्षं ददौ ।

[ इति भोज-वृद्धासंवादः ] ।

---

(क) विचारयितुं—निर्णेतुम् । प्राहिणोत्—प्रैरयत् । [ प्र + हि + लङ्-द ]

दीनाया वृद्धाया रोदनकारणं विवृणोति, वृद्ध इति ।—वृद्धः,—स्थविरः, एषः,—अयं, मत्पतिः,—मम भर्त्ता, ("वृद्धोऽन्धः पतिरेषः" इति पाठान्तरम्) मञ्चकगतः,—मञ्चः एव मञ्चकः,—पर्य्यङ्कः, ("मञ्चपर्य्यङ्कपल्यङ्काः खट्वया समाः" इत्यमरः) तद्गतः,—तत्प्राप्तः, पर्य्यङ्कशायीत्यर्थः, वार्द्धक्यादिना उत्थानशक्तिराहित्यात् खट्वाशायी एव वर्त्तते, न कुत्रापि गतायातं कर्त्तुं शक्नोतीति भावः ; गृहं—भवनं, स्थूणाऽवशेषं—स्थूणा—गृहधारणस्तम्भः, ("स्थूणा स्तम्भेऽपि वेश्मनः" इत्यमरः) सा अवशेषः,—परिशेषः यस्य तादृशं, जीर्णत्वात् गृहाच्छादनतृणादिकं विलुप्तमित्यर्थः, अयम्—एषः, कालः,—समयः, जलदागमः,—जलदस्य—मेघस्य, आगमः,—आगमनम्, उदय इत्यर्थः, यत्र तादृशः, वर्षाकालः इत्यर्थः, वर्षाकालेऽस्मिन् स्थूणामात्रावशेषे गृहे वासः अतीव क्लेशप्रदः इति भावः ; वत्सस्य—स्नेहास्पदस्य पुत्रस्य, ("वत्सः पुत्रादिवर्षयोः" इति मेदिनी) कुशलिनो—मङ्गलमयी, वार्त्ताऽपि —वृत्तान्तोऽपि, न—नास्ति, प्रवासगतस्य पुत्रस्य कुशलवार्त्ताऽपि मया न प्राप्ता इत्यर्थः, यत्नात्—आदरात्, बहुक्लेशेनेत्यर्थः, सञ्चिततैलविन्दुघटिका—सञ्चिताः,—सङ्गृहीताः,

## भोज-कोङ्कणीयविप्रसंवादः।

अन्यदा कोङ्कणदेशवासी विप्रः राज्ञे "स्वस्ति" इत्युक्त्वा प्राह,—

"शुक्तिद्वयपुटे भोज ! यशोऽब्धौ तव रोदसी।
मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम्" ॥ १ ॥

राजा तस्मै लक्षं ददौ।

[ इति भोज-कोङ्कणीयविप्रसंवादः ]।

किञ्चित् किञ्चित् सङ्कुच्य वर्द्धिता इत्यर्थः, तैलबिन्दवः,—तैलकणाः यत्र तादृशी, घटिका—क्षुद्रो घटः, [ अल्पार्थे कन्, टाप् "प्रत्ययस्थात् कात् पूर्व्वस्यात इदाप्यसुपः" ( ७।३।४४ पा० ) इति अकारस्येकारः ] बिन्दुशः सञ्चितस्य तैलस्य क्षुद्रो घट इत्यर्थः, भग्ना—खण्डिता, इति—एभ्यः हेतुभ्यः, पर्य्याकुला—अतीव कातरा, श्वश्रूः,—वध्वाः पत्युर्जननी, निजवधूं—स्वकीयपुत्रवधूं, गर्भभरालसां—गर्भभरेण—भ्रूणभारेण, कुक्षिस्थगर्भस्य प्रवृद्ध्या इत्यर्थः, अलसां—चेष्टाक्षमां, पूर्णगर्भतया मन्थरामित्यर्थः, आसन्नप्रसवामिति भावः ; दृष्ट्वा—विलोक्य, चिरं—दीर्घकालं व्याप्य, रोदिति—क्रन्दति, वर्षाकालेऽस्मिन् ईदृशे अनाच्छादिते जीर्णे गृहे वधूः प्रसूयेत चेत् वर्षावारितः कथमिमां कथं वा प्रसूतं रक्षामि, पुत्रो गृहे नास्ति, पतिरपि प्रव्याग तः, कस्याञ्चिदापदि उपस्थितायां कोऽस्मान् रक्षिष्यति, तैलबिन्दुरपि नास्ति कथं वा दीपं प्रज्वालयिष्यामि इत्यादि चिन्तया वध्वाः श्वश्रूः व्याकुला सती क्रन्दते इति समुदितार्थः। शार्द्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

---

भोजयशसः सर्व्वव्यापित्वमाह, शुक्तीति।—हे भोज ! तव यशोऽब्धौ—यशः,—कीर्त्तिः, अब्धिरिव—समुद्र इव तव, रोदसी—द्यावापृथिव्यौ एव, स्वर्गमर्त्यौ एव इत्यर्थः, ("भूद्यावौ रोदस्यौ रोदसी च ते" इत्यमरः) शुक्तिद्वयपुटे—मुक्तास्फोटरूपावरणपात्रद्वयमित्यर्थः, शीतांशुमण्डलं—चन्द्रबिम्बं, तदुद्भवं—शुक्तिद्वयजातं, मुक्ताफलं—मौक्तिकम्, इवेति शेषः, मन्ये—सम्भावयामि, नभसि यत्

# भोज-काश्मीरदेशीयविप्रसंवादः ।

अन्यदा काश्मीरदेशात् समागतः कोऽपि कौपीनावशेषो विप्रः राजनिकटस्थकवीन् कनकमाणिक्यपट्टदुकूलालङ्कृतान् अवलोक्य राजानं प्राह,—

"नो पाणी वरकङ्कणक्वणयुतौ नो कर्णयोः कुण्डले
क्षुभ्यत्क्षीरधिदुग्धमुग्धमहसी नो वाससी भूषणम् ।
दन्तस्तम्भविकाशिका न शिविका नाश्वोऽपि विश्वोन्नतो
राजन् ! राजसभासुभाषितकलाकौशल्यमेवास्ति नः" ॥१॥

ततस्तस्मै राजा लक्षं ददौ ।

[ इति भोज-काश्मीरदेशीयविप्रसंवादः ] ।

चन्द्रमण्डलं दृश्यते, तत् तव यशःसमुद्रान्तर्जातं मुक्ताफलमेव, नान्यत् किमपि इति भावः ; यशस्ते स्वर्गमर्त्यौ व्याप्य तिष्ठतीति फलितम् ॥ १ ॥

---

काश्मीरपण्डितः स्वीयदारिद्र्यं पाण्डित्यञ्च विवरीतुमाह, नो इति।—हे राजन् ! नः,—अस्माकं, पाणी—हस्तौ, वरकङ्कणक्वणयुतौ—वरयोः,—उत्कृष्टयोः, कङ्कणयोः,—वलययोः, क्वणेन—शिञ्जितेन, युतौ—युक्तौ, शब्दविशिष्टौ इत्यर्थः, कङ्कणभूषितौ, नो—न, भवतः इति शेषः, कर्णयोः,—श्रवणयोः, कुण्डले—कर्णवेष्टने, नो—न, स्तः इति शेषः, क्षुभ्यत्क्षीरधिदुग्धमुग्धमहसी—क्षुभ्यतः,—आलोड्यतः, क्षीरधेः,—दुग्धसागरस्य, दुग्धवत्—सफेनं पय इव, मुग्धं—मनोज्ञं, महः,—तेजः, प्रभा इत्यर्थः, ययोस्तादृशौ, दुग्धफेनधवलप्रभे, वाससी—वस्त्रयुगलम्, उत्तरीयाधोंऽशुकरूपे इत्यर्थः, भूषणम्—अलङ्कारभूते इत्यर्थः, नो—न, स्त इति शेषः, दन्तस्तम्भविकाशिका—दन्तस्तम्भाभ्यां—वाहकस्कन्धस्थापनयोग्याभ्यां गजदन्तनिर्म्मितस्तम्भाकारदण्डाभ्यां, विकाशते—शोभते इति तादृशी, गजदन्तरचितदण्डशोभिनी, शिविका—याप्ययानं, नरवाह्ययानविशेष इत्यर्थः, न—नास्ति, विश्वोन्नतः,—विश्वे—जगति, निखिलविश्वमध्ये इत्यर्थः, उन्नतः,—तुङ्गः, अश्वा—

## चन्द्रकलङ्कवर्णने भोज-कालिदाससंवादः ।

अन्यदा राजा रात्रौ चन्द्रमण्डलं दृष्ट्वा तदन्तस्थकलङ्कं वर्णयति स्म,—

"अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे" ।

इति राजा पूर्व्वार्द्धं लिखित्वा कालिदासहस्ते ददौ । ततः स तस्मिन्नेव क्षणे उत्तरार्द्धं लिखति कविः,—

"इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत् सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे"॥१॥

बिम्बं—सम्पूर्णः, उन्नतः, अत्युन्नत इत्यर्थः, ("बिम्बमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम् । समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥" इत्यमरः) अश्वोऽपि—घोटकोऽपि, न—नास्ति, परन्तु, राजसभासुभाषितकलाकौशल्यमेव—राजसभायां—नृपसदसि, सुभाषितकलायां—सद्वचनप्रयोगरूपकलाविद्यायां, मनोहरवचनप्रयोगे इत्यर्थः, कौशल्यमेव—नैपुण्यमेव, वाक्पटुत्वमेवेत्यर्थः, अस्ति—विद्यते, ऐश्वर्य्यसूचकं वस्त्रालङ्कारयानादिकं किमप्यस्माकं नास्ति, किन्तु पाण्डित्यप्रदर्शनेन भवतां चेतोरञ्जनी शक्तिरस्ति इति समुदितार्थः, नाहं भवत्पण्डित-सदृशो धनवान्, किन्तु पण्डित इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

चन्द्रमण्डलस्थकलङ्कविषयकं विरुद्धमतं समालोच्य तत्समस्यापूरणाय यतते, अङ्कमिति ।—केऽपि—केचित्, पण्डिता इति शेषः, अङ्कं—कलङ्कं, चन्द्रमण्डलस्थकृष्णवर्णचिह्नविशेषमिति शेषः, शशङ्किरे—मेनिरे, [ शङ्क + लिट्-इरे ] परे—अन्ये केचित्, जलनिधेः,—समुद्रस्य, पङ्कं—कर्द्दमं, मेनिरे—बुबुधिरे, चन्द्रस्य अब्धिजत्वात् समुद्रान्तरवस्थानकाले तदत्यपङ्कं चन्द्रमण्डले सङ्क्रान्तमभूत इति केऽपि तर्कयामासुः इति भावः; कतिचिच्च—केचित् पुनः विद्वांसः, सारङ्गं—मृगं, सञ्जगदिरे—बभाषिरे, चन्द्रस्य मृगाङ्कसंज्ञकत्वादिति भावः; [ सम् + गद + लिट्-

राजा प्रत्यक्षरलक्षमुत्तरार्द्धस्य दत्तवान्। ततः राजा कालिदासकवितापद्धतिं वीक्ष्य चमत्कृतः पुनराह,—"सखे! (क) अकलङ्कं चन्द्रमसं व्यावर्णय" इति। ततः कविः पठति,—

"लक्ष्मीक्रीड़ातड़ागो रतिधवलगृहं दर्पणो दिग्वधूनां
पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्याऽऽतपत्रम्।
पिण्डीभूतं हरस्य स्मितममरधुनीपुण्डरीकं मृगाङ्को
ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोलकस्य" ॥२॥

राजा पुनः प्रत्यक्षरलक्षं ददौ।

[ इति चन्द्रकलङ्कवर्णने भोज-कालिदाससंवादः ]।

---

इरे। अत्र आत्मनेपदप्रयोगश्चिन्त्यः। यद्वा—"राजानः संप्रहरन्ते" इतिवत् "कर्त्तरि कर्म्मव्यतिहारे" (१।३।१४ पा०) इति क्रियाविनिमये आत्मनेपदं कथञ्चित् समाधेयं, परस्परं बभाषिरे इत्यर्थः] परे—अपरे केचित्, भूच्छायं—भुवः,—पृथिव्याः, छायां—प्रतिबिम्बं, चन्द्रमण्डलस्य जलमयत्वेन प्रतिबिम्बग्रहणशक्तिमत्त्वात् तत्र प्रतिफलितां भूमण्डलस्य प्रतिच्छायामिति यावत्; ["विभाषा सेनासुराच्छायाशालानिशानाम्" (२।४।२५ पा०) इति क्लीवत्वं ह्रस्वत्वञ्च] ऐच्छन्—अमन्यन्त, [इष+लङ्+अन्] एवं विचारयता भोजेन उत्तरार्द्धस्य पूरणाय नियोजितः कविः आह, इन्दाविति।—इन्दौ—चन्द्रे, चन्द्रमण्डले इत्यर्थः, दलितेन्द्रनीलशकलश्यामं—दलितस्य—भग्नस्य, इन्द्रनीलस्य—इन्द्रनीलमणेः, शकलवत्—खण्डवत्, श्यामं—कृष्णं, कृष्णवर्णमित्यर्थः, यत्—वस्तु, दरीदृश्यते—पुनः पुनः अत्यर्थं वा अवलोकयति, [दृश+यङ्+कर्त्तरि लट्-ते] लोक इति शेषः, तत्—वस्तु, निशि—रात्रौ, पीतं—सेवितम्, अत एव कुक्षिस्थम्—उदरस्थितं, सान्द्रं—प्रगाढ़म्, अन्धतमसम्—अन्धकारम्, इति आचक्ष्महे—कथयामः, वयमिति शेषः, [आ+चक्ष+लट्-महे] चन्द्रोदये अन्धकाराभावात् तस्य चन्द्रेण कुक्षिस्थीकरणरूपोत्प्रेक्षा इति बोध्यम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ १ ॥

(क) अकलङ्कमिति।—सकलङ्कं चन्द्रं निष्कलङ्कं कृत्वा किञ्चित् विवृणु इत्यर्थः।

राज्ञाऽनुरुद्धः कविः चन्द्रमसं सर्व्वदोषविनिर्म्मुक्तं कृत्वा वर्णयति, लक्ष्मीति।—लक्ष्मीक्रीड़ातड़ागः,—लक्ष्म्याः,—श्रियाः, क्रीड़ातड़ागः,—केलिपद्माकरः, विहारार्थं सपद्मागाधजलाशयस्वरूप इत्यर्थः, लक्ष्म्याः पद्मालयायाः सौन्दर्य्यप्रियत्वादिति भावः; ("पद्माकरस्तडागोऽस्त्री" इत्यमरः) रतिधवलगृहं—रतेः,—कामपत्न्याः,

धवलगृहं—सुधाधागारस्वरूपः, हर्षोत्पादकत्वादिति भावः; दिग्वधूनां—दिशः,—ककुभः, वध्व इव तासां, दर्पणः,—मुकुरस्वरूपः, अतीव स्वच्छत्वात् बिम्बोद्ग्राहित्वाच्चेति भावः; श्यामालतायाः,—श्यामा—निशा, लता—वल्ली इव तस्याः, ("श्यामा स्यात् शर्वरी निशा" इत्यमरः) पुष्पं—कुसुमस्वरूपः, रात्रावेव तस्य विकाशादिति भावः; त्रिभुवनजयिनः,—त्रैलोक्यविजेतुः, मन्मथस्य—कामस्य, त्रिभुवनविजेतृत्वात् सम्राज इति ध्वनिः; आतपत्रं—सितच्छत्रस्वरूपः, आतपत्रवत् सन्तापहारकत्वात सितातपत्रस्य च सम्राड्लक्षणत्वादिति भावः; सितच्छत्रं यथा सम्राडागमनं सूचयति, तथा चन्द्रोदयोऽपि कामप्रसारं सूचयतीति तस्य मन्मथातपत्रत्वं बोध्यम्; हरस्य—महादेवस्य, कैलासवासिनः तुषारशुभ्रस्येति भावः; पिण्डीभूतं—राशीभूतम्, एकत्र सञ्चितमित्यर्थः, स्मितं—हास्यस्वरूपः, हास्यस्य शुभ्रत्वेन वर्णनायाः कविसमयसिद्धत्वात् सुशुभ्रस्य चन्द्रमण्डलस्य तथात्वेनोत्कीर्त्तनं बोध्यम्; ("यशसि धवलता वर्ण्यते हासकीर्त्योः" इति दर्पणकारः) अमरधुनीपुण्डरीकम्—अमरधुन्याः,—देवनद्या मन्दाकिन्याः, पुण्डरीकं—श्वेतपद्मस्वरूपः, मन्दाकिन्या वियति प्रवहमाणत्वात् चन्द्रस्य शुभ्रत्वाच्चेति भावः; ("पुण्डरीकं सिताम्भोजम्" इत्यमरः) ज्योत्स्नापीयूषवापी—ज्योत्स्ना—कौमुदी, पीयूषमिव—अमृतमिव, सद्यः सन्तर्पकत्वादिति भावः; ज्योत्स्नायाः पीयूषं—कौमुदीनिःसृतममृतमिति वा तस्य; यद्वा—ज्योत्स्नायाः पीयूषस्य च, वापी—दीर्घिकास्वरूपः, चन्द्रादेव तयोः क्षरमाणत्वादिति भावः तारकागोलकस्य—नक्षत्रमण्डलस्य, सितवृषः,—धवलपुङ्गवविशेषः, चन्द्रस्य तारापतित्वादिति भावः; ("वृषो धर्म्मे बलीवर्द्दे शृङ्ग्यां पुंराशिभेदयोः। श्रेष्ठे स्यादुत्तरस्थे च वासामूषिकशुक्रले" ॥ इति मेदिनी) यद्वा—ताकयति—आस्वादयति, सम्भुङ्क्ते इत्यर्थः, इति तकः,—सम्भोगकर्त्ता, तारकाः,—नक्षत्राणि, धेनव इव तासां तकस्य—सम्भोक्तुः, चन्द्रस्य तारापतित्वादिति भावः; सितवृषः,—शुभ्रवृषभस्वरूपः, तारामण्डलरूपधेनुयूथस्य एकमात्रवृषभस्वरूप इत्यर्थः, मृगाङ्कः,—मृगलाञ्छनः, जयति—सर्वोत्कर्षेण वर्त्तते; ईदृशः सर्वोज्ज्वलः कलङ्ककालिमविरहितः शीतांशुः सर्वमेव कृतयुक्तो भवतीत्यर्थः। स्रग्धरा वृत्तम् ॥ २ ॥

# भोज-वीणाकविसंवादः ।

एकदा कश्चित् दूरदेशादागतः (क) वीणाकविराह,—

"तर्कव्याकरणाध्वनीनधिषणो नाहं न साहित्यवित्
नो जानामि विचित्रवाक्यरचनाचातुर्य्यमत्यद्भुतम् ।
देवी काऽपि विरिञ्चिवल्लभसुतापाणिस्थवीणाकल-
क्वाणाभिन्नरवं तथाऽपि किमपि ब्रूते मुखस्था मम" ॥१॥

(क) वीणाकविः,—वीणायां—तदाख्यवाद्यविशेषे, कविः,—पण्डितः, वीणावादनशीलः पण्डितः, वीणावादननिपुण इत्यर्थः ।

कविरात्मनः सङ्गीतशास्त्राभिज्ञत्वं प्रकटयितुमाह, तर्केति ।—अहं तर्कव्याकरणाध्वनीनधिषणः,—तर्कस्य—मीमांसादिशास्त्रस्य, व्याकरणस्य—शब्दव्युत्पादकशास्त्रस्य च, यः अध्वनीनः,—पथिकः तस्य, तत्तच्छास्त्रपारायणस्येत्यर्थः, [अध्वानमलं गच्छतीत्यर्थे "अध्वनो यत्खौ" (५।२।१६ पा०) इति अध्वन् + खः, "आत्माध्वानौ खे" (६।४।१६९ पा०) इति टिलोपाभावः । "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि" इत्यमरः] धिषणा—बुद्धिरिव धिषणा यस्य तादृशः, तर्कादिशास्त्राध्यायिनामिव प्रज्ञासम्पन्न इत्यर्थः, ("बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः" इत्यमरः) न, अस्मीति शेषः, तथा साहित्यवित्—काव्यज्ञोऽपि, न, अस्मीति शेषः, अत्यद्भुतम्—अतिविस्मयजनकं, विचित्रवाक्यरचनाचातुर्य्यं—विचित्राणां—विस्मयकराणां, चित्ताकर्षकाणामित्यर्थः, वाक्यानां—पदावलीनां, रचनायां—ग्रन्थने, चातुर्य्यं—पाटवम् ; अत्र अत्यद्भुतम् इति पदं चातुर्य्यम् इत्यनेन, विचित्रपदञ्च वाक्येन सम्बध्यते, अतो न पुनरुक्तावसरः ; नो जानामि—नावगच्छामि, तथाऽपि—पण्डिताख्यालाभोचितविद्याऽभावेऽपि इत्यर्थः, काऽपि—अविज्ञातस्वरूपेत्यर्थः, देवी—देवता, मम—मे, मुखस्था—कण्ठस्थिता सतीत्यर्थः, विरिञ्चिवल्लभसुतापाणिस्थवीणाकलक्वाणाभिन्नरवं—विरिञ्चेः,—ब्रह्मणः, वल्लभसुतायाः,—प्रियदुहितायाः, वीणापाणेरिति यावत्, पाणिस्था—करकमलस्था, या वीणा—वल्लकी, तस्याः कलक्वाणेन—मधुरा-

राजा तस्मै लक्षं ददौ। बाणः तस्य सुललितप्रबन्धं श्रुत्वा प्राह,—"देव !—

मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमां
व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी।
कस्तूरीघनसारसौरभसुहृत् व्युत्पत्तिमाधुर्ययो-
र्योगः कर्णरसायनं सुकृतिनः कस्यापि सम्पद्यते" ॥ २ ॥

[ इति भोज-वीणाकविसंवादः ] ।

---

स्फुटध्वनिना, अभिन्नः,—एकीभूतः, रवः,—शब्दः यस्य तादृशं, वीणाध्वनिवत् सुमधुरं चेतोहरमित्यर्थः, किमपि—अश्रुतपूर्वं किञ्चित् वाक्यमित्यर्थः, ब्रूते—कथयति, अनधीतशास्त्रोऽप्यहं यत् किञ्चित् रचयामि, वाग्देवीप्रसादात् तदतीव श्रुतिरसायनं भवतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

बाणकविः वीणाकवेः रचनाया उत्कर्षं प्रतिपादयितुमाह, मातङ्गीमिति । —ध्वनिविदः.—ध्वनिः,—"वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्" इत्युक्त-लक्षणकाधिकचमत्कारिव्यङ्ग्यकाव्यविशेषः, तद्विदः,—तदभिज्ञाः, व्यङ्ग्याभिधेय-स्यार्थस्य चमत्कारातिशायित्वरूपध्वनेरुत्तमकाव्यत्वमङ्गीकुर्वाणा विद्वांसः इत्यर्थः, मातङ्गीमिव—चण्डालीमिव, ( "चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः" इत्यमरः ) उत्तमाम्—उत्कृष्टां, मनोहारिणीमित्यर्थः, माधुरीं—पदविन्यासमाधुर्यमित्यर्थः, नैव—न हि, स्पृशन्ति—परामृशन्ति, व्यङ्ग्यार्थस्यैव चमत्कारित्वं मन्यमानाः शब्दविन्यासस्य चमत्कारित्वं नैव गणयन्तीत्यर्थः, किञ्च, रसोन्मत्ताः,—रसेषु—रसात्मकवाक्येषु इत्यर्थः, शृङ्गाररसादिबोधकपदसमूहेषु इति यावत, उन्मत्ताः,—अनुरागिणः, रसव्यञ्जकशब्दस्तोमस्य चमत्कारित्वं मन्यमाना इति भावः ; अत्र "ये" इति पदमूहनीयम्, अमी—ये रसोन्मत्तास्ते इत्यर्थः, कुल-कन्यकामिव—अदर्शनीयां कुलस्त्रियमिव, व्युत्पत्तिं—व्युत्पत्तिलभ्यस्य व्यङ्ग्याभिधेय-स्यार्थस्य चमत्कारित्वरूपं सौष्ठवमित्यर्थः, न पश्यन्ति—नावलोकयन्ति, सज्जना यथा कुलकामिनीं न पश्यन्ति, तथा रसात्मकवाक्यस्य चमत्कारित्वं स्वीकुर्वाणाः अर्थ-गौरवस्य चमत्कारित्वं नेच्छन्तीत्यर्थः ; यद्वा—ध्वनिविदः,—स्वराभिज्ञाः, सङ्गीत-कलानुरागिणः इत्यर्थः, मातङ्गीमिव उत्तमां माधुरीं—यमकानुप्रासादिरूपशब्द-विन्यासमाधुर्यमित्यर्थः, नैव स्पृशन्ति, रसोन्मत्ताः,—सङ्गीतरसानुरागिणः, अमी

# भोज-सीतादेवी-कालिदाससंवादः ।

अन्यदा राजा सीतां प्रातः प्राह,—"देवि! प्रभातं व्यावर्णय" इति। सीता प्राह,—

"विरलविरलाः स्थूलास्ताराः कलाविव सज्जना
मन इव मुनेः सर्वत्रैव प्रसन्नमभून्नभः।
अपसरति च ध्वान्तं चित्तात् सतामिव दुर्ज्जनः
व्रजति च निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव" ॥१॥

—ध्वनिविदः, कुलकन्यकामिव व्युत्पत्तिम—अर्थज्ञानजन्यसंस्कारविशेषमपि, न पश्यन्ति, ते हि स्वरलयादिमौकर्य्यार्थं यथेच्छं शब्दं व्यवहरन्तीति भावः; किन्तु कस्तूरीघनसारसौरभसुहृत्—कस्तूरी—मृगमदः, घनसारः,—कर्पूरः, ("अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका" इत्यमरः) तयोः सौरभस्य—सद्गन्धस्य, सुहृत—मित्रं, तद्वन्मनोहर इति भावः; कर्णरसायनं—श्रुतिसुखप्रद इत्यर्थः, व्युत्पत्तिमाधुर्य्ययोः,—अर्थसौष्ठवशब्दसौष्ठवयोः, योगः,—सम्मेलनम्, एकत्र विन्यासमाधुर्य्यमित्यर्थः, कस्यापि—कस्यचित, न तु सर्वेषामिति भावः; सुकृतिनः,—धन्यस्य, भाग्यवतः पुंस इत्यर्थः, ("सुकृती पुण्यवान् धन्यः" इत्यमरः) सम्पद्यते—सम्भवति, कोऽपि भाग्यवान् निपुणः कविः प्राक्तनपुण्यप्रभावात् शब्दार्थयोरुभयोरेव सम्पद्युक्तरचनया सामाजिकान् रञ्जयितुं प्रभवतीत्यर्थः; अयं खलु तथाविधः प्रशस्यः कविरिति भावः। शार्दूलविक्रीडितं वृत्तम ॥ २ ॥

---

प्रभातवर्णनामाह, विरलेति।—कलौ—कलियुगे, सज्जना इव—साधव इव, स्थूलाः,—पीनाः, महत्य इत्यर्थः, ताराः,—नक्षत्राणि, विरलविरलाः,—अतीव तनवः, अत्यर्थं क्षीणा इत्यर्थः, अदृश्यप्राया इति यावत, सञ्जाता इति शेषः, कलौ सज्जना यथा अत्यल्पा दृश्यन्ते, तथा प्रभाते तारा अपीत्यर्थः, मुनेः,—"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥"

राजा लक्षं दत्त्वा कालिदासं प्राह,—"सखे! सुकवे! त्वमपि प्रभातं व्यावर्णय" इति। कालिदासः प्राह,—

"अभूत् पिङ्गा प्राची रसपतिरिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि।
क्षणात् क्षीणास्तारा नृपतय इवानुद्यमपराः
न दीपा राजन्ते विनयरहितानामिव गुणाः" ॥ २ ॥

राजा तस्मै प्रत्यक्षरलक्षं ददौ।

[ इति भोज-सीतादेवी-कालिदाससंवादः] ।

इत्युक्तलक्षणस्य निर्विकारचित्तस्य तपोधनस्य, मनः इव—चित्तमिव, नभः,—आकाशं, सर्व्वत्रैव—सर्व्वस्मिन् एव स्थाने, चतुर्ष्वेव दिक्षु इत्यर्थः, प्रसन्नं—निर्म्मलं, नैशान्धकारापगमात् सुप्रकाशमित्यर्थः, अभूत्—अजनि, मुनिमनो यथा सदैव प्रसन्नं भवति, तथा प्रभाते नभः अपीत्यर्थः, सतां—सुजनानां, चित्तात्—हृदयात्, दुर्ज्जन इव—खल इव, ध्वान्तम्—अन्धकारः, अपसरति च—अपगच्छति च, दूरीभवतीत्यर्थः, सुजनचित्ते यथा दुर्ज्जनस्य स्थानं न भवति, तथा प्रभाताकाशे ध्वान्तस्यापीति भावः; च—किञ्च, अनुद्यमिनाम्—अनुद्योगिनाम्, अध्यवसायविहीनानामित्यर्थः, लक्ष्मीरिव,—सम्पदिव, निशा—रात्रिः, क्षिप्रं—शीघ्रं, व्रजति—अवस्यति, अपगच्छतीत्यर्थः, अलसस्य ऐश्वर्य्यं यथा अचिरमेव विनश्यति, तथा रात्रिरपि क्षिणोतीत्यर्थः। हरिणी वृत्तम् ॥ १ ॥

कालिदासः प्रभातं वर्णयति, अभूदिति।—कनकं—सुवर्णं, प्राश्य—ग्रासीकृत्य, रसपतिरिव—रसेन्द्रः पारद इव, ("रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते" इति तारपालः) प्राची—पूर्वा दिक्, पिङ्गा—पिङ्गलवर्णा, अभूत्—अजनि, आयुर्वेदोक्तप्रक्रियाविशेषेण सुशुद्धः पारदः स्वर्णेन सह विमर्द्दितः पाचितश्च तं ग्रासीकृत्य यथा पिङ्गलवर्णो भवति, तथा बालारुणप्रभोद्भासिता पूर्वा दिगपि पिङ्गलवर्णा अभूदित्यर्थः, ग्राम्यसदसि—ग्राम्याणां—प्राकृतानां, नीचजनानामित्यर्थः, ("ग्राम्यं स्त्रीकरणे क्लीवेऽश्लीलप्राकृतयोस्त्रिषु" इति मेदिनी) सदसि—समाजे, बुधजन इव—पण्डितजन इव, चन्द्रः,—निशापतिः, गतच्छायः,—निष्प्रभः, अभूदिति पूर्वेणान्वयः, मूर्खमण्डलीमध्ये अवतिष्ठमानः एकको विद्वान् यथा स्फूर्त्तिं नाप्नोति, तथा उदयोन्मुखदिवाकरकरमण्डलीमध्ये निशाविरहात्

# भोज-मालाकारवधूसंवादः ।

अन्यदा द्वारपाल आगत्य प्राह,—"देव ! काऽपि मालाकारपत्नी द्वारि तिष्ठति" इति । राजा आह,—"प्रवेशय" इति । ततः प्रवेशिता सा च नमस्कृत्य पठति,—

"समुन्नतघनस्तनस्तवकचुम्बितुम्बीफल-
क्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा ।

निशापतिरपि मलिनकान्तिरभूदित्यर्थः, अनुद्यमपराः,—उद्योगविरहिताः, स्वर्णद्रव्यवर्द्धने उदासीना इत्यर्थः, नृपतयः इव—राजान इव, ताराः,—तारकाराजयः, क्षणात्—क्षणकालेनैव, क्षीणाः,—कृशाः, अदर्शनं गता इत्यर्थः, उद्योगपरिशून्यो महीपतिर्यथा झटिति क्षयं प्राप्नोति, तथा स्वाधिकारपरिरक्षणनिश्चेष्टाः तारका अपि क्षयमगच्छन्निति निष्कर्षः, विनयरहितानाम्—अविनीतानां, दर्पोद्धतानामिति यावत्, ("द्रविणरहितानामिव" इति पाठे—निर्धनानामिवेत्यर्थः) गुणाः इव—शौर्य्यादय इव, दीपाः,—आलोकवर्त्तयः, प्रदीपाः इत्यर्थः, न राजन्ते—न शोभन्ते, सन्तोऽपि शौर्य्यौदार्य्यादयो गुणाः गर्वाधिक्यात् अहङ्कृतस्य यथा न समादृता भवन्ति, तथा निशापगमात् दीपा अपि अप्रयोजनीयत्वात् अनादृता अभवन्नित्यर्थः । शिखरिणी वृत्तम् ॥ २ ॥

भोजस्य स्वर्लोकविसारियशस्त्वमाह, समुन्नतेति ।—समुन्नतघनस्तनस्तवकचुम्बितुम्बीफलक्वणन्मधुरवीणया—समुन्नतौ—उत्तुङ्गौ, घनौ—निविडौ, अतिपीवरतया परस्परसंश्लिष्टौ इत्यर्थः, स्तनस्तवकौ—कुचगुच्छौ, विकाशोन्मुखकलिकाकदम्बकाकारौ स्तनौ इत्यर्थः, चुम्बति—आश्लिष्यति, तत्संश्लिष्टत्वादिति भावः, तादृशेन तुम्बीफलेन—अलावूफलेन, वीणादण्डाधःस्थेनेत्यर्थः, उपलक्षिता [ शाकपार्थिवादिवत् समासः ] क्वणन्ती—ध्वनन्ती, मधुरा—शोभना, रम्यदर्शनेत्यर्थः, ("मधुरौ स्वादुशोभनौ" इति व्याडिः) यद्वा—मधुरा—मधुरस्वरा इत्यर्थः,

त्वदीयमुपगीयते हरकिरीटकोटिस्फुर-
तुषारकरकन्दलीकिरणपूरगौरं यशः" ॥ १ ॥

राजा,—"अहो! (क) महती पदपद्धतिः" इति तस्याः प्रत्यक्षरलक्षं ददौ।

[ इति भोज-मालाकारवधूसंवादः ]।

---

## भोज-उलूखलपरायणाकामिनीसंवादः।

अन्यदा रात्रौ राजा धारानगरे विचरन् कस्यचित् गृहे कामपि कामिनीम् (क) उलूखलपरायणां ददर्श। राजा तां तरुणीं पूर्णचन्द्राननां सुकुमाराङ्गीं विलोक्य तत्करस्थं मुसलं

वीणा यस्यास्तया, विबुधलोकलोलभ्रुवा—विबुधलोकस्य—सुरलोकस्य, लोलभ्रुवा—चञ्चलभ्रुवा, विलोलनेत्रया इत्यर्थः, अप्सरोभिरिति यावत्, [ जातावेकवचनम् ] हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं—हरस्य—पशुपतेः, किरीट-कोटौ—चूडाग्रभागे इत्यर्थः, स्फुरन्—दीप्यमानः, तुषारकरः,—हिमकिरणः, अर्द्धचन्द्र इत्यर्थः, कन्दली—पताका इव, तनुत्वात् शुभ्रत्वाच्चेति भावः; ("कन्दली पताकायाम्" इति वाचस्पत्यमहाकोषः) तस्य किरणपूरवत्—मयूखप्रवाहवत्, गौरं—शुभ्रं, त्वदीयं—भवदीयं, यशः,—कीर्त्तिः, उपगीयते—सङ्कीर्त्यते; विबुधलोकलोलभ्रुवा [ कर्त्र्या ] क्वणन्मधुरवीणया [ करणेन ] उपगीयते इति वा अन्वयः, अस्मिन् पक्षे—समुन्नतघनस्तनस्तबकचुम्बि तुम्बीफलं यस्यास्तादृशी या क्वणन्मधुरवीणा तया इत्यर्थः। पृथ्वी वृत्तम् ॥ १ ॥

(क) महती—उत्कृष्टा। पदपद्धतिः,—शब्दपङ्क्तिः, पदयोजना-नैपुण्यमित्यर्थः।

(क) उलूखलपरायणाम्—उलूखलासक्ताम्, एकाग्रतया उलूखलेन कार्यं साधयन्तीमित्यर्थः।

प्राह,—"हे मुसल ! (ख) एतस्याः करपल्लवस्पर्शेनापि त्वयि किसलयं नाऽऽसीत्, तर्हि सर्वथा काष्ठमेव त्वम्" इति। ततो राजा एकं चरणं पठति स्म,—

"मुसल ! किसलयं ते तत्क्षणात् यन्न जातम्।"

ततो राजा प्रातः सभायां समागतं कालिदासं वीक्ष्य,—

"मुसल ! किसलयं ते तत्क्षणात् यन्न जातम्।"

इति पठित्वा—"सुकवे! त्वं चरणत्रयं पठ" इत्युवाच। ततः कालिदासः प्राह,—

"जगति विदितमेतत् काष्ठमेवासि नूनं
तदपि च किल सत्यं कानने वर्द्धितोऽसि।
नवकुवलयनेत्रोपाणिसङ्गोत्सवेऽस्मिन्
मुसल ! किसलयं ते तत्क्षणात् यन्न जातम्" ॥ १ ॥

ततः राजा चरणत्रयस्य प्रत्यक्षरं लक्षं ददौ।

[ इति भोज-उलूखलपरायणाकामिनीसंवादः ]।

(ख) एतस्या इति।—तर्हि सर्वथा काष्ठमेव त्वं—त्वं सर्व्वप्रकारेणैव नीरसं काष्ठमसि, न हि स्वल्पमात्रोऽपि रसस्त्वयि वर्त्तते, तथात्वे अवश्यमेव एतस्याः करकिसलयसङ्गात् तवापि किसलयोद्गमो भवेत् इति भावः।

समस्यापूरणाय नियुक्तः कालिदासः आह, जगतीति।—मुसल !—हे अयोऽग्र !, अस्मिन्—अनुभूयमाने, नवकुवलयनेत्रोपाणिसङ्गोत्सवे—नवकुवलयवत् —प्रत्यग्रेन्दीवर इव, अत्र "नव" इति विशेषणं कुवलयस्य घनकृष्णताऽऽयतता-द्योतनार्थं बोध्यम्; नेत्रं—लोचनं यस्यास्तस्याः, पाणिसङ्गः,—करस्पर्श एव, उत्सवः,—आनन्दजनकव्यापारः तस्मिन् सत्यपि, तत्क्षणात्—पाणिसङ्गक्षणे एव, यत्—यस्मात, ते—तव, किसलयं—पल्लवं, सरसभाव इति भावः; न जातं —न उत्पन्नं, तस्मात् काष्ठमेव—दारुरेव, सम्यक्तया रसविहीन एव इति भावः; असि—भवसि, त्वमिति शेषः, एतत्—इदं, जगति—भुवने, विदितं—विख्यातं, सत् नूनं—सत्यमेव, तथा कानने—अरण्ये, वर्द्धितः,—उपचितः, असि—भवसि, त्वमिति शेषः; आरण्यकस्त्वं ग्राम्यरसेष्वनभिज्ञः इति भावः, एतत् यत् जगति

## भोज-देवजय-हरिशर्म्मसंवादः ।

अन्यदा राजा दीर्घकालं जलकेलिं विधाय परिश्रान्त-स्तत्तीरस्थवटविटपिच्छायायां निषण्णः । तत्र हरिशर्म्मनामा कश्चित् कविरागत्य प्राह,—

"क्षुण्णं सैन्यरजोभरेण भवतः श्रीभोजदेव ! क्षमा-
रक्षादक्षिण ! दक्षिणक्षितिपतिः प्रेक्ष्यान्तरीक्षं क्षणात् ।
निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृत्
निस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ १ ॥

विदितं तदपि च—तव कानने हरिद्रागणिकपीत्वीर्णनं, किल—निश्चयं, सत्यं—तथ्यमेव; एतादृशसरसकरस्पर्शेन सर्वेषामेव ग्राम्याणां रसोदयः सम्भवति, तव तु वन्यत्वादेव नीरसत्वादेव च तदभावः, अतो धिक् ते जन्मपरिग्रह-करणम् इति भावः । मालिनी वृत्तम् ॥ १ ॥

---

भोजप्रतापं वर्णयति द्वाभ्यां, क्षुण्णमिति ।—हे क्षमारक्षादक्षिण !—क्षमायाः,—पृथिव्याः, रक्षायां—पालने, दक्षिण !—उदार !, अकपट इत्यर्थः, प्रजा-हितेच्छयैव अकपटभावेन पृथ्वीपालनतत्पर इत्यर्थः ; यद्वा,—क्षमायां—क्षमागुणे, रक्षायां—पालनकार्य्ये च, दक्षिण !—उदार ! महनीय इत्यर्थः, हे श्रीभोजदेव !, दक्षिणक्षितिपतिः,—दक्षिणदेशस्थमहीपतिः, दक्षिणाधिपतिर्यमश्च, भवतः,—तव, सैन्यरजोभरेण—सैन्यानां—वाहिनीनां, रजोभरेण—धूलीप्रवाहेण, गच्छतां सैन्यानां पादताडनोद्भूतपांशुनिचयेनेत्यर्थः, अन्तरीक्षं—नभोमण्डलं, क्षणात्—मुहूर्त्तादेव, क्षुण्णम—आहतं, प्रेक्ष्य—अवलोक्य, तव सैन्यप्रयाणं दृष्ट्वेत्यर्थः, निःशङ्कः,—निः,—निश्चयेन निःशेषेण वा, शङ्का—भयं यस्य तादृशः, तव सैन्यागमनदर्शनेन अतीव भीतः, ("निर्निश्चयक्रान्ताद्यर्थे निर्विशेषनिषेधयोः" इति विश्वः) निरपत्रपः,—निः,—निश्चयेन निःशेषेण वा, अपत्रपा—अन्यान्तरात्

किञ्च,—"अकाण्डधृतमानसव्यवसितोत्सवैः सारसै-
रकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः।
दिशः समवलोकिताः सरसनिर्भरप्रोल्लसद्-
भवत्पृथुवरूथिनीरजनिभूरजःश्यामलाः" ॥ २ ॥

लज्जा यस्य तथाभूतः, पलायनपरत्वात् जनसमीपे मुखं दर्शयितुमतीव लज्जित इत्यर्थः, ("लज्जा साऽपत्रपाऽन्यतः" इत्यमरः) निरनुगः,—निः,—नास्ति, अनुगः,—अनुचरः यस्य तादृशः, अनुचरविहीनः, निरन्वयः,—स्वजनविरहितः, निःसुहृत्—मित्रविवर्जितः, निःस्त्रीकः,—त्यक्तभार्यः, निरपत्यकः,—पुत्रपरिशून्यः, निरनुजः,—कनिष्ठभ्रातृविहीनः, तथा निर्हाटकः,—स्वर्णविहीनः, परित्यक्तसर्वधनः इत्यर्थः, हेतहाटकाख्यस्वदेश इत्यर्थश्च, सन् निर्गतः,—निष्क्रान्तः, पलायित इत्यर्थः; भोजात् पराजयमाशङ्क्य अतिभीतः सलज्जश्च अनुचरादिकं परित्यज्यैव हाटकात् पलायित इत्यर्थः; यद्वा—निःशङ्कः,—निर्भयः, निरपत्रपः,—विगतलज्जः, भोजस्य अमारत्वादक्षिणगुणेन आश्वस्तः सन् तदाश्रयग्रहणार्थं भय-लज्जे विहाय अनुचरादिसहायवृन्दं परित्यज्य भूषणादिकम् उन्मुच्य विनीतवेशेन एकक एव हाटकात् निष्क्रान्त इत्यर्थः; हाटकेश्वराख्यशिवलिङ्गदर्शनार्थं गोदावरीतीरस्थहाटकनगरं गतो हि भोजः दक्षिणापथप्रसिद्धं हाटकाधीशं पराजितवान् इति ऐतिहासिकाः। यमपक्षे तु—निःशङ्कः,—निःसंशयः, भोजविजये निःसंशयः यमराजः भोजनिहतान् अरिपक्षीयान् स्वनगरमानेतुम् अनुचरादीन् विहायैव ससम्भ्रमं निर्गत इत्यर्थः; दाक्षिणात्यविजयी वीरप्रवरो भवानिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

अकाण्डेति।—सरसनिर्भरप्रोल्लसद्भवत्पृथुवरूथिनीरजनिभूरजःश्यामलाः,—रस-निर्भरेण—रागातिशयेन, रणानुरागभरेणेत्यर्थः, सह वर्त्तमानाः सरसनिर्भराः,—युद्धोत्साहपूर्णाः, अत एव प्रोल्लसन्त्यः,—शोभमानाः, उत्साहाधिक्यात् प्रदीप्तश्रियः इति यावत्, भवतः,—तव, पृथवः,—महत्यः, वरूथिन्यः,—सेनाः, एव रजन्यः,—नीलिन्यः, नीलीवृक्षा इत्यर्थः, ("रजनी नीलिनीरात्रिहरिद्राजतुकासु च" इति मेदिनी। ङीबभावे "रजनिः" इत्यपि भवति) तद्भुः,—तज्जानि, रजांसि—धूलयः, एवंस—सैन्यपादोत्थाः धूलयः, अन्यत्र—नीलीचूर्णानि, तैः श्यामलाः,—कृष्णवर्णाः, मेघावरणादिवेति भावः, दिशः,—ककुभः, अकाण्डधृतमानसव्यव-सितोत्सवैः,—अकाण्डे—अनवसरे, असमये इत्यर्थः, वर्षेतरकालेऽपीति यावत्,

ततो राजा लक्षद्वयं ददौ। तदानीमेव (क) तस्य शाखायामेकं काकं रटन्तं प्रेक्ष्य कोकिलञ्चान्यशाखायां कूजन्तं वीक्ष्य देवजयनामा कविराह,—

"नो चारू चरणौ न चापि चतुरा चञ्चूर्न वाच्यं वचो
नो लीलाचतुरा गतिर्न च शुचिः पक्षग्रहोऽयं तव।
क्रूरक्रेङ्कृतिनिर्भरां गिरमिह स्थाने वृथैवोद्गिरन्
मूर्खध्वाङ्क्ष! न लज्जसेऽप्यसदृशं पाण्डित्यमुद्घाटयन्?" ॥३॥

---

धृतः,—गृहीतः, मानसव्यवसितात्—मानससरोवरगमनकालोऽयं समागत इति निश्चयात्, उत्सवः,—आनन्दजनकव्यापारः येषां तादृशैः, सारसैः,—पक्षिविशेषैः, (अत्र ख्यातिविरुद्धतादोष उन्नेयः, वर्षासु हंसानामेव मानसगमनस्य कविसमयख्यातत्वात्) तथा अकाण्डपटुताण्डवैः,—अकाण्डे—अनवसरे, वर्षेतरकाले इत्यर्थः, पटु—अमन्दं, प्रबलमित्यर्थः, ("दक्षामन्दागदेषु तु पटुः" इत्यमरः) ताण्डवं—नृत्यं येषां तादृशैः, शिखण्डिनां—मयूराणां, मण्डलैरपि—समूहैरपि; मेघोदये मयूराणां नृत्यकरणं प्रसिद्धम्; समवलोकिताः,—अत्यादरेण वीक्षिताः, जलदोदयभ्रान्त्या इति भावः। पृथ्वी वृत्तम् ॥ २ ॥

(क) तस्य—वटवृक्षस्य। रटन्तं—शब्दायमानम्। [रट+शतृ +२या १व०]।

काकनिन्दामिषेण हरिशर्म्माणं तिरस्करोति, नो इति।—मूर्खध्वाङ्क्ष!—भो मूढकाक!, मूढभिक्षुक! इति च, ("ध्वाङ्क्षो मत्स्यात्खगे काके तक्षके भिक्षुकेऽपि च" इति मेदिनी) तव—ते, चरणौ—पादौ, श्लोकपादौ च, पादबद्ध-श्लोकौ इति यावत्; नो—न, चारू—मनोज्ञौ, नापि—न पुनः, चञ्चुः—त्रोटिः, चञ्चुवत् मुखमिति च, चतुरा—दक्षा, कार्य्यसाधनोपयोगिनीत्यर्थः, अन्यत्र—नेत्रगोचरा, सर्वदा विविक्तावस्थानादिति भावः; ("चतुरो नेत्रगोचरे" इति मेदिनी) वचः,—वचनं, स्वर इति यावत्, अन्यत्र—वाग्विन्यासकौशलमित्यर्थः, न वाच्यम्—अवाच्यम्, अनक्षरमित्यर्थः, निन्दनीयमिति यावत्, ("अनक्षरमवाच्यं स्यात्" इत्यमरः) श्रुतिकठोरत्वादिति भावः; गतिः,—गमनं, ज्ञानञ्च, ("गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी) नो लीलाचतुरा—न विलासदक्षा, न मनोहारिणीत्यर्थः, अन्यत्र—न कुशला इत्यर्थः, अयम्—एषः,

ततः (ख) एनां देवजयकविना काकमिषेण विरचितां स्वगर्हणां मन्यमानस्तत्सदालुः हरिशर्मा कोपेनेर्ष्यापूर्वं प्राह,—

"तुल्यवर्णच्छदः कृष्णः कोकिलैः सह सङ्गतः ।
केन वाऽऽख्यायते काकः स्वयं यदि न भाषते ?" ॥ ४ ॥

---

पक्षग्रहः,—पक्षस्य—पतत्रस्य, ग्रहः,—ग्रहणं, धारणमित्यर्थः, यद्वा—पक्षग्रहः,—सहायस्वीकरणं, यमदूतत्वेन यमपक्षत्वमित्येवं ख्यातिरिति भावः ; अन्यत्र—पक्षग्रहः—यां कवितां सहायीकृत्य राजद्वारि प्रतिष्ठालाभार्थं समागतोऽसि, तत्कविताश्रयणमपीत्यर्थः, यद्वा—पक्षस्य—साध्यस्य, ग्रहः, या कविता स्वरचिता इति साधयितुं समागतः, साध्यायाः तस्याः कवितायाः आश्रयग्रहणमित्यर्थः, यद्वा—पक्षग्रहः,—विरोधग्रहणं, मया सह विरोधकरणमित्यर्थः, ("पक्षस्तु मासार्द्धे गृहसाध्ययोः । चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात् परश्चये । पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे ॥" इति हैमः ) न च—नैव, शुचिः,—शुक्लः, काकपक्षस्य कृष्णत्वादिति भावः ; अन्यत्र—शुद्धः, अन्यकवीनां भावापहरणात् अविशुद्धः इत्यर्थः, ("शुचिः—।—धवले शुद्धेऽनुपहते त्रिषु ॥" इति मेदिनी ) अत एव इह अस्मिन्, स्थाने, क्रूरक्रेङ्कृतिनिर्भरां—क्रूरा—कठोरा, या क्रेङ्कृतिः,—"क्रें क्रें" इत्याकारकध्वनिविशेषः, तया निर्भरां—तीव्राम्, अन्यत्र—क्रूरक्रेङ्कृतिवत्—कठोरवायसरववत्, निर्भरां—तीव्रां, गिरं—वाचं, वृथैव—निरर्थकमेव, उद्गिरन्—उच्चारयन्, असदृशम्—अयोग्यम्, एकत्र—ध्यानकाले ऽनुपयोगित्वात्, अन्यत्र—अन्यकवेर्भावापहरणादिति भावः ; पाण्डित्यं—ध्वनिवैशारद्यं, विद्वत्तां च, उद्घाटयन्—प्रकाशयन्, न लज्जसे अपि ?—न जिह्रेषि किम ? ईदृशकवितां पठित्वा तव लज्जा न भवति किम् ? उचिता तेऽत्र लज्जा अन्यकवेर्भावग्रहणस्य वान्ताशनमिव न्यक्कारजनकत्वात् इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

(ख) एनां—कविताम् । काकमिषेण—काकच्छलेन, काकनिन्दाच्छलेनेत्यर्थः । स्वगर्हणां—निजकुत्साम् । ("कुत्सा निन्दा च गर्हणे" इत्यमरः ) ।

देवजयवाक्येन कुपितो हरिशर्मा काककोकिलयोरन्तरप्रदर्शनमिषेण स्वस्य देवजयस्य चान्तरं प्रदर्शयति, तुल्येति ।—तुल्यवर्णच्छदः,—वर्णः,—शुक्लकृष्णादिः, छदः,—पक्षः तौ ; तुल्यौ—अभिन्नौ, कोकिलेन सह समानौ इत्यर्थः, वर्णच्छदौ—कृष्णता-पक्षौ यस्य तादृशः, ("तुल्यवर्णच्छदैः" इति पाठे—कोकिलैरित्यस्य

ततो राजा तयोः हरिशर्म्मदेवजययोः अन्योऽन्यवैरं ज्ञात्वा, मिथ आलिङ्गनादिवस्त्रालङ्कारादिदानेन च मित्रत्वं व्यधात्।

[ इति भोज-देवजय-हरिशर्म्मसंवादः ]।

---

## भोज-तपस्विसंवादः।

अन्यदा राजा यानमारुह्य गच्छन् वर्त्मनि कञ्चित्तपोनिधिं दृष्ट्वा तं प्राह,—"भवादृशानां दर्शनं भाग्यायत्तम्। भवतां क्व (क) स्थितिः? भोजनार्थं के वा प्रार्थ्यन्ते?" इति। ततः स राजवचनमाकर्ण्य तपोनिधिः आह,—

विशेषणम्; कृष्णः,—कृष्णवर्णः, काकः,—वायसः, कोकिलैः,—कृष्णवर्णैरुक्तैः परभृतैः, सह—सार्द्धं, सङ्गतः,—मिलितः, एकस्मिन्नेव स्थाने अवस्थितः सन् इत्यर्थः, स्वयम्—आत्मना, यदि—चेत्, न भाषते—न वक्ति, न विरौतीत्यर्थः, तदा केन वा, जनेनेति शेषः, आख्यायते?—कथ्यते? ज्ञायते इति यावत्, अयं काकः न परपुष्टः कोकिलः इति इति शेषः। ("व्याख्यायते" इति पाठे केन उपायेन काकोऽयमिति परिचीयते, जनैरिति शेषः) पितृभ्यां प्रतिपालितस्य सुविदितपरिचयस्य मे कर्कशभाषणमपि शोभते, न तु परगृहपालितस्य परान्नपुष्टस्य अविज्ञातपितृ-परिचयस्य ते मधुरमपि भाषणमिति भावः॥ ४॥

---

(क) स्थितिः,—अवस्थानं, भवन्तः कुत्र तिष्ठन्तीत्यर्थः। के वा प्रार्थ्यन्ते—के वा जना याच्यन्ते? भवद्भिरिति शेषः, कस्य समीपे भवन्तः भोजनं प्रार्थयन्ते इत्यर्थः।

"फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥ १ ॥

राजन्! वयं कमपि (ख) नाभ्यर्थयामः, न गृह्णीमश्च" इति । राजा तुष्टो नमति ।

[ इति भोज-तपस्विसंवादः ] ।

---

## भोज-काशीवासिविप्रसंवादः ।

ततः उत्तरदेशादागत्य कश्चिद्राजानं "स्वस्ति" इत्याह ।

भोगानुयुक्तस्तपोधनः स्वकीयनिस्पृहत्वमयाचकत्वञ्च प्रकटयति, फलमिति ।—प्रतिवनं—वने वने, [ वीप्सायामव्ययीभावः ] क्षितिरुहां—वृक्षाणां, स्वेच्छालभ्यम्—अयत्नप्राप्यं, स्वाभिलाषानुसारेण स्वप्रयोजनानुसारेण च प्रभूतं स्तोकं वा ग्राह्यमित्यर्थः, अन्यैरप्रतिषिद्धत्वात् इति भावः ; अखेदं—नास्ति खेदः,—अवसादः, वैरस्यात् रसनापीडा इत्यर्थः, यत्र तादृशं, सुस्वादु इत्यर्थः, फलं—शस्यं, भक्ष्यार्थमिति शेषः, स्थाने स्थाने—प्रतिस्थानं, प्रतिदेशे इत्यर्थः, पुण्यसरितां—पवित्रनदीनां, शिशिरमधुरं—हिमस्वादु, पयः,—जलं, पानार्थमिति शेषः, सुललितलतापल्लवमयी—मनोज्ञव्रततिकिशलयात्मिका, नेत्रसुखद-लतापल्लवरचितेत्यर्थः, मृदुस्पर्शा—कोमलस्पर्शा, शय्या—शयनं, शयनार्थमिति शेषः, विद्यते इति सर्व्वत्रैव शेषो बोध्यः, तदपि—तथाऽपि, * अयत्नलभ्येषु एतेषु सत्स्वपीत्यर्थः, कृपणाः,—क्षुद्राः, स्वावस्थया असन्तुष्टा लोभा इत्यर्थः, धनिनाम्—आढ्यानां, द्वारि—द्वारे, सन्तापं—दुःखम्, अवमानजं क्लेशमित्यर्थः, सहन्ते—क्षमन्ते, प्रार्थनावैफल्यजनितं दुःखमनुभवन्तीत्यर्थः । शिखरिणी वृत्तम् ॥ १ ॥

( ख ) नाभ्यर्थयामः,—न याचामहे, [ अभि + अर्थ + णिच् + लट्-मस् ] । गृह्णीमः, दानमिति शेषः । [ ग्रह + लट्-मस् ] ।

ततश्च राजा पृच्छति,—"विद्वन्! कुत्र ते स्थितिः?" इति। विद्वानाह,—

"यत्राम्बु निन्दत्यमृतमन्त्यजाश्च सुरेश्वरान्।
चिन्तामणिञ्च पाषाणास्तत्र नो वसतिः प्रभो!" ॥ १ ॥

तदा राजा लक्षं दत्त्वा प्राह,—"काशीदेशे का विशेषवार्त्ता?" इति। स आह,—"देव! इदानीं काचिदद्भुतवार्त्ता मत्र लोकमुखेन श्रुता, देवा (क) दुःखेन दीनाः" इति। राजा,—"देवानां कुतो दुःखं विद्वन्!?"। स चाह,—

"निवासः क्वाद्य नो दत्तो भोजेन कनकाचलः।
इति व्यग्रधियो देवा भोज! वार्त्तेति नूतना" ॥ २ ॥

माहात्म्यवर्णनप्रसङ्गेन स्वदेशस्य परिचयमाह, यत्रेति।—प्रभो!—हे राजन्!, यत्र—यस्मिन् देशे, अम्बु—जलम्, अमृतं—पीयूषं, निन्दति—गर्हते, यत्रत्यं जलं सुधापेक्षयाऽपि स्वादु इत्यर्थः, अन्त्यजाश्च—चाण्डालादयो जघन्या जातयश्च, सुरेश्वरान्—देवश्रेष्ठान्, ब्रह्मादीन् देवप्रधानानित्यर्थः, वचनविपरिणामेन निन्दन्तीति पूर्वेणान्वयः, यस्मिन् पुण्यदेशे समुद्भूता हीनजातयोऽपि ब्रह्मादिभ्योऽपि श्रेष्ठत्वेन गणनीयाः इत्यर्थः, देहान्ते शिवसायुज्यलाभादिति भावः; पाषाणाः,—प्रस्तराः, अकिञ्चित्कराः शिलाखण्डा अपीत्यर्थः, चिन्तामणिम्—अभीष्टप्रदमणिविशेषं, निन्दन्तीति पूर्ववदन्वयः; विश्वनाथसद्मपूजालाभेन चिन्तामणितोऽपि समादरणीयत्वादिति भावः; तत्र—तस्मिन् देशे, रम्यवाराणसीपुरे इत्यर्थः, नः,—अस्माकं, वसतिः,—वासः, अस्ति इति शेषः; वाराणसीवास्तव्योऽहमिति निष्कर्षः ॥ १ ॥

(क) दुःखेन दीनाः,—दुःखपीड़िताः।

देवानां दुःखकारणवर्णनमिषेण भोजस्य दानशौण्डत्वं प्रकटयति, निवास इति।—नः,—अस्माकं, निवासः,—वसतिः, वासस्थानमित्यर्थः, कनकाचलः,—काञ्चनपर्व्वतः, देवभूमित्वात् स्वर्णमयत्वाच्च सुमेरुरिति यावत्, प्रतिविशेषं धान्याचलादिषु दशसु दानीयपर्व्वतेषु मध्ये दानीयः स्वर्णपर्व्वतश्च, ("मेरुः सुमेरुर्हेमाद्रिः रत्नसानुः सुरालयः" इत्यमरः) भोजेन—धाराधिपेन, अद्य—अस्मिन् दिवसे, क्व—कुत्र, कियद्देशवासिने कस्मैचित् जनायेति भावः; दत्तः,—समर्पितः, इति—एतच्चिन्तया, देवाः,—सुरगणाः, व्यग्रधियः,—आकुलमतयः, चिन्ताकुल-

ततो राजा (ख) कुतूहलोक्त्या तुष्टः सन् तस्मै पुनः लक्षं ददौ।

[ इति भोज-काशीवासिविप्रसंवादः ]।

---

## भोज-ब्रह्मचारिसंवादः।

ततो द्वारपालः प्राह,—"देव ! श्रीशैलादागतः कश्चिद्विद्वान् ब्रह्मचर्य्यनिष्ठः द्वारि वर्त्तते" इति। राजा,—"प्रवेशय" इत्याह। तत आगत्य ब्रह्मचारी,—"चिरं जीव" इति वदति। राजा तं पृच्छति,—"ब्रह्मन् ! बाल्ये एव (क) कलिकालाननुरूपं किं नाम व्रतं ते ? अन्वहमुपवासेन कृशोऽसि। कस्यचित् ब्राह्मणस्य कन्यां तुभ्यं (ख) दापयिष्यामि, त्वञ्चेद्गृहस्थधर्ममङ्गी-

मानमा इत्यर्थः, वर्त्तन्ते इति शेषः, आसमुद्रक्षितीशः अत्युदारः भोजः स्वाधिकृतमस्माकं निवासं कनकाचलं व्रतविशेषाश्रयणेन कस्मैचिदज्ञातनाम्ने दत्त्वा अस्मान् गृहहीनान् अकरोत् अत इति शङ्कया उद्विग्नमानसा इति समुदितार्थः; हे भोज ! इति—एषा, नूतना—अभिनवा, विचित्रा इति यावत्, वार्त्ता—वृत्तान्तः, श्रुता इति शेषः, भूरिदो भवान् महापराक्रमश्च इति भावः ॥ २ ॥

( ख ) कुतूहलोक्त्या—कौतुकोद्दीपकभाषणेन इत्यर्थः।

---

( क ) कलिकालाननुरूपं—कलियुगायोग्यं, कलिकाले बाल्यावस्थायां ब्रह्मचर्य्यग्रहणस्य प्रायशः अदृष्टत्वादिति भावः। अन्वहम्—अहनि अहनि, प्रतिदिनमित्यर्थः, [ वीप्सायामव्ययीभावः ]। "अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः। अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥" इति ब्रह्मचारिणः कृशताविधानस्य निषेधात् अभियोगोऽयं बोध्यः।

(ख) दापयिष्यामि—ग्राहयिष्यामीत्यर्थः। [ दा + णिच् + लृट्-स्यामि ]।

करिष्यसि" इति। ब्रह्मचारी प्राह,—"देव! त्वम् (ग) ईश्वरस्त्वया किमसाध्यम्?—

सारङ्गाः सुहृदो गृहं गिरिगुहा शान्तिः प्रिया गेहिनी
वृत्तिर्वन्यलताफलैर्निवसनं श्रेष्ठं तरूणां त्वचः।
तद्ध्यानामृतपूरमग्नमनसां येषामियं निर्वृति-
स्तेषामिन्दुकलाऽवतंसयमिनां मोक्षेऽपि नो नः स्पृहा"॥ १॥

(ग) ईश्वरः,—अधिपतिः, राजा इति यावत्, ("स्वामी त्वीश्वरः पतिरीशिता। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः" इत्यमरः)। असाध्यं—साधयितुमशक्यम्।

ब्रह्मचारी गृहस्थधर्माङ्गीकारे स्वस्य निःस्पृहतां प्रकटयति, सारङ्गा इति।—सारङ्गाः,—मृगाः, सुहृदः,—मित्राणि, गिरिगुहा—पर्वतगह्वरं, गृहं—भवनं, निवासस्थानमिति यावत्, शान्तिः,—शमः, सन्तोषविशेष इति यावत्, प्रिया—प्रीतिजननी, गेहिनी—भार्य्या, भार्य्यातुल्या इत्यर्थः, वन्यलताफलैः,—वन्यलतानाम्—आरण्यवल्लीनां, यद्वा—वन्यलतानाम्—आरण्यशाखानाम्, अरण्यजवृक्षाणामित्यर्थः, ("वल्ली तु व्रततिर्लता।" "समे शाखालते" इत्युभयत्रापि अमरः) फलैः,—शस्यैः, वृत्तिः,—वर्त्तनं, जीविकासम्पादनमित्यर्थः, तरूणां—वृक्षाणां, त्वचः,—वल्कलानि, श्रेष्ठम्—उत्कृष्टं, निवसनं—वस्त्रं, ["वेदाः प्रमाणम्" इतिवत् उद्देश्यविधेयभावेनान्वयः] तद्ध्यानामृतपूरमग्नमनसां—तस्य—परमात्मनः, ध्यानमेव—चिन्तनमेव, यद्वा—तस्मिन्—परमात्मनि, ध्यानमेव—"ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः। ध्यानशब्देन विख्याता परमानन्ददायिनी॥" इत्युक्तलक्षणं परमानन्दप्रदं निरालम्बतया अवस्थानमेव, अमृतपूरः,—पीयूषप्रवाहः, तत्र मग्नं—प्रगाढ़तया अन्तःप्रविष्टं, मनः,—चित्तं येषां तादृशानां, परब्रह्मणि लीनचेतसां, येषां—साधकानामित्यर्थः, इयम्—उक्तरूपा, सारङ्गसुहृदादिरूपा इत्यर्थः, निर्वृतिः,—सुखं, तृष्णाऽभावजनितसन्तोषविशेष इति यावत्, वर्त्तते इति शेषः, इन्दुकलाऽवतंसयमिनाम—इन्दुकला—चन्द्रकला, अवतंसः,—भूषणं यस्य तस्मिन्, चन्द्रभूषणे शिवे, यमः,—संयमः एषा मस्तीति तेषां, ध्यानधारणासमाधिमतामित्यर्थः, तेषां—ब्रह्मध्यानपरायणानां, नः,—अस्माकं, मोक्षेऽपि—आत्यन्तिकदुःखनिवृत्तिलक्षणे अपवर्गेऽपि, किं पुनर्वनितासुपभोगरूपविषयभोगे इत्यपिशब्दार्थः, न स्पृहा—नाभिलाषः, भवतीति शेषः, भगवत्पादपद्मसेवनचिन्तनादिकमेवास्माकं स्पृहणीयं न तत्सायुज्यं नैव वा विषयभोगादिकमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्॥ १॥

राजा उत्थाय पादयोः पतति आह च,—"ब्रह्मन्! मया किं कर्त्तव्यम्?" इति। स आह,—"देव! वयं काशीं (घ) जिगमिषवः, तत एकं विधेहि, ये त्वत्सदने पण्डितवराः, तान् सर्वानपि सपत्नीकान् काशीं प्रति प्रेषय; ततोऽहं गोष्ठीतृप्तः काशीं गमिष्यामि" इति। राजा तथा चक्रे। ततः सर्वे पण्डितवरास्तदाज्ञया प्रस्थिताः। कालिदास एको न गच्छति स्म। तदा राजा कालिदासं प्राह,—"सुकवे! त्वं कुतो न गतोऽसि?" इति। ततः कालिदासो राजानं प्राह,—"देव! सर्वज्ञोऽसि,—

ते यान्ति तीर्थेषु बुधा ये शम्भोर्दूरवर्त्तिनः।
यस्य गौरीश्वरश्चित्ते तीर्थं भोज! परं हि सः" ॥ २ ॥

[ इति भोज-ब्रह्मचारीसंवादः ]।

(घ) जिगमिषवः,—यियासवः, गन्तुमिच्छवः इत्यर्थः। [गम + सन् + १मा बहुव० ] एकं—एकं कर्म्म इत्यर्थः। त्वत्सदने—तव गृहे। गोष्ठीतृप्तः,—गोष्ठ्या—संलापेन, पथि परस्परं विविधालपनेन इत्यर्थः, ("गोष्ठी सभासंलापयोः स्त्रियाम्" इति मेदिनी)। तृप्तः,—प्रीतः; पर्य्यटनक्लेशविस्मरणादिति भावः।

कालिदासः स्वस्य अगमने कारणमाह, ते इति।—भोज!—भो धारेन्द्र!, ये बुधाः,—पण्डिताः, पण्डितमानिनः इत्यर्थः, आत्मज्ञानाभावादिति भावः; शम्भोः,—महादेवात्, दूरवर्त्तिनः,—विप्रकृष्टदेशस्थाः, हृत्कमलस्थे परमात्मनि चित्त-संयोगाभावत्वादिति जीवशिवयोर्भेदज्ञानादिति वा भावः; ते—बुधाः, तीर्थेषु—वाराणस्यादिपवित्रक्षेत्रेषु, यान्ति—गच्छन्ति, पापक्षयादिकामनयेति भावः; परन्तु गौरीश्वरः,—गौर्य्या सहित ईश्वरः, उमामहेश्वरः इत्यर्थः, यस्य—जनस्य, चित्ते—हृदि, नित्यं विराजते इति शेषः, सः हि—स एव जनः, परं—श्रेष्ठं, तीर्थं—पवित्रं वाराणस्यादितुल्यं क्षेत्रम्; विश्वेश्वराधिष्ठानत्वादिति भावः। ("सः" इत्यत्र "तत्" इति पाठे—तत्—चित्तमित्यर्थः) ॥ २ ॥

## भोज-कालिदासयोः वियोगसंवादः ।

ततो विद्वत्सु काशीं गतेषु राजा कदाचित् सभायां कालिदासं पृच्छति स्म,—"कालिदास! अद्य किमपि श्रुतं किं त्वया?" इति। स आह,—

"मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि।
सह्याद्रावपि तेषु तेषु बहुशो भोज! श्रुतं ते मया
लोकालोकविचारचारणगणैरुद्गीयमानं यशः" ॥ १ ॥

ततश्चमत्कृतो राजा प्रत्यक्षरलक्षं ददौ। ततः कदाचित्

भोजकीर्त्तेः सर्व्वव्यापित्वमाह, मेरौ इति।—हे भोज! मेरौ—सुमेरुपर्व्वते, मन्दरकन्दरासु—मन्दरस्य—समुद्रमन्थने मन्थनदण्डभूतस्य पर्व्वतस्य, कन्दरासु—गुहासु, हिमवत्सानौ—हिमवतः,—हिमालयस्य, सानौ—प्रस्थे, समतलभूभागे इत्यर्थः, महेन्द्राचले—महेन्द्राख्यकुलपर्व्वते, कैलासस्य—कैलासपर्व्वतस्य, शिलातलेषु—पाषाणोपरिषु, मलयप्राग्भारभागेष्वपि—मलयस्य—मलयपर्व्वतस्य, प्राग्भारभागेषु—उत्कृष्टस्थानेषु अपि, मलयाचलसन्निहितश्रेष्ठप्रदेशेषु इत्यर्थः, यद्वा—प्राग्भारभागेषु—परभागेषु, मलयपर्वतस्य पश्चाद्भागेषु इत्यर्थः; यद्वा—अग्रभागेषु, शिखरदेशेषु इत्यर्थः, ("प्राग्भारः उत्कर्षे परभागे पर्वताग्रभागे च" इति वाचस्पत्य-महाकोषः) तथा सह्याद्रावपि—सह्याख्यपर्वतेऽपि, तथा तेषु तेषु—एतदतिरिक्तेषु यत्र यत्र स्थानेषु वयं गताः, तत्र तत्र सर्वत्रैव स्थानेष्वित्यर्थः; लोकालोकविचारचारणगणैः,—लोकालोके—स्वनामख्याते सूर्य्यकिरणसम्पर्कसीमापर्वते, वि—विशेषेण, चारः,—गमनं येषां तादृशाः, ये चारणगणाः,—कुशीलवसमूहाः, स्तुतिपाठकविशेषा इत्यर्थः, तैः, लोकालोकविचरणशीलनटविशेषैः, उद्गीयमानम्—उच्चैः कीर्त्यमानं, ते—तव, यशः,—कीर्त्तिः, मया बहुशः,—बहुवारान्, श्रुतम्—आकर्णितम्; अहो! विश्वव्यापि ते यश इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

राजा विद्वद्वृन्दं निर्गतं कालिदासञ्च अनवरतवेश्यालम्पटं ज्ञात्वा व्यचिन्तयत्,—"अहह ! बाणमयूरप्रभृतयो मदीयामाज्ञां (क) व्यदधुः, अयञ्च वेश्यालम्पटतया ममाज्ञां नाद्रियते, किं कुर्म्मः ?" इति। ततो राजा सावज्ञं कालिदासमपश्यत्।

तत आत्मनि राज्ञोऽवज्ञां ज्ञात्वा कालिदासः (ख) वल्लालदेशं गत्वा तद्देशाधिनाथं प्राप्य प्राह,—"देव ! मालवेन्द्रस्य भोजस्यावज्ञया त्वद्देशं प्राप्तोऽहं कालिदासनाम कविः" इति। ततो राजा तमासने उपवेश्य प्राह,—"सुकवे ! भोजसभाया इहागतैः पण्डितैः वर्णितः शतशस्ते महिमा, सुकवे ! त्वां सरस्वतीं वदन्ति। ततः किमपि पठ" इति। ततः कालिदास आह,—

"वल्लालक्षोणिपाल ! त्वदहितनगरं सञ्चरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्काऽऽकुलाङ्गी।

(क) व्यदधुः,—अकुर्वन्, अपालयन्नित्यर्थः, [ वि + धा + लङ्-अन् "सिजभ्यस्तविदिभ्यश्च" ( ३।४।१०९ पा० ) इति जुस् ]।

(ख) वल्लालदेशं—वल्लालाख्यन्टपतेः देशम्। ( "वल्लालदेशम्" इत्यत्र "बल्लालदेशम्" इति पाठः क्वचित् दृश्यते )। नायं गौड़ेश्वरः सेनवंशीयो वल्लालो मन्तव्यः, दाक्षिणात्यवासत्वात्, दाक्षिणात्याधीश्वरत्वन्तु अस्य "जित्वा श्रीखण्डखण्डम्" इत्यादिना अग्रे स्फुटीभविष्यति। वल्लालाख्यः देशः तमित्यर्थो वा ; यतः प्रबन्धेऽस्मिन् "तद्देशाधिनाथम्" "वल्लालराजा" इत्यादिकमेव अस्य संज्ञापरिचयमुल्लिखितवान् न तु स्पष्टतया कुत्रापि नाम इति। मन्ये, अयं खलु दाक्षिणात्यस्य एकशिलानगराधीशस्य एड़गङ्गनाम्नः नृपतेः पुत्रः कश्चित् इति।

वल्लालदेशाधिपतेः प्रतापं वर्णयति, वल्लालेति।—वल्लालक्षोणीपाल !—भो वल्लालभूपाल ! त्वदहितनगरे—तव शत्रुपुर्य्यां, सञ्चरन्ती—परिभ्रमन्ती, किराती—व्याधरमणी, जनशून्यतया अरण्यभूतत्वात् मृगान्वेषणायेति काष्ठाहरणायेति वा भावः, कीर्णानि—इतस्ततो विक्षिप्तानि, पलायनव्यग्रतया त्रुटितमाल्यात् पतितानीति

क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासाऽऽमोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्त्ति" ॥ २ ॥

ततस्तस्मै प्रत्यक्षरलक्षं ददौ। ततः कदाचित् (ग) वल्लाल-राजा कालिदासं पप्रच्छ,—"सुकवे ! एकशिलानगरीं व्यावर्णय" इति। ततः कविराह,—

"अपाङ्गपातैरपदेशपूर्वैरेणीदृशामेकशिलानगर्य्याम्।
वीथीषु वीथीषु विनाऽपराधं पदे पदे शृङ्खलिता युवानः" ॥३॥

---

भावः ; रत्नानि—मणीन्, उद्धतरखदिराङ्गारशङ्काऽऽकुलाङ्गी—उद्धतराः,—प्रवृद्धाः, ये खदिराङ्गाराः,—खदिरकाष्ठकृतानि उल्मुकानि, तेषां शङ्कया—संशयेन, भयेन वा, आकुलाङ्गी—व्याकुलशरीरा, इतस्ततो विकीर्णरत्नराजीम् अनलखण्डसमूहं मत्वा भयकम्पिताङ्गी सतीत्यर्थः, आदाय—गृहीत्वा, भीतभीता सती कथञ्चित् आहृत्येत्यर्थः, तदुपरि—तेषां—रत्नानाम्, उपरि—ऊर्ध्वदेशे, श्रीखण्डखण्डं—शुभ्रश्वेतचन्दनकाष्ठसमूहं, क्षिप्त्वा—संस्थाप्य, मुकुलीभूतनेत्रा—मुकुलीभूते—फुत्कारदानकाले मुद्रिते इत्यर्थः, नेत्रे—लोचने यस्यास्तादृशी, निमीलितनयना इत्यर्थः, धमन्ती—फुत्कारेण अग्निं प्रज्वालयन्ती सती, [ध्मा + शतृ + "पाघ्राध्मास्था—" (७।३।७८ पा०) इति धमादेशः ततः ङीप्] श्वासाऽऽमोदानुयातैः,—श्वासाऽऽमोदं—फुत्कारदानकाले निःसृतस्य निश्वासवायोः चन्दनकाष्ठसम्पर्कजनितं सौरभम्, अनुयातैः,—अनुगतैः, अनुसृत्य समागतैरित्यर्थः, मधुकरनिकरैः,—भ्रमरसमूहैः, निश्वाससौरभमनुसृत्य समागतैः श्रेणीबद्धैः भृङ्गैर्हेतुभिरिति यावत्, धूमशङ्कां—धूमसंशयं, बिभर्त्ति—धारयति, उत्पादयतीत्यर्थः ; महाप्रभावो भवान् भुजबलेन अरीन् उच्छिद्य तेषां नगरीं जनशून्यां कृतवान्, अतो निःशत्रुर्भवान् सर्वोत्कर्षेण वर्त्तते इति भावः। स्रग्धरा वृत्तम् ॥ २ ॥

(ग) वल्लालराजा—वल्लालाख्यदेशस्य राजा वल्लालाख्यो राजा इति वा। पप्रच्छ—उवाचेत्यर्थः। [प्रच्छ + लिट्-णल्]। एकशिलानगरीम्—एकशिलाभिधानां मदीयां राजधानीम्।

एकशिलाया उत्कर्षं वर्णयति, अपाङ्गेति।—एकशिलानगर्य्याम्—एक-शिलाख्यायां भवदीयराजधान्यां, वीथीषु वीथीषु—वर्त्मसु वर्त्मसु, प्रतिमार्गे इत्यर्थः, ("वीथी वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके" इति हेमः) एणीदृशाम्—एण्याः,

पुनश्च प्रत्यक्षरलक्षं ददौ। पुनश्च पठति कविः,—

"अम्भोजपत्राऽऽयतलोचनानामम्भोधिदीर्घास्विह दीर्घिकासु।
समागतानां कुटिलैरपाङ्गैरनङ्गबाणैः प्रहता युवानः" ॥ ४ ॥

पुनश्च वल्लालनृपः प्रत्यक्षरलक्षं ददौ। एवं तत्रैव स्थितः कालिदासः।

[ इति भोज-कालिदासयोः वियोगसंवादः ]।

---

—मृग्याः, हरिणीव दृक्—नेत्रं यासां तासां मृगीदृशां, मृगनेत्राणामङ्गनानामित्यर्थः, ("मोचर्यंप्लवतेष्वर्ष्यरोहिताश्चमरो मृगाः" इत्यमरः) अपदेशपूर्वैः,—छलपूर्वकैः, किमपि छलमुद्भाव्येत्यर्थः, अपाङ्गपातैः,—कटाक्षविक्षेपैः, साभिप्रायकटाक्षविलोकनैरित्यर्थः, युवानः,—तरुणाः, ("वयःस्थस्तरुणो युवा" इत्यमरः) विनाऽपराधं—दोषं विनाऽपि, [ "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्" (२।३।३२ पा०) इति विनायोगे अपराधम् इत्यत्र द्वितीयाविभक्तिर्बोध्या ] पदे पदे—प्रतिपदं, प्रतिपदक्षेपे इत्यर्थः, शृङ्खलिताः,—शृङ्खला एषां सञ्जाताः, निगडिताः, निगडाबद्धाः इव भवन्ति इत्यर्थः, मृगदृशां सुन्दरीणां कटाक्षबाणैर्विमुग्धा युवानः शृङ्खलितचरणा इव तत्र तत्रैव निश्चलास्तस्थुः, न ताः परित्यज्य स्थानान्तरगमनाय प्राभवन्निति भावः; अप्सरोवत् सुन्दरीभिः कामिनीभिः राजधानी ते नियतं सुरपुरादपि शोभमाना इति तात्पर्य्यम्। इन्द्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ ३ ॥

प्रकारान्तरेण पुनश्च एकश्लोकं वर्णयति, अम्भोजेति।—इह—अस्यामेकशिलायाम्, अम्भोधिदीर्घासु—समुद्रवत् विस्तृतासु, दीर्घिकासु—वापीषु, समागतानां—स्नानादिनिमित्तं समुपस्थितानाम्, अम्भोजपत्रायतलोचनानाम्—अम्भोजपत्रवत्—पद्मपत्राणि इव, आयते—विस्तृते, लोचने—नेत्रे यासां तादृशीनां, नारीणामिति शेषः, अनङ्गबाणैः,—कामशरैः, अनङ्गबाणवत् चित्तोन्मादकैरित्यर्थः, कुटिलैः,—वक्रैः, अपाङ्गैः,—नेत्रान्तैः, कुटिलकटाक्षैरित्यर्थः, न तु शस्त्रैरिति भावः; एतेन नागरिकाणां महाशूरत्वं सूच्यते; युवानः,—तरुणाः, प्रहताः,—ताडिताः, भवन्तीति शेषः; अत्रापि पूर्ववद्भावो बोध्यः। इन्द्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ ४ ॥

# भोज-माघपत्नीसंवादः।

अत्रान्तरे धारानगर्य्यां भोजं प्राप्य द्वारपालः प्राह,—"देव! गुर्जरदेशात् माघनामा पण्डितवर आगत्य नगराद्बहिरास्ते। तेन च स्वपत्नी राजद्वारि प्रेषिता"। राजा,—"तां प्रवेशय" इत्याह। ततो माघपत्नी प्रवेशिता। सा राजहस्ते पत्रं प्रायच्छत्। राजा तदादाय वाचयति,—

"कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिनिहतानां हा! विचित्रो विपाकः" ॥१॥ इति।

---

माघपण्डितः प्रभातवर्णनाच्छलेन स्वावस्थां वर्णयति, कुमुदेति।—कुमुदवनं—कैरवकाननं, श्वेतोत्पलसमूह इत्यर्थः, अपश्रि—अपगता श्रीः,—शोभा यस्य तादृशं, रात्रिविकाशित्वात् प्रभातागमनेन मुद्रिततया विगतशोभमित्यर्थः, अम्भोजषण्ड—कमलकदम्बं, पद्मसमूहः इत्यर्थः, ("स्त्रियां तु पुंसि षण्डोऽस्त्री पद्मादिकदम्बे षण्डमस्त्रियाम्" इत्यमरः। "षण्डः समूहे" इति सारस्वतश्च) श्रीमत्—शोभायुक्तं, दिनविकाशित्वात् प्रभातागमनेन उन्मुद्रतया सम्फुल्लमित्यर्थः, उलूकः,—पेचकः, मुदं—हर्षं, त्यजति—जहाति, रात्रिचरस्य तस्य रात्र्यपगमात् विषादो बोध्यः; चक्रवाकः,—रथाङ्गनामा पक्षिविशेषः, प्रीतिमान्—हृष्टः, रात्रिवियोगिनस्तस्य प्रभातागमनेन प्रियासमागमात् प्रीतिरिति भावः; अहिमरश्मिः,—उष्णकिरणः सूर्य्यः, उदयं—प्रकाशं, याति—गच्छति, उदेतीत्यर्थः, शीतांशुः,—हिमकरः चन्द्रः, अस्तम्—अस्ताचलम्, अदर्शनं वा, याति इत्यनेनान्वयः, हा—खेदे, ("हो" इति पाठान्तरेऽपि स एवार्थः) हतविधिनिहतानां—हतविधिना—पापविधात्रा, निहतानां—विनष्टानां, निःपीड़िताणामित्यर्थः, ("हतविधिलसितानाम्" इति पाठे—हतविधेः,—क्रूरविधातुः, लसितानां—विलासानां, विधातृविचेष्टितानामित्यर्थः, विपाकः,—परिणामः, विचित्रः,—विस्मयकरः, एकस्मिन्नेव समये एकस्य अभ्युदयः, अपरस्य विनिपातः;

राजा तदद्भुतं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा माघपत्नीमाह,—"मातः! इदं भोजनाय दीयते; प्रातरहं माघपण्डितम् आगत्य नमस्कृत्य पूर्णमनोरथं करिष्यामि" इति। ततः सा तदादाय गच्छन्ती याचकानां मुखात् (क) स्वभर्त्तुः शारदचन्द्रकिरणगौरान् गुणान् श्रुत्वा, तेभ्य एव धनमखिलं भोजदत्तं दत्तवती। ततो माघपण्डितं स्वभर्त्तारम् (ख) आसाद्य प्राह,—"नाथ! राज्ञा भोजेनाहं बहुमानिता; धनं सर्वं याचकेभ्यस्त्वद्गुणानाकर्ण्य दत्तवती"। माघः प्राह,—"देवि! (ग) साधु कृतं, परमेते याचकाः समायान्ति किल, तेभ्यः किं देयम्?" इति। ततो माघपण्डितं (घ) वस्त्रावशेषं ज्ञात्वा कोऽप्यर्थी प्राह,—

"आश्वास्य पर्वतकुलं तपनोष्णतप्त-
मुद्दामदावविधुराणि च काननानि।

इत्येव विधातुरपूर्वो विचारः इति भावः; त्वयि शासति वयं दारिद्र्येणावसन्नाः, अपरं च बाणमयूरादयः सौभाग्यस्य परां काष्ठामधिरूढाः इत्यहो! न विचित्रो विचारः इति हृदयम्। मालिनी वृत्तम् ॥ १ ॥

(क) स्वभर्त्तुः,—माघपण्डितस्य। शारदचन्द्रकिरणगौरान्—शारदचन्द्रस्य—शरत्कालोदितशशधरस्य, किरणवत्—मयूखवत्, गौरान्—शुभ्रान्, अतिविशदान् सर्वसन्तापहरान् मनोहरांश्चेत्यर्थः, माघस्य दरिद्रबन्धुत्वात् बहुप्रदत्वाच्चेति भावः। तेभ्यः,—गुणगायकेभ्यः याचकेभ्यः।

(ख) आसाद्य—प्राप्य, आगत्येत्यर्थः। [ आ+षद्+णिच्+ल्यप् ]।

(ग) साधु—सम्यक्, उत्तममित्यर्थः। परं—किन्तु। किल—इति सम्भावनायाम्।

(घ) वस्त्रावशेषं—वस्त्रं—परिधेयवसनमात्रमित्यर्थः, अवशेषः,—परिशेषः यस्य तादृशं, निःशेषितसर्वधनमित्यर्थः। अर्थी—याचकः।

मेघवर्णनापदेशेन माघस्य दातृत्वं प्रस्तौति, आश्वास्येति।—जलद!—हे मेघ!, तपनोष्णतप्तं—तपनस्य—सूर्य्यस्य, उष्णेन—उष्णतया इत्यर्थः, सन्तापेनेति यावत्, तप्तं—सन्तप्तं, ("तपनोष्णतप्तम्" "तपनोष्मतप्तम्" वा इति पाठकल्पना साध्वी)

नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद! सैव तवोत्तमश्रीः" ॥ २ ॥

इत्येतदाकर्ण्य माघः स्वपत्नीमाह,—

"अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागे रतिं वहति दुर्ललितं मनो मे।

---

पर्वतकुलं—तुङ्गशैलसमूहं, तथा उद्दामदावविधुराणि—उद्दामेन—उत्कटेन, दावेन—वनानलेन, ("दवदावौ वनारण्यवह्नी" इत्यमरः) विधुराणि—पीडितानि, दावानलविदग्धानीत्यर्थः, काननानि च—विपिनानि च, आश्वास्य—सान्त्वयित्वा, जलवर्षणेन दाहजसन्तापं निर्वाप्य इत्यर्थः, नानानदीनदशतानि च—विविधनदीनदसमूहांश्च, जलशून्यानीति भावः, पूरयित्वा—जलेनापूर्य्य, यत् रिक्तः,—शून्यः, जलहीनः इत्यर्थः, असि—भवसि, सैव—रिक्तता एव, [विधेयप्राधान्यात् स्त्रीत्वम्] तव—ते, उत्तमश्रीः,—प्रकृष्टशोभा, भवतीति शेषः; प्रावृषि जलपूर्णो मेघः ग्रीष्मसन्तप्तं पर्वतादिकं जलवर्षणेन विगतसन्तापं कृत्वा शरदि उत्तमां श्रियं बिभर्त्ति इति बोद्धव्यम्; एवं तोयदवत् धनद! माघ! त्वं दारिद्र्यानलसन्तप्तमभिजातवर्गं तथा तादृशम् अकुलीनवर्गञ्च धनदानेन विगतखेदं कृत्वा, अन्यांश्च समागतान् बहून् याचकान् निजधनेन सम्पन्नान् कृत्वा स्वयं यन्निर्धनोऽसि, तत्ते गौरवायैव इति गूढाशयः। वसन्ततिलकं वृत्तम् ॥ २ ॥

अर्थिमनोरथपूरणाक्षमत्वेन माघस्य खेदमाह द्वाभ्याम्, अर्था इति।—अर्थाः,—धनानि, दानोपयोगीनि इति भावः; न सन्ति—न विद्यन्ते; ननु अर्थो नास्ति चेत् दित्सामपि जहि, स्वयमर्थिनो दित्सा न शोभते इत्यत आह, नेति।—दुराशा च—दानार्थं स्वावस्थाऽनुपयोगिनी विसदृशी तृष्णा तु, मां न मुञ्चति—न त्यजति; कथं न मुञ्चतीत्यत आह, त्यागे इति।—दुर्ललितं—दुः,—दुष्टं, ललितम्—ईप्सितं यस्य तादृशं, दुराकाङ्क्षमित्यर्थः, ("ललितं त्रिषु। ललिते चेप्सितेऽपि स्यात् हावभेदे तु न द्वयोः॥" इति मेदिनी) मे—मम, मनः,—चित्तं, त्यागे—दाने, ("त्यागो दाने च वर्जने" इति मेदिनी) रतिम्—अनुरागं, वहति—बिभर्त्ति, तथापि अर्थाभावे दुराकाङ्क्षस्य मे याचकेभ्यः इदमेव दास्यामीत्यनुरागः सर्व्वदैव वर्त्तते इत्यर्थः; भवतु तावत्, धनानि ते न सन्ति दानेच्छा च प्रबला, तदन्यतो याचित्वाऽपि वितर इत्यत आह, याञ्चेति।—याञ्चा च—भिक्षा च, लाघवकरी—

याञ्चा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं परिदेवितेन ? ॥ ३ ॥
दारिद्र्यानलसन्तापः शान्तः सन्तोषवारिणा ।
याचकाशाविघातान्तर्दाहः केनोपशाम्यति ?" ॥४॥ इति ।

ततस्तदा माघपण्डितस्य तामवस्थां विलोक्य सर्वे याचकाः यथास्थानं जग्मुः । एवं तेषु याचकेषु यथायथं गच्छत्सु माघः प्राह,—

अगौरवकारिणी, हीनताजननीत्यर्थः, तृणादपि लघुत्वसम्पादिका इति यावत्, अतः तामपि कर्तुं न शक्नुमः इति भावः ; दानानुरागं विहातुं न शक्नोषि, याञ्चामपि कर्तुं न शक्नोषि, तदाऽभीष्टपूरणस्य उपायान्तराभावेन आत्मनाशं कुरु इति चेत्तत्राह, स्ववधे इति ।—स्ववधे च—आत्मनाशे च, स्वेच्छया प्राणविसर्ज्जने इत्यर्थः, पापं—दुष्कृतं, भवतीति शेषः, "असूर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तत्र प्रयाता गच्छन्ति ये के चात्महनो जनाः ॥" इति शास्त्रादिति भावः ; तर्हि किं कर्त्तव्यमित्याह, प्राणाः इति ।—प्राणाः !,—भो दग्धासवः !, ( "पुंसि भूम्न्यसवः प्राणाश्चैवम्" इत्यमरनिर्देशात् नित्यं बहुत्वे प्रयोगः ) स्वयम्—आत्मनैव, व्रजत—निर्गच्छत, यूयमिति शेषः, तथात्वे मे आत्मघातपापं न स्यात्, सर्वसन्तापस्य च शान्तिर्भवेदिति भावः ; परिदेवितेन—अनुशोचनेन, विलापेनेत्यर्थः, ("विलापः परिदेवनम्" इत्यमरः ) किम् ?—अलम् ?, विलापेन किमपि फलं नास्तीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ३ ॥

दारिद्र्येति ।—दारिद्र्यानलसन्तापः,—दारिद्र्यं—निर्धनत्वमेव, अनलः,—वह्निः, दाहकत्वादिति भावः ; तस्य सन्तापः,—उत्तापः, सन्तोषवारिणा—सन्तोषः,—धैर्य्यमेव, वारि—जलं तेन, दुःखबाधाभावरूपोदकेनेत्यर्थः, शान्तः,—प्रशमितः, उपशमं नीतः इत्यर्थः, मयेति शेषः, शान्तः,—प्रशान्तिं गत इत्यर्थो वा, किन्तु याचकाशाविघातान्तर्दाहः,—याचकानां—प्रार्थिनाम्, आशाविघातेन—तृष्णाभङ्गेन, तेषामिच्छापूरणाक्षमत्वेनेति यावत्, यः अन्तर्दाहः,—मनःसन्तापः, सः केन—केनोपायेन, उपशाम्यति ?—निर्वाति ? उपशमं गच्छतीत्यर्थः ; दारिद्र्यानलदाहः सन्तोषोदकेन कथमपि प्रशमितः, किन्तु अर्थिवैमुख्यजनितचित्तदाहः न केनाप्युपायेन प्रशान्तिं गच्छतीत्यर्थः, अत एव भोः प्राणाः ! यूयं स्वयमेव व्रजत इति भावः ॥ ४ ॥

"व्रजत व्रजत प्राणा! अर्थिभिर्व्यर्थतां गतैः।
पश्चादपि च गन्तव्यं क्व सोऽर्थः पुनरीदृशः?" ॥ ५ ॥

इति विलपन् माघपण्डितः परलोकमगात्। ततो माघपत्नी स्वामिनं परलोकगतं दृष्ट्वा प्राह,—

"सेवन्ते स्म गृहं यस्य दासवत् भूभुजः सदा।
स स्वभार्य्यासहायोऽयं म्रियते माघपण्डितः" ॥ ६ ॥

---

माघस्य पुनर्विलापमाह, व्रजत इति।—प्राणाः!—भो जीवनम्! व्यर्थतां—निष्फलतां, किञ्चिदप्यप्राप्त्या निराशतामित्यर्थः, गतैः,—प्राप्तैः. अर्थिभिः,—याचकैः, सहेति शेषः, व्रजत व्रजत—निःसरत निःसरत, शीघ्रं निर्गच्छतेत्यर्थः, [ सम्भ्रमे खेदे वा द्विरुक्तिः ]। व्रजत व्रजत इत्यनेन कथं त्वया ईदृशी त्वरा कृता? इत्यत आह, पश्चादिति।—पश्चादपि च—इतः परमपि च, कियत्कालानन्तरमपि चेत्यर्थः, गन्तव्यम्—अवश्यमेव यातव्यं, युष्माभिरिति शेषः, दारिद्र्यानलदाहव्यथामसहमानैर्युष्माभिः कियत्कालानन्तरमेव यदा अवश्यमेव निर्यातव्यं, तदा दारिद्र्यदग्धानां तुल्यावस्थतया मित्रभूतानामेषामेव अनुसरणं कुरुत, किं वृथा कालक्षेपेणेति भावः; ननु पश्चाद्गमने का क्षतिः? इत्याह, क्वेति।—सः पुनः अर्थः,—पश्चात् गमनरूपं वस्तु पुनः, तादृशं मरणन्तु इत्यर्थः, ईदृशः,—एतादृशः, [ अयमिव दृश्यते इति इदम्+दृश+"त्यदादिषु दृशो—" (३।२।६० पा०) इति कञ्, "इदंकिमोरीश्की" (६।३।९० पा०) इति इदम ईश् ] एभिः सह गमनरूपः सुखकर इत्यर्थः, क्व?—कुत्र? न कुत्रापीत्यर्थः, कारणान्तरेण पश्चादेकाकिगमनमपेक्ष्य अर्थिमनोरथपूरणाक्षमताजनितवेदनया एभिः सह गमनमेव ते गौरवाय इति भावः; यद्वा—सः पुनः,—मृत्युरित्यर्थः, ईदृशः अर्थः,—ईदृङ्महदुद्देश्यकः, क्व? ॥ ५ ॥

माघवियोगेन तत्पत्न्याः खेदमाह, सेवन्ते इति।—भूभुजः,—राजानः, दासवत्—भृत्यवत्, यस्य—माघपण्डितस्य, गृहं—भवनं, सदा—नियतं, सेवन्ते स्म—आश्रयन्ति स्मेत्यर्थः, सः,—तादृशः, नृपकुलसेवित इत्यर्थः, अयं—परिदृश्यमानः, माघपण्डितः, स्वभार्य्यासहायः,—स्वा—स्वीया, भार्य्या—पत्नी, सहायी—अनुचरी यस्य तादृशः, पत्नीमात्रसहचरः सन्, दारिद्र्यात् सर्वसहायपरित्यक्तः सन्नित्यर्थः, म्रियते—विपद्यते, असुभिस्त्यज्यते इत्यर्थः; किमतःपरं क्लेशकरमिति भावः। [ मृ+कर्त्तरि लट्-ते ]। ॥ ६ ॥

ततो राजा माघं (ङ) विपन्नं ज्ञात्वा निजनगराद्विप्रघ्नता-ऽऽवृतः मौनी रात्रावेव तत्राऽऽगात्। ततो माघपत्नी राजानं वीक्ष्य प्राह,—"राजन्! यतः पण्डितवरस्त्वदेशं प्राप्तः पर-लोकमगात्, ततोऽस्य (च) कृत्यशेषं सम्यक् करणीयं भवता" इति। ततो राजा माघं विपन्नं नर्मदातीरं नीत्वा यथोक्तेन विधिना संस्कारमकरोत्। तत्र च माघपत्नी वह्नौ प्रविष्टा। तयोश्च पुत्रवत् सर्वं चक्रे भोजः।

[इति भोज-माघपत्नीसंवादः]।

---

## भोज-कालिदासयोः मिलनसंवादः।

ततो माघे दिवं गते राजा शोकाकुलो विशेषेण कालि-दासवियोगेन पण्डितानां प्रवासेन च कृशोऽभूत् दिने दिने (क) बहुलपक्षशशीव। ततोऽमात्यैर्मिलित्वा चिन्तितं,—

---

(ङ) विपन्नं—मृतम्। विप्रघ्नताऽऽवृतः,—बहुब्राह्मणपरिवेष्टितः; माघस्य अग्निसंस्कारनिर्वाहार्थमिति भावः।

(च) कृत्यशेषं—शेषकृत्यम्, और्ध्वदेहिकं कर्म इत्यर्थः। [राजदन्तादिवत् परनिपातः]।

---

(क) बहुलपक्षशशीव— बहुलपक्षे—कृष्णपक्षे, ("बहुला—। पुंस्यपी कृष्ण-पक्षे च" इति मेदिनी) शशीव—चन्द्र इव।

"वङ्गालदेशे कालिदासो वसति, तस्मिन्नागते राजा सुखी भविष्यति" इति। एवं विचार्य्यामात्यैः पत्रे किमपि लिखित्वा तत् पत्रमेकस्यामात्यस्य हस्ते दत्त्वा प्रेषितम्। स कालक्रमेण कालिदासमासाद्य "राज्ञोऽमात्यैः प्रेषितोऽस्मि" इति नत्वा तत् पत्रं दत्तवान्। ततस्तत् कालिदासो वाचयति,—

"न भवति स भवति न चिरं भवति चिरञ्चेत् फले विसंवादी।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ १ ॥

कालिदासमनुकूलयितुं भङ्ग्या भोजस्य अवस्थां प्रकाशयति, नेति।—चिरं—दीर्घकालं, चेत्—यदि, फले—उद्देश्ये, तवानयनरूपे अस्माकमेतत्पत्रप्रेषणस्य प्रयोजने इत्यर्थः, विसंवादी—विरोधीत्यर्थः, अन्यथाकारीति यावत्, भवति—सम्पद्यते, भवानिति शेषः, दीर्घकालं भवान् अनागत्य अस्माकं पत्रप्रेरणोद्देश्यं विफलीकरिष्यति चेदित्यर्थः, तदा सः,—भोज इति भावः; चिरं—दीर्घकालं, न भवति न भवति—न जीवति न जीवति, [ खेदे द्विरुक्तिः ]। ननु मदवमाननाकारिणि भोजे न जीवति का मे क्षतिः? इत्याशङ्क्य तत्परिहारायाऽऽह, कोप इति।—सत्पुरुषाणां—सज्जनानां, कोपः,—क्रोधः, नीचानाम्—असज्जनानां, स्नेहेन—प्रेम्णा, तुल्यः,——समानः, दुर्जनानां स्नेहो यथा न चिरं तिष्ठति, सुजनानां कोपोऽपि तथा इत्यर्थः, सुजनेन त्वया कोपं परिहृत्य राज्ञः जीवनरक्षणाय सत्वरमागन्तव्यमिति भावः; यद्वा,—भवति—त्वयि, चिरं—दीर्घकालं, न भवति चेत्—नागच्छति यदीत्यर्थः, तदा सः,—भोजः, चिरं—दीर्घकालं, न भवति—न जीवतीत्यर्थः, अचिरमेव मरिष्यतीति भावः; [ "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१ पा० ) इति भविष्यति लट् ]। ननु मृते च भोजे काऽस्माकं क्षतिरित्याशङ्कायामाह, फले इति।—सत्पुरुषाणां कोपः फले—परिणामे, फलप्रसवकाले इत्यर्थः, कोपकारणस्य प्रतिविधानार्थं दण्डप्रदानकाले उपस्थिते इति यावत्, विसंवादी—अन्यथाकारी, निसर्गौदार्य्येण अमापर्य्यवसायीत्यर्थः, अत एव नीचानां स्नेहेन तुल्यः,—अकिञ्चित्करत्वात् नीचजनानां स्नेहप्रदर्शनं यथा कार्य्यकाले व्यर्थं भवति, तथा साधूनां कोपोऽपि नैसर्गिकमहत्त्वात् स्वयमेव प्रशान्तः सन् व्यर्थः इव भवतीत्यर्थः; क्षमासारा हि साधवः इति भावः। आर्य्या वृत्तम् ॥ १ ॥

सहकारे चिरं स्थित्वा सलीलं बालकोकिल ! ।
तं हित्वाऽद्यान्यवृक्षेषु विचरन्न विलज्जसे ? ॥ २ ॥
कलकण्ठ ! यथा शोभा सहकारे भवद्गिरः ।
खदिरे वा पलाशे वा किं तथा स्यात् ? विचारय"॥३॥

इति ।

ततः कालिदासः प्रभाते (ख) तं भूपालमापृच्छ्य मालवदेशमागत्य राज्ञः क्रीड़ोद्याने तस्थौ । ततो राजा च

नित्यं विद्वन्मण्डलीगौरवरक्षिणं भोजं सामान्यकारणेन विहाय आश्रयान्तरग्रहणात् कालिदासं कोकिलाभियोगच्छलेन किञ्चिदभियुनक्ति, सहकारे इति । —बालकोकिल !—भोः परपुष्टशावक !, बालत्वात् बालवत् चञ्चलमते !, अविवेकिन् ! इति भावः ; कोकिल ! इति सम्बोधनेन च वायसेन शैशवे प्रतिपालितः कोकिलः यदा उत्पतनक्षमो भवति तदा प्रतिपालकं परित्यज्य अकृतज्ञः यथा स्थानान्तरं गच्छति, तद्वत् त्वमपि अकृतज्ञ इति ध्वन्यते ; सहकारं—अतिसौरभप्रदाम्रवृक्षं, सर्वगुणाधारं भोजे इति भावः ; चिरं—दीर्घकालं व्याप्य, सलीलं—सविलासं, स्वच्छन्दमिति यावत्, स्थित्वा—उषित्वा, अद्य—अधुना, तं—सहकारं, चिरस्य आश्रयमिति यावत्, भोजमिति भावः ; हित्वा—त्यक्त्वा, अन्यवृक्षेषु—पादपान्तरेषु, वल्लालदेशाधिपतौ इति भावः ; विचरन्—पर्य्यटन् न विलज्जसे ?—नापत्रपसे ? भोजाश्रयं परित्यज्य अन्यत्राश्रयग्रहणं ते सर्वथैवानुचितं लज्जाकरञ्चेति तात्पर्य्यम् ॥ २ ॥

कलकण्ठेति ।—कलकण्ठ !—भोः पिक !, ("कलकण्ठः कलध्वाने हंसे पारावते पिके" इति मेदिनी ) सुमधुरश्लोकरचयितः ! इति भावः, सहकारे—अतिसौरभप्रदाम्रवृक्षे अवस्थानकाले इत्यर्थः, भोजसभायामवस्थाने कृते इति भावः ; भवद्गिरः,—तव वाण्याः, तव कुहूरवस्येत्यर्थः, तव कवितायाः इति भावः, यथा—यादृशी, शोभा—उत्कर्षः इत्यर्थः, माधुर्य्यमिति यावत्, जायते इति शेषः, खदिरे वा—खदिरवृक्षे वा, पलाशे वा—पलाशवृक्षे वा, गुणाढ्ये निर्गुणे च आश्रयान्तरे इति भावः ; तथा—तादृशी शोभा, स्यात् किम् ?—भवेत् किम् ? विचारय—वितर्कय, नैव भवेदिति निश्चित्य अत्रागमनाय त्वरस्वेति भावः ॥ ३ ॥

( ख ) तं भूपालं—वल्लालराजम् । आपृच्छ्य—सम्भाषयित्वा, आलिङ्गनकुशल-

तत्रागतं ज्ञात्वा स्वयं गत्वा (ग) महता परिवारेण तमानीय सम्मानितवान्। ततः क्रमेण विद्वन्मण्डले च समायाते सा भोजपरिषत् प्रागिव रेजे।

[ इति भोज-कालिदासयोः मिलनसंवादः ]।

---

## भोज-जालन्धरीयकविसंवादः।

ततः सिंहासनमलङ्कुर्वाणं भोजं द्वारपाल आगत्य प्रणम्याऽऽह,—"देव! कोऽपि विद्वान् जालन्धरदेशादागत्य द्वार्य्यास्ते" इति। राजा,—"प्रवेशय" इत्याह। स च विद्वानागत्य सभायां तथाविधं राजानं जगन्मान्यान् कालिदासादीन् (क) कविपुङ्गवान् वीक्ष्य बद्धजिह्व इवाजायत। सभायां किमपि तस्य मुखान्न निःसरति। तदा राज्ञोक्तं,—"विद्वन्! किमपि पठ" इति। स आह,—

---

प्रश्नादिना आनन्दयित्वेत्यर्थः, (आङ्पूर्वः प्रच्छिरानन्दनार्थे प्रयुज्यते। "अथ हे आनन्दनसभाजने। आप्रच्छनम्" इत्यमरः) सम्भाषणादिना सन्तोष्येति यावत्।

(ग) महता परिवारेण—बहुना परिजनेन सह, उच्चपदस्थेन परिवारेण सह इति वा।

---

(क) कविपुङ्गवान्—कविश्रेष्ठान्। ("स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः॥" इत्यमरः)। बद्धजिह्वः,—बद्धा—संयता, जिह्वा—रसना यस्य तादृशः, रज्ज्वादिना आबद्धजिह्वस्य इव जिह्वा-सञ्चालनाक्षमः इत्यर्थः, भयेन किमपि वक्तुमशक्त इति भावः।

"आरनालगलदाहशङ्कया मन्मुखादपगता सरस्वती ।
तेन वैरिकमलाकचग्रहव्यग्रहस्त ! न कवित्वमस्ति मे" ॥१॥

राजा तस्मै महिषीमतं ददौ ।

[ इति भोज-आरनालीयकविसंवादः ] ।

---

## भोज-सीता-कालिदाससंवादः ।

अन्यदा राजा (क) कौतुकाकुलः सीतां प्राह,—"देवि सुरतं पठ" इति । सीता प्राह,—

कविः स्वस्य मौनित्वे कारणमाह, आरनालेति ।—भो वैरिकमलाकचग्रह-व्यग्रहस्त !—वैरिणां—द्विषतां, कमलायाः,—लक्ष्म्याः, कचग्रहे—केशग्रहणे, व्यग्रहस्त !—व्यासक्तपाणे !, रिपुराजलक्ष्म्याः केशाकर्षणनिरतकर !, भोः शत्रुसम्प-द्विध्वंसिन् ! इत्यर्थः, सरस्वती—वाग्देवी, आरनालगलदाहशङ्कया—आरनालेन—काञ्जिकेन, अत्यम्लेन पर्य्युषितभक्तोदकेनेत्यर्थः, तद्वत् तीव्रेण विरसेन च महाक्येनेति भावः, गलस्य—कण्ठस्य, दाहशङ्कया—ज्वलनभयेन, मन्मुखात—मम वदनात्, अपगता—पलायिता, वाग्देवी मम कण्ठे अवस्थितायां सत्यां भाषणकाले तीव्रेण कर्कशेन च महाक्येन संस्पर्शात् दाहशङ्कया मन्मुखं विहाय अन्यत्र पलायितेत्यर्थः, तेन—सरस्वत्या अपगमनेन हेतुना, मे—मम, कवित्वं—पाण्डित्यं, न अस्ति—न विद्यते, भवत्सभास्थकविवरान् मधुरभाषिणः वीक्ष्य कवित्वशक्ति-विहीनस्य कठोरभाषिणः मम वाक्यस्फूर्त्तिः न भवतीति भावः । रथोद्धता वृत्तम् ॥ १ ॥

---

(क) कौतुकाकुलः,—नर्म्मपरवशः, परिहासासक्तः इत्यर्थः, ( "कौतुकन्त्वभिलाषे स्यादुत्सवे नर्म्महर्षयोः" इति मेदिनी ) । सुरतं पठ—सुरतं वर्णयेत्यर्थः ।

"सुरताय नमस्तस्मै जगदानन्दहेतवे।
आनुषङ्गिं फलं यस्य भोजराज! भवादृशाम्" ॥ १ ॥

ततस्तुष्टो राजा तस्मै हारं ददौ। ततो राजा चामरग्राहिणीं वेश्यामवलोक्य कालिदासं प्राह,—"सुकवे! वेश्यामेनां वर्णय" इति। तामवलोक्य कालिदासः प्राह,—

"कचभारात् कुचभारः कुचभाराद्भीतिमेति कचभारः।
कचकुचभाराज्जघनं कोऽयं चन्द्रानने! चमत्कारः"॥२॥

भोजस्तुष्टः सन् स्वयमपि पठति,—

सुरतवर्णनमाह, सुरतायेति।—हे भोजराज! यस्य—सुरतस्य, फलं—लाभः, आनन्द इति यावत्, उपस्थस्य आनन्दफलकत्वादिति भावः; भवादृशां,—भवद्विधानां महात्मनाम्; शास्त्रादेशभक्तानां संयमिनामिति भावः; आनुषङ्गि—अनुषङ्गात्—प्रसङ्गादागतम्, "ऋतौ भार्य्यामुपेयात्" इति शास्त्रानुसारेण वंशधारासंरक्षणार्थम् अपत्योत्पादनरूपमुख्योद्देशेन प्रवृत्तौ यदानन्दरूपं फलं गौणतया अप्रधानमित्यर्थः, विषयानासक्तत्वादिति भावः; जगदानन्दहेतवे—जगतां—जगद्वासिनां जनानाम्, आनन्दहेतवे—हर्षकारणाय, जगदुपकारकसत्पुत्रहेतुत्वादिति भावः, तस्मै—सर्वलोकसमादृतायेति भावः, सुरताय—ग्राम्यधर्म्माय, नमः,—नतिः, अस्तु इति शेषः ॥ १ ॥

वेश्यायाः सौन्दर्य्यं वर्णयति, कचभारादिति।—भोः चन्द्रानने!—इन्दुमुखि!, कुचभारः,—स्तनगौरवं, निविड़विशालस्तनद्वयमित्यर्थः, कचभारात्—केशगौरवात्, निविड़सुदीर्घकुन्तलकलापादित्यर्थः, भीतिं—भयम्, एति—प्राप्नोति, एवं कचभारः कुचभारात् भीतिमेति, उभयोरेव तुल्यरमणीयत्वात् लोकाः एकमनादृत्य अपरं समादरेण पश्यन्ति इति धियेति भावः; यद्वा—गाढ़ान्धकारस्य दृष्ट्यावरकतया अन्धकारसदृशेन निविड़कृष्णेन कचभारेण दर्शकानां दृष्टिशक्तिरपहन्येत न केऽपि मे पीनोन्नतत्वं द्रष्टुं शक्नुयुः इति भयेन कुचभारः, तथा कुचयोः पीनत्वोन्नतत्वाभ्यां प्रथममेव दर्शकानां दृष्ट्याकर्षणात् न केऽपि मे घनत्वकृष्णत्वायतत्वादिकं पश्येयुरिति भयेन कचभारश्च बिभेतीति भावः; जघनं—कटिपुरोभागः, कचकुचभारात् भीतिमेति, ऊर्द्ध्वदेशस्थयोः कचकुचयोः आयतत्वतुङ्गत्वादिभिः प्रथममेव दर्शकानां दृष्ट्याकर्षणात् मम विशालत्वं केऽपि न पश्येयुरेवेति धियेति भावः; यद्वा—

"वदनात् पदयुगलीयं वचनादधरश्च दन्तपंक्तिश्च ।
कचतः कुचयुगलीयं लोचनयुगलश्च मध्यतस्त्रसति" ॥ ३ ॥

[ इति भोज-सीता-कालिदाससंवादः ] ।

जघनं—कटिः, ऊरुद्वयोः कचकुचयोः विपुलभारं सोढुमशक्नुवाना एका क्षीणा कटिः भग्ना चेत् इति धियेति भावः, ("जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि" इति मेदिनी) कोऽयं चमत्कारः,—अपूर्व्वदृश्योऽयमित्यर्थः; सर्व्वाङ्गसुन्दर्य्यास्ते कचादिकमङ्गमङ्गमिकया दर्शकान् आकर्षति इति फलितम् । गीतिश्छन्दः ॥ २ ॥

कालिदासकृतसौन्दर्य्यवर्णनेन अतीव प्रमुदितः भोजः स्वयमपि वेश्यायाः सौन्दर्य्यं वर्णयति, वदनादिति ।—पदयुगलीयं—चरणद्वयसम्बन्धि, सौन्दर्य्यमिति शेषः, पादपद्मसौन्दर्य्यमित्यर्थः, वदनात्—मुखात्, मुखचन्द्रसौन्दर्य्यदर्शनेनेत्यर्थः, [ "भीत्रार्थानां भयहेतुः" ( १।४।२५ पा० ) इति भयार्थकत्रसधातोः प्रयोगे भयहेतोर्वदनस्य अपादानत्वम् ] त्रसति—बिभेति ; [ त्रस + लट्-ति "भ्राशभ्लाश भ्रमुक्रमुक्लमुत्रसित्रुटिलषः" ( ३।१।७० पा० ) इति वैकल्पिकः श्यनभावः । श्यन्पक्षे तु त्रस्यति इति रूपम् ] चन्द्रोदये कमलं विगतशोभं भवति, एवञ्च मुखचन्द्रप्रकाशेन पदकमलस्य शोभाहानेः भयमवगन्तव्यम् ; अधरश्च—दशनच्छदश्च, दन्तपङ्क्तिश्च—दशनश्रेणी च, वचनात्—वाक्यात्, त्रसति, अस्याः सुमधुरवचनसुधापानेन सुतृप्तः पिपासुः अधरसुधायां वितृष्णो भवेच्चेत् इति धिया अधरस्य भयं, तथा विशदवचनावलीविमुग्धः श्रोता सुविशददन्तपङ्क्तिशोभादर्शने विरतो भवेच्चेदिति दन्तपङ्क्तेर्भयमिति भावः ; यद्वा—विम्बफलसदृशस्य आरक्तस्य अधरस्य कोकिलकूजनसदृशवचनात् कवलीभवनधिया भयमिति भावः ; कुचयुगलीयं—स्तनयुगसम्बन्धिसौन्दर्य्यं, कचतः,—केशेभ्यः, केशसौन्दर्य्यदर्शनेनेत्यर्थः, [ "पञ्चम्यास्तसिल्" ( ५।३।७ पा० ) इति तसिल् ] । त्रसति ; अत्र पूर्व्वश्लोकोक्तभावो बोध्यः ; यद्वा—चक्रवाकद्वन्द्वसदृशस्य चक्रवर्त्तिनः कुचद्वन्द्वस्य नैशान्धकारसदृशप्रगाढ़कृष्णकेशपाशाद्भयं, निशागमे चक्रमिथुनयोः विच्छेदसङ्घटनादिति भावः ; लोचनयुगलश्च—विशालनयनद्वयञ्च, मध्यतः,—क्षीणकटिदेशात्, त्रसति ; कदाचित् ममापि दृष्टेः क्षीणता भवेच्चेदिति धिया, कदाचित् मम विशालतां सोढुमशक्नुवानो अतीक्ष्णो मध्यदेशः भग्नश्चेदिति धिया वा इति भावः ; अस्याः सर्वमेव अनवद्याङ्ग्याः सुशोभनमिति हृदयम् । गीतिश्छन्दः ॥ ३ ॥

# समस्यापूरणप्रसङ्गे भोज-कालिदाससंवादः।

अन्यदा राजा भोजो धारानगरे एकाकी विचरन् कस्यचिद्विप्रवरस्य गृहं गत्वा तत्र काञ्चन पतिव्रतां (क) स्वाङ्के शयानं भर्त्तारमुद्वहन्तीमपश्यत्। ततः तस्याः शिशुः समुत्थितः (ख) ज्वालायाः समीपमगच्छत्; इयञ्च पतिधर्म्मपरायणा स्वपतिं नोत्थापयामास; ततः शिशुश्च वह्नौ पतन्तं नागृह्णात्। राजा च आश्चर्य्यमालोक्यातिष्ठत्। ततः सा पतिधर्म्मपरायणा वैश्वानरं प्रार्थयत,—(ग) "यज्ञेश्वर! त्वं सर्वकर्म्मसाक्षी, सर्वधर्म्मान् जानासि, मां पतिधर्म्मपराधीनां शिशुम् अगृह्णन्तीञ्च जानासि, ततो मदीयशिशुमनुगृह्य त्वं मा दह" इति। ततः शिशुः यज्ञेश्वरं प्रविश्य (घ) अर्द्धघटिकापर्य्यन्तं तत्रैवातिष्ठत्, ततो नारोदीत् प्रसन्नमुखश्च शिशुः। सा च ध्यानाऽऽरूढ़ाऽतिष्ठत्। ततो यदृच्छया समुत्थिते भर्त्तरि सा झटिति शिशुं जग्राह। तच्च परमधर्म्ममालोक्य विस्मयाविष्टो नृपतिराह,—"अहो! मम समं भाग्यं कस्यास्ति? यदीदृश्यः

(क) स्वाङ्के—निजक्रोड़े। उद्वहन्तीं—धारयन्तीम्। [ उत्+वह+शतृ+ ईप्+द्वया १व० ]।

(ख) ज्वालायाः,—शिखायाः, अग्नेरिति भावः। नोत्थापयामास—न जागरयामास। [ उत्+स्था+णिच्+णल् ]।

(ग) यज्ञेश्वर!—हुताशन!, अग्नौ आहुतिदानं विना यज्ञकर्म्मनिष्पत्त्यभावात् अग्नेर्यज्ञेश्वरत्वमिति भावः। अग्नेः सर्वसाक्षित्वे प्रमाणं यथा— "आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्॥" इति।

(घ) अर्द्धघटिकापर्य्यन्तम्—एकदण्डपर्य्यन्तम्।

मुख्यस्त्रियोऽपि मन्नगरे वसन्ति" इति। ततः प्रातः सभायामागत्य सिंहासने उपविष्टः राजा कालिदासं प्राह,—"सुकवे! मद्दाश्चर्य्यं मया पूर्वेद्युरात्रौ दृष्टमस्ति"। इत्युक्त्वा राजा पठति,—

"हुताशनश्चन्दनपङ्कशीतलः" इति।

कालिदासस्ततश्चरणत्रयं झटिति पठति,—

"सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता।
तदाऽभवत्तत्पतिभक्तिगौरवात् हुताशनश्चन्दनपङ्कशीतलः" ॥१॥

राजा च स्वाभिप्रायमालोक्य विस्मितस्तमालिङ्ग्य पादयोः पतति स्म।

एकदा ग्रीष्मकाले राजा अन्तःपुरे विचरन् (ङ) घर्म्मतापतप्तः आलिङ्गनादिकमकुर्वन् ताभिः सह सरससंलापाद्युपचार-

---

"हुताशनश्चन्दनपङ्कशीतलः" इति राजपठितान्त्यपादस्य पूरणाय कालिदासः पूर्वपादत्रयमाह, सुतमिति।—पतिव्रता—पतिधर्म्मपरायणा काचित् साध्वी, सुतं—तनयं, पावके—अग्नौ, पतन्तं—चलन्तं, प्रविशन्तमित्यर्थः, प्रसमीक्ष्य—विलोक्य, अपीति शेषः, पतिं—भर्त्तारं, स्वाङ्के शयानमिति शेषः, न बोधयामास—न जागरयामास, निद्रितस्य भर्त्तुर्निद्राभञ्जनस्य पातिव्रत्यधर्म्मविरोधित्वादिति भावः; [बुध+णिच्+लिट्-णल्] तदा—तस्मिन् काले, साध्वीतनयस्य अग्निपतनसमये इत्यर्थः, तत्पतिभक्तिगौरवात्—तस्याः,—पतिव्रतायाः, पतिभक्तिगौरवात्—भर्त्तृसेवामाहात्म्यात्, साध्व्याः सम्मानं रक्षितुमित्यर्थ, हुताशनः,—वह्निः, चन्दनपङ्कशीतलः,—चन्दनपङ्कवत्—कर्द्दमाकारतया घृष्टचन्दनवत्, यद्वा—चन्दनकर्द्दमो इव, चन्दनमिव कर्द्दम इव च इत्यर्थः, शीतलः,—शीतस्पर्श इत्यर्थः, अभवत्—अजायत। वंशस्थविलं वृत्तम् ॥ १ ॥

(ङ) घर्म्मतापतप्तः,—घर्म्मतापेन—ग्रीष्मसन्तापेन, तप्तः,—पीडितः, ग्रीष्मसन्तापपीडितः। ताभिः,—अन्तःपुरचारिणीभिरित्यर्थः। सरससंलापाद्युपचारं—सरसः,—सानुरागः, अनुरागव्यञ्जक इत्यर्थः, यद्वा—रसवान्, शृङ्गाररसव्यञ्जक इत्यर्थः, संलापः,—परस्परभाषणं, तदाद्युपचारं—तत्प्रभृतिप्रीतिजनकव्यवहारम्; शारीरिकसम्भोगमिति भावः।

अनुभूय तत्रैव सुप्तः। ततः प्रातरुत्थाय राजा सभां प्रविष्टः कुतूहलात् पठति,—

"मरुदागमवार्त्तयाऽपि शून्ये समये जाग्रति संप्रवृद्ध एव"।

भवभूतिराह,—

"उरगो शिशवे बुभुक्षवे स्वामदिशत् फुत्कृतिमाननानिलेन।
मरुदागमवार्त्तयाऽपि शून्ये समये जाग्रति संप्रवृद्ध एव" ॥ २ ॥

राजा प्राह,—"भवभूते! लोकोक्तिः सम्यगुक्ता" इति।
ततोऽपाङ्गेन राजा कालिदासं पश्यति। ततः स प्राह,—

"अबलासु विलासिनोऽन्वभूवन्नयनैरेव नवोपगूहनानि।
मरुदागमवार्त्तयाऽपि शून्ये समये जाग्रति संप्रवृद्ध एव"॥३॥

"मरुदागम" इत्यादिना भोजेन पठितस्य परार्द्धस्य पूरणाय भवभूतिराह, उरगौति।—मरुदागमवार्त्तयाऽपि—मरुतः,—वायोः, आगमः,—आगमनं, सञ्चार इत्यर्थः, तस्य वार्त्तयाऽपि—वृत्तान्तेनापि, अस्यां दिशि वायुर्वाति इति कथयाऽपीत्यर्थः, शून्ये—विरहिते, समये—काले, संप्रवृद्धे एव—अतिवृद्धियुक्ते एव, अतिप्रवृद्धतयैवेत्यर्थः, जाग्रति—उन्निद्रवत् प्रकाशमाने सतीत्यर्थः, वायुप्रवाहे सम्पूर्णतया निरुद्धे सतीति समुदयार्थः, [ जागृ + शतृ + ७मी १व० ] उरगौ—सर्पौ, बुभुक्षवे—क्षुधिताय, [ भुज + सन् + उः + ४र्थी १व० ] शिशवे—निजशावकाय, आननानिलेन—मुखवायुना, फुत्कारोत्थेनेति भावः; स्वां—स्वकीयां, फुत्कृतिं—फुत्कारं, फुत्कारोत्थवायुमित्यर्थः, अदिशत्—अददत्, भोजनायेति शेषः, [ दिश + लङ्-द ] उरगाणां वायुभोजित्वात् वहिर्वाताभावेन मुखवायुं पाययित्वा शिशोः क्षुधापनयनं चकार सर्पौति भावः; ( "उरगः पन्नगो भोगी जिह्मगः पवनाशनः" इत्यमरोक्तत्वात् )। औपच्छन्दसिकं वृत्तम् ॥ २ ॥

इङ्गितज्ञः कालिदासः भोजकटाक्षेण प्रवुद्धः पूर्वार्द्धमाह, अबलास्विति।—मरुदागमवार्त्तयाऽपि शून्ये समये संप्रवृद्धे एव जाग्रति, विलासिनः,—शृङ्गारचेष्टावन्तः युवानः, ("विलासिनः" इति पाठान्तरम्) अबलासु—कामिनीषु, नयनैरेव—लोचनैरेव, सामिप्रायदृष्टिपातैरेवेत्यर्थः, नवोपगूहनानि—अभिनवालिङ्गनानि, लोचनेनालिङ्गनस्य अपूर्वत्वात् अन्यैः कदाऽपि अननुभूतत्वाच्च उपगूहनस्य नवत्वं बोध्यम्;

तदा राजा स्वाभिप्रायं ज्ञात्वा तुष्टः कालिदासं विशेषेण सम्मानितवान्।

अन्यदा मृगयापरवशो राजा अत्यन्तम् (च) आर्त्तः कस्यचित् सरोवरस्य तीरे निविड़च्छायस्य जम्बूवृक्षस्य मूलमुपाविशत्। तत्र शयाने राज्ञि जम्बोरुपरि बहुभिः कपिभिः जम्बूफलानि सर्वाण्यपि चालितानि। तानि सशब्दं पतितानि पश्यन् घटिकामात्रं स्थित्वा परिहृतश्रमः उत्थाय तुरङ्गमवरमारुह्य गतः। ततः सभायां राजा पूर्वानुभूतकपिचालितफलपतनरवमनुकुर्वन् समस्यामाह,—

"गुलुगुग्गुलुगुग्गुलु"।

तत आह कालिदासः,—

"जम्बूफलानि पक्वानि पतन्ति विमले जले।
कपिकम्पितशाखाभ्यो गुलुगुग्गुलुगुग्गुलु" ॥ ४ ॥

राजा तुष्ट आह,—"सुकवे! अदृष्टमपि परहृदयं कथं जानासि? साक्षात्कारदासि" इति मुहुर्मुहुः पादयोः पतति स्म।

एकदा धारानगरे प्रच्छन्नवेशः विचरन् कस्यचित् वृद्ध-

अन्वभूवन्—अनुभूतवन्तः, ग्रीष्मकाले मारुतप्रवाहशून्ये समये आलिङ्गनादिकर्माणः क्लेशप्रदत्वात् इति भावः। [अनु + भू + लुङ्-अन्]। औपच्छन्दसिकं वृत्तम् ॥ ३ ॥

(च) आर्त्तः,—श्रान्तः इत्यर्थः, आतपपीड़ित इत्यर्थो वा। निविड़च्छायस्य—निविड़ा—घना, छाया—अनातपः यस्य तादृशस्य, शाखापल्लवादिभिर्निविड़त्वात् छायाबहुलस्येत्यर्थः।

जम्बूफलानीति।—कपिकम्पितशाखाभ्यः,—कपिभिः,—वानरैः, कम्पिताः,—चालिताः, याः शाखाः,—विटपाः ताभ्यः, वानरचालितजम्बूशाखाभ्य इत्यर्थः, पक्वानि—परिणतानि, जम्बूफलानि—जाम्बवशस्यानि, गुलुगुग्गुलुगुग्गुलु—गुलुगुग्गुलुगुग्गुलु इति अव्यक्तशब्दं, कृत्वा इति शेषः, विमले—स्वच्छे, जले—वारिणि, पतन्ति—निमज्जन्ति भवन्ति इत्यर्थः ॥ ४ ॥

ब्राह्मणस्य गृहं राजा मध्याह्नसमये गच्छन् तत्र तिष्ठति स्म। तदा वृद्धविप्रो (छ) वैश्वदेवं कृत्वा काकबलिं गृह्णन् गृहा-न्निर्गत्य भूमौ जलशुद्धायां निक्षिप्य काकमाह्वयति स्म ; तत्र हस्तविस्फालनेन हा हेति शब्देन च काकाः समायाताः ; तत्र कश्चित् काकस्तारं रटति स्म। तच्छ्रुत्वा तत्पत्नी तरुणी भीतेव हस्तं निजोरसि निधाय—"अये मातः !" इति चक्रन्द। ततो ब्राह्मणः प्राह,—"प्रिये साधुशीले ! किमर्थं बिभेषि ?" इति। सा प्राह,—"नाथ ! मादृशीनां पतिव्रतास्त्रीणां क्रूरध्वनिश्रवणं न सह्यम्।" "साधुशीले ! तथा भवेदेव" इति विप्र आह। ततो राजा तच्चरितं सर्वं दृष्ट्वा व्यचिन्तयत्, —"अहो ! इयं तरुणी दुःशीला नूनं, यतो (ज) निर्व्याजं बिभेति, स्वपातिव्रत्यं स्वयमेव कीर्त्तयति च। नूनमियं निर्भीता सती अत्यन्तं दारुणं कर्म रात्रौ करोत्येव।" एवं निश्चित्य राजा तत्रैव रात्रावन्तर्हित एवातिष्ठत्। अथ निशीथे भर्त्तरि सुप्ते सा मांसपेटिकां वेश्याकरेण (झ) वाहयित्वा नर्मदातीरमगच्छत्। राजाऽप्यात्मानं गोपयित्वाऽनुगच्छति स्म। ततः सा नर्मदां प्राप्य तत्र समागतानां (ञ) ग्राहाणां मांसं दत्त्वा

(छ) वैश्वदेवं—विश्वेभ्यो देवेभ्यो देयो बलिः तं, वैश्वदेवोद्देशेन दीयमान-बलिविशेषमित्यर्थः। काकबलिं—काकमुद्दिश्य दीयमानमुपहारम्। हस्तविस्फालनेन—आह्वानार्थं करसञ्चालनविशेषेण। हा हेति शब्देन—आह्वानसूचकशब्दविशेषे-णेत्यर्थः। तारम्—अत्युच्चैः, ("तारोऽत्युच्चैः" इत्यमरः)। रटति—शब्दायते।

(ज) निर्व्याजं—निः,—निःशेषेण, व्याजं—कपटं, सम्पूर्णकपटतापूर्वक-मित्यर्थः ; यद्वा—निः,—नास्ति, व्याजः,—छलं, छलनाशङ्का इत्यर्थः, यत्र तादृशं यथा तथा ; दूं॒हृक्निपुणतया भयाभिनयं प्रदर्शयति, येन कृत्रिमभयमिदमिति कोऽपि नावगन्तुं शक्नोति इति भावः।

(झ) वाहयित्वा—प्रेरयित्वा। [वह+णिच्+क्त्वा]।

(ञ) ग्राहाणां—जलजन्तुविशेषाणाम्। मांसं दत्त्वा—आमिषं वितीर्य,

नदीं तीर्त्वा अपरतीरस्थेन शूलाग्रारोपितेन स्वमनोरमेण सह रमते स्म। तच्चरित्रं दृष्ट्वा राजा गृहं समागत्य प्रातः सभायां कालिदासमालोक्य प्राह,—"सुकवे! शृणु,—

"दिवा काकरुताद्भीता

ततः कालिदास आह,—

रात्रौ तरति नर्मदाम्।

ततः तुष्टो राजा पुनः प्राह,—

तत्र सन्ति जले ग्राहाः

ततः कविराह,—

मर्मज्ञा सैव सुन्दरी" ॥ ५ ॥

ततो राजा कालिदासस्य पादयोः पतति।

[ इति समस्यापूरणप्रसङ्गे भोज-कालिदाससंवादः ]।

---

भक्षणार्थमिति शेषः; मांसभक्षणव्यग्रतया अपरतीरगमनसमये ग्राहभयाद्याः परिहारार्थमिति भावः। तीर्त्वा—उत्तीर्य। [ तॄ + क्त्वा ]। शूलाग्राऽऽरोपितेन—शूलम्—अस्त्रविशेषः, अग्रे—सम्मुखे, आरोपितं—स्थापितं येन तेन, शूलधारिणा चौरविशेषेणेत्यर्थः; यद्वा,—शूलम् अग्रे आरोपितं यस्य तेन, राजदण्डप्राप्तचौर्यै रक्षिभिः शूलपुरोभागे स्थापितेन, दण्डाग्रप्राप्तेनेत्यर्थः; यद्वा—रक्षिभिः शूलोपरि स्थापितेन, यद्वा—शूलव्याधेः शिखराधिरूढेन, अथवा शूलव्याधिनिपीडितेनेत्यर्थः। स्वमनोरमेण—निजमनोरञ्जकेन, जारेणेत्यर्थः।

भोजकालिदासौ इङ्गितेन कुलटाचरितमवगम्य संलपतः, दिवेति।—दिवा—दिवसे, काकरुतात्—वायसशब्दात्, वायसध्वनिं श्रुत्वा इत्यर्थः, भीता—शङ्किता, भवतीति शेषः; इति भोजोक्तस्य पादस्य पूरणाय कालिदासः द्वितीयपादम् आह, रात्राविति।—रात्रौ—रात्रिकाले, नर्मदां—तन्नाम्नीं नदीं, तरति—सन्तरणेन परपारं याति, या दिवा काकरुतात् भीता सा इति शेषः; पुनश्च राजा तृतीयपादमाह, तत्रेति।—तत्र—नर्मदायां, जले—वारिणि, ग्राहाः,—जलचरविशेषाः, प्राणिघातका इति भावः; सन्ति—वर्त्तन्ते, या काकरवात् बिभेति, सा कथं ग्राहपूर्णां नदीं तरति? इति भोजोक्तेस्तात्पर्य्यम्; चतुर्थपादपूरणाय कविः पुनराह, मर्म्मज्ञेति।—सा—पूर्वोक्ता तादृशी, सुन्दरी—सौन्दर्य्यशालिनी, कुलटेति

# भोज-कवित्रयसंवाद:।

एकदा धारानगरे विचरन् (क) वेश्यावीथ्यां राजा कन्दुक-लीलातत्परां तद्भ्रमणवेगेन पादयो: पतितावतंसां काञ्चन सुन्दरीं दृष्ट्वा सभायामाह,—"कन्दुकं वर्णयन्तु कवय:" इति। तदा भवभूतिराह,—

"विदितं ननु कन्दुक ! ते हृदयं प्रमदाऽधरसङ्गमलुब्ध इव।
वनिताकरतामरसाभिहत: पतित: पतित: पुनरुत्पतसि" ॥१॥

शेष:, मर्मज्ञा एव—तात्पर्य्याभिज्ञा एव, स्वरूपज्ञानवत्येवेत्यर्थ:, केनोपायेन कं वशीकर्त्तुं शक्नोति इत्येतद्विषयाङ्गीकारेऽपि नातिनिपुणा इति भाव: ॥ ५ ॥

(क) वेश्यावीथ्यां—वेश्यावाससमीपस्थमार्गे। कन्दुकलीलातत्परां—कन्दुक:,—क्रीडासाधन: गोलकाकारपदार्थविशेष:, तेन या लीला, तत्र तत्परां, कन्दुक-क्रीडासक्ताम्। तद्भ्रमणवेगेन—कन्दुकचालनजवेन। पतितावतंसां—पतित:,—निक्षिप्त:, अवतंस:,—कर्णभूषणं, कर्णपूरीकृतमुत्पलमित्यर्थ:, यस्या: तथाभूताम्।

विदितमिति।—ननु कन्दुक!—भो गेन्दुक!, ननुशब्दोऽत्र आमन्त्रणार्थको ज्ञेय:, ("प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमर:) ते—तव, हृदयं—चित्तं, विदितं—ज्ञातं, मयेति शेष:; किं विदितमित्यपेक्षायामाह, प्रमदेति।—वनिता-करतामरसाभिहत:,—वनितायाः,—प्रमदाया:, करतामरसेन—पाणिपद्मेन, अभिहत:,—ताड़ित:, अत एव पतित: पतित:,—कराघातेन पुन: पुन: निक्षिप्त: सन्नपि, प्रमदाऽधरसङ्गमलुब्ध इव—प्रमदाया:,—वनिताया:, अधरसङ्गमे—अधर-संयोगे, अधरसुधापाने इति भाव:, लुब्ध इव—लोलुप इव, पुन:,—भूय:, भूयोभूय: इत्यर्थ:, उत्पतसि—उत्तिष्ठसि, त्वमिति शेष:, अनिच्छन्त्या अपि प्रमदाया अधरपानार्थ-मुद्यतस्त्वं तया कराघातेन भूमौ पुन: पुन: पातितोऽपि बलात् स्वाभीष्टपूरणाय पुन: पुन: उत्तिष्ठसि, एतदेव हि ते उत्थानपतने कारणमिति मम विदितमिति समुदितार्थ:;

ततो वररुचिः प्राह,—

"एकोऽपि त्रय इव भाति कन्दुकोऽयं
कान्तायाः करतलरागरक्तरक्तः ।
भूमौ तच्चरणनखांशुगौरगौरः
खःस्थः सन्नयनमरीचिनीलनीलः" ॥ २ ॥

ततः कालिदास आह,—

"पयोधराऽऽकारधरो हि कन्दुकः
करेण रोषादभिहन्यते मुहुः ।

लुब्धानामेवं हि स्वभावो यत पुनः पुनर्निराकृतोऽपि स्वेप्सितपूरणाय यतते इति ।
तोटकं वृत्तम् । अत्र यतिभङ्गात तृतीय-चतुर्थपादान्तवर्णस्य लघुत्वाच्च छन्दोभङ्ग-
वह्नाति ; "पादान्तलघुर्गुरुर्वा" इति सूत्रेण गुरुत्वान्न वृत्तभङ्गः ॥ १ ॥

एक इति ।—अयं—परिदृश्यमानः, कन्दुकः,—गेन्दुकः, ("गेन्दुकः कन्दुकः" इत्यमरः) एकोऽपि—एकसङ्ख्यः सन्नपि, कान्तायाः,—प्रमदायाः, करतलरागरक्त-रक्तः,—करतलरागेण—पाणितलस्य लौहित्येन, निक्षेपकाले आरक्तपाणितलसंयोगे-नेत्यर्थः, रक्तरक्तः,—रक्तवर्णसदृशः इत्यर्थः, ["प्रकारे गुणवचनस्य" (८।१।१२ पा० ) इत्यस्य वृत्तौ "गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यन्ते" इत्युक्तेः केवलगुणवाचिनः रक्तशब्दस्य द्विर्भावः, एवं "गौरगौरः" "नीलनीलः" इत्यत्रापि बोद्धव्यम् ] भूमौ—क्षितौ, निक्षिप्तः सन् भूमौ अवस्थानसमये इत्यर्थः, तच्चरणनखांशु-गौरगौरः,—तस्याः,—प्रमदायाः, चरणनखानां—पादनखराणां, चन्द्रबिम्बवत् सुविशदानामिति भावः ; अंशुभिः,—प्रभाभिः, शुभ्रकिरणैरित्यर्थः, गौरगौरः,—शुभ्रवर्णसदृशः, तथा खःस्थः सन्—खः,—व्योम्नि, तिष्ठतीति तादृशः सन्, उत्पत्य आकाशस्थः सन्, ("खः प्रेत्य व्योम्नि नाके च" इति मेदिनी । "खस्थः" इति पाठेऽपि स एवार्थः ) नयनमरीचिनीलनीलः,—नयनमरीचिना—नेत्रप्रभया, आकाशोत्पतन-समये कन्दुकवेगदर्शनकौतुकेन उन्मुख्याः इन्दीवरनयनायाः प्रमदाया नेत्ररश्मि-सम्पर्केणेत्यर्थः, नीलनीलः,—कृष्णवर्णसदृशः, अत एव एकोऽपि—एकसङ्ख्यः सन्नपि, त्रय इव—अवस्थाभेदेन वर्णत्रयात्मा त्रिसङ्ख्यक इवेत्यर्थः, भाति—विराजते । प्रहर्षिणी वृत्तम् ॥ २ ॥

पयोधरेति ।—कन्दुकः,—अयं गेन्दुकः, हि—यतः, पयोधराकारधरः,—

> इतीव नेत्राऽऽकृतिभीतमुत्पलं
> स्त्रियः प्रसादाय पपात पादयोः" ॥ ३ ॥

तदा राजा तुष्टः (ख) त्रयाणामक्षरलक्षं ददौ, विशेषेण च कालिदासमदृष्टावतंसकुसुमपतनबोद्धारं सम्मानितवान्।

[ इति भोज-कवित्रयसंवादः ]।

धरतीति धरः [ "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( ३।१।१३४ पा० ) इति पचादित्वादच् ] पयसः,—दुग्धस्य, धरः,—आधार इत्यर्थः, पयोधरः,—स्त्रियाः स्तनः, ("पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि" इति मेदिनी ) तयोः आकारम्—आकृतिं, पयोधराकारं—स्तनसादृश्य, धरति—वहति यस्मादयः स्तनसाम्यधृक्, अतः रोषात्—कोपात्, दुर्वृत्तस्य ईदृशी स्पर्द्धा यत् मम चतुलनीयेन पयोधरेण साम्यं दधाति, अस्य स्पर्द्धा अवश्यमेव दमनीया इति कोपादित्यर्थः, करेण—पाणिना, मुहुः,—पुनः पुनः, अभिहन्यते—ताड्यते, कन्दुकधारिण्या इति शेषः, नेयं क्रीडार्थं कन्दुकम् आभिहन्ति, किन्तु स्वकीयस्तनसाम्योद्वहनात् क्रोधेन चपेटाघातं करोति इति भावः; इतीव—एतदवलोक्येव, समताधारणेन दण्डदर्शनादिवेत्यर्थः, नेत्राकृतिभीतं—नेत्राकृतेः,—नयनाकारात्, तस्यास्तस्याः कन्दुकधारिण्याः नयनसाम्यधारणादित्यर्थः, भीतं—स्वस्यापि प्रहारलाभं निश्चित्य शङ्कितम्, उत्पलं—नयनोपमं कर्णभूषणीभूतं कुवलयं, स्त्रियः,—कन्दुकं प्रहरन्त्याः कान्तायाः, प्रसादाय—प्रसन्नतायै, प्रसन्नतासम्पादनार्थमित्यर्थः, पादयोः,—चरणयोः, पपात—आत्मानं निचिक्षेप, "तद्भ्रमणवेगेन पादयोः पतितावतंसाम्" इति यदुक्तं तत्र अवतंसस्य पादपतनं कन्दुकभ्रमणवेगेन न, किन्तु त्वन्नेत्रसाम्यधारणापराधोऽयं मे क्षन्तव्यः इति प्रसादविधानार्थमिव पादपतनम् उत्पलेन कृतमित्यवगन्तव्यमिति भावः; पीनोन्नतसुवर्तुलस्तनौ कुवलयाक्षी चेयमिति तात्पर्य्यम्। वंशस्थविलं वृत्तम् ॥ ३ ॥

( ख ) त्रयाणां—भवभूतिवररुचिकालिदासानाम्। अदृष्टेति।—अदृष्टस्य—अप्रत्यक्षीकृतस्य, अवतंसकुसुमपतनस्य—कन्दुकभ्रमणवेगेन पादयोः कर्णभूषणीभूतोत्पलच्यवनस्य, बोद्धारं—ज्ञातारम्। सम्मानितवान्—धनादिना समादृतवान्, अप्रत्यक्षीकृतस्य अश्रुतस्य च वस्तुनः प्रत्यक्षदृष्टवत् वर्णनाकरणादिति भावः।

# भोज-शिवशर्म्मसंवादः ।

ततः कदाचित् (क) चित्रकर्मावलोकनतत्परः राजा चित्रलिखितं (ख) महाशेषं दृष्ट्वा—"सम्यक् लिखितम्" इत्यवदत् । तदा कश्चिच्छिवशर्मा नाम कविः शेषमिषेण राजानं स्तौति,—

"अनेके फणिनः सन्ति भेकभक्षणतत्पराः ।
एक एव हि शेषोऽयं धरणीधरणक्षमः" ॥ १ ॥

तदानीं राजा तदभिप्रायं ज्ञात्वा तस्मै लक्षं ददौ ।

[ इति भोज-शिवशर्म्मसंवादः ] ।

( क ) चित्रकर्म्मावलोकनतत्परः,—चित्रकर्म्मणः,—चित्रम्—आलेख्यं, चित्रपटे अङ्कितं वस्तु इत्यर्थः, तदेव कर्म्म, तस्य अवलोकने—दर्शने, तत्परः,—आसक्तः ।

( ख ) महाशेषं—वृहदाकारं सहस्रफणमनन्तदेवम् । सम्यक्—साधु, उत्तममित्यर्थः । लिखितं—चित्रितम् ।

शेषवर्णनाच्छलेन भोजस्य प्रजारक्षकत्वं विवृणोति, अनेके इति ।—भेकभक्षणतत्पराः,—दुर्बलमण्डूकग्रसननिपुणाः, फणासत्त्वेऽपि न धरणीधारणक्षमाः इति भावः ; अनेके—बहवः, फणिनः,—फणाधारिणः सर्पाः, सन्ति—विद्यन्ते, तेषां फणास्तु केवलं भेकानां त्रासनार्थं भक्षणार्थञ्च, न तु कस्यचिदपि किञ्चिदप्युपकारसाधनार्थमिति भावः ; किन्तु अयम—एषः, एकः,—केवलः, शेष एव—फणिषु अनन्तदेव एव, हि—निश्चये, धरणीधरणक्षमः,—पृथ्वीभारवहनसमर्थः, न तु भेकभक्षणतत्पर इति भावः ; अन्ये बहवः भूपालाः सन्ति, ते तु केवलं प्रजाशोषणनिपुणाः, न तासां रक्षणनिपुणाः, किन्तु अयमेको भोज एव प्रजारक्षणतत्परः इति तात्पर्य्यम् ; राज्यभारवहनक्षमः अयमेक एव सम्राट् अयमेव शेषश्च, एतत्सदृशः न भूतो न भविष्यति इत्यर्थश्च व्यज्यते ॥ १ ॥

# हसन्तीवर्णनप्रसङ्गे भोज-कालिदाससंवादः ।

कदाचिद्धेमन्तकाले समागते (क) ज्वलन्तीं हसन्तीं संसेवयन् राजा कालिदासं प्राह,—"सुकवे ! हसन्तीं वर्णय" इति । ततः सुकविराह,—

"कविमतिरिव बहुलोहा सुघटितचक्रा प्रभातवेलेव ।
हरमूर्त्तिरिव हसन्ती भाति विधूमानलोपेता" ॥ १ ॥

राजा प्रत्यक्षरलक्षं ददौ ।

[ इति हसन्तीवर्णनप्रसङ्गे भोज-कालिदाससंवादः ] ।

(क) ज्वलन्तीं—प्रदीप्यमानाम् । [ ज्वल + शतृ + ङीप् + द्वया १ व० ] । हसन्तीम्—अङ्गारधानिकां, लौहमयाग्न्याधारमित्यर्थः । ( "अङ्गारधानिकाऽङ्गारशकट्यपि हसन्त्यपि । हसन्यपि" इत्यमरः ) । संसेवयन्—अग्निसेवनार्थं दददित्यर्थः । [ सम् + सेव + णिच् + शतृ ] ।

कविमतिरिति ।—कविमतिरिव—कवयितॄणां बुद्धिरिव, कविप्रतिभेवेत्यर्थः, बहुलोहा—बहुलः—प्रभूतः, ऊहः,—अध्याहारः यत्र तादृशी, विविधप्रकारोह्रावगमशक्तिसमन्विता इत्यर्थः, अन्यत्र—बहु—प्रभूतं, लोहं—लोहं यत्र तादृशी, प्रभूतलोहेन निर्म्मिता, प्रभातवेलेव—प्रभाते—प्रत्यूषे, वेलेव—अब्धिकूलमिव, यद्वा —प्रभातवेलेव—प्रत्यूषकाल इव, ("वेला काले च सीमायामब्धेः कूलविकारयोः" इति मेदिनी ) सुघटितचक्रा—सुघटितः,—सम्मिलितः, चक्रः,—कोकः, चक्रवाकः इत्यर्थः, यत्र सा तादृशी, निशागमे चक्रमिथुनं परस्परं विच्छिद्य जलाशयस्य उभयतटे विराजते प्रभातागमे च पुनः सम्मिलितं भवति इति हि कविसमयप्रसिद्धिः, विरहानन्तरं प्रभातकाले, प्रभाते अब्धितटे वा सम्मिलितचक्रदम्पतीत्यर्थः, अन्यत्र—सुघटितं—सुयोजितं, चक्रं—रथाङ्गं, स्थानात् स्थानान्तरनयनार्थं रथचक्राकारं चक्रमित्यर्थः, यत्र तादृशी, ("चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथाङ्गयोः" इति मेदिनी ) चक्रसम्बद्धा ; दृश्यते च लोके अङ्गारशकटी शकटाकारा चक्रसंयुक्ता एव भवतीति ; हरमूर्त्तिरिव—शिवतनुरिव, विधूमानलोपेता—विधुः,—चन्द्रः, उमा

# समस्यापूरणे भोज-कालिदाससंवादः।

एकदा भोजराजः (क) अन्तर्गृहे भोगार्हास्तुल्यगुणाश्चतस्रो निजाङ्गना अपश्यत्। तासु च कुन्तलेश्वरपुत्र्यां पद्मावत्याम् ऋतुस्नानम्, अङ्गराजस्य (ख) पुत्र्यां चन्द्रमुख्यां क्रमप्राप्तिं, कमलानाम्न्याश्च द्यूतपणजयलब्धप्राप्तिम्, अग्रमहिष्यां लीला-देव्यां दूतीप्रेषणमुखेनाह्वानञ्च एवं चतुरो गुणान् दृष्ट्वा तेषु गुणेषु न्यूनाधिकभावं चिन्तयन् तत्र सर्वत्र दाक्षिण्यनिधिः

---

—पार्वती, अनलः,—अग्निः, ललाटस्थतृतीयनेत्रमित्यर्थः, तस्य अग्निमयत्वात्, तेन तैः उपेता—संयुक्ता, चन्द्रपार्वतीतृतीयनयनसहिता, हरस्य चूडायां चन्द्रः वामाङ्गे गौरी ललाटे च अग्निमयं नयनं विद्यते; अन्यत्र—विधूमेन—धूमविरहितेन, अनलेन—अग्निना, उपेता—युक्ता, निर्धूमाङ्गारपूर्णा, हसन्ती—अङ्गारशकटी, भाति —प्रकाशते। आर्य्यावृत्तम् ॥ १ ॥

---

(क) अन्तर्गृहे—गृहाभ्यन्तरे। भोगार्हाः,—सम्भोगयोग्याः, तरुणीत्वात् कारणविशेषाद्वा तद्दृहरेव सम्भोगोपयोगिनीरित्यर्थः। तुल्यगुणाः,—समानगौरवाः, समानरूपादिगुणविशिष्टत्वात् अविशेषेण समादरणीया इत्यर्थः।

(ख) ("पुत्र्याम्" इत्यत्र "भगिन्याम्" इति पाठः समीचीनः, वक्ष्यमाण-श्लोके "वारोऽङ्गराजस्वसुः" इत्युक्तेः)। क्रमप्राप्तिं—क्रमेण—पर्य्यायेण, वारानुसारेणेत्यर्थः, क्रमस्य वा प्राप्तिं—लाभं, नियमानुसारेण चन्द्रमुखीसमीपगमनदिनसमागमनमित्यर्थः। द्यूतपणजयलब्धप्राप्तिं—द्यूते—द्यूतक्रीडायां, पणः,—मम जयलाभे सति एवमेवं त्वया कर्त्तव्यमित्येवं पुरस्कारनियमः, तत्र जयात्—विजयलाभात्, लब्धप्राप्तिं—तत्समीपगमन-दिनसमागममित्यर्थः। अग्रमहिष्यां—प्रधानराज्ञ्याम्। गुणान्—कार्य्यगुरुत्वरूपा-नित्यर्थः। तत्र सर्वत्र—तासु सर्वासु। दाक्षिण्यनिधिः,—समानानुरागसम्पन्न

राजराजः श्रीभोजः तुष्णीभावेन द्वित्रिघटिकापर्य्यन्तं विचिन्त्य विशेषानवधारणेन निद्रां गतः। प्रातरुत्थाय कृताह्निकः सभामगात्। तत्र च सिंहासनमलङ्कुर्वाणः श्रीभोजः (ग) सकल-विद्वत्कविमण्डलमण्डनं कालिदासमालोक्य,—"सुकवे! इमां त्र्यक्षरोनतुरीयचरणां समस्यां शृणु" इत्युक्त्वा पठति,—

"अप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः"।

इति पठित्वा राजा कालिदासमाह,—"सुकवे! एतत्-समस्यापूरणं कुरु" इति। ततः कालिदासः तस्य हृदयं (घ) करतलामलकवत् प्रपश्यन् त्र्यक्षराधिकचरणत्रयविशिष्टां तां समस्यां पठति,—"देव!—

स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूतैरात्रिरियं जिता कमलया देवी प्रसाद्याऽधुना

इत्यर्थः, दक्षिणनायक इति भावः। द्वित्रिघटिकापर्य्यन्तं—द्वित्रिदण्डपर्य्यन्तम्। विशेषानवधारणेन—कर्त्तव्यनिश्चयाक्षमतया इत्यर्थः।

(ग) सकलविद्वत्कविमण्डलमण्डनं—सकलानां—सर्वेषां, विदुषां—सुधीनां, कविमण्डलानां—कवयितृसमूहानां, मण्डनं—भूषणं, सर्वश्रेष्ठतया अलङ्कारस्वरूप-मित्यर्थः। त्र्यक्षरोनतुरीयचरणां—त्र्यक्षरेण—अक्षरत्रयेण, ऊनः,—न्यूनः, तुरीय-चरणः,—चतुर्थपादः यस्यास्तादृशीम्, अक्षरत्रयहीनान्त्यपादाम्। समस्यां—समासार्थां, पूरणसाकाङ्क्षामित्यर्थः, कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमानामिति यावत्।

(घ) करतलामलकवत्—पाणितलस्थामलकफलमिव सुस्पष्टमित्यर्थः।

स्नातेति।—कुन्तलेश्वरसुता—कुन्तलाख्यजनपदाधीशस्य तनया, स्नाता—ऋतुस्नाता सती, तिष्ठति—वर्त्तते, "ऋतौ भार्य्यामुपेयात्" इति शास्त्रानुसारेण सा अवश्यमेव गम्या इति भावः; अङ्गराजस्वसुः,—अङ्गदेशाधिपतेः भगिन्याः, वारः,—गमनाय नियमितो दिवसः, नियमितविधेः अवश्यपालनीयत्वात् साऽपि गमनीयैव इति भावः; कमलया—तन्नाम्न्या राज्ञ्या, इयम्—उपस्थिता, रात्रिः,—रजनी, द्यूतैः,—राज्ञा सह अक्षक्रीडनैः, जिता—पणत्वेन आयत्तीकृता, यद्ि

इत्यन्तःपुरसुन्दरीजनगुणे न्यायाधिकं ध्यायता
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः"॥१॥

तदा राजा स्वहृदयमेव ज्ञातवतः कालिदासस्य पादयोः पतति स्म। कविमण्डलञ्च चमत्कृतमजायत।

एकदा राजा धारानगरे विचरन् क्वचित् पूर्णकुम्भं धृत्वा समायान्तीं पूर्णचन्द्राननां काञ्चिद्दृष्ट्वा तत्कुम्भजले प्रध्वस्य कञ्चन श्रुत्वा "नूनमेव तस्याः कण्ठग्रहेऽयं घटः रतिकूजितमिव कूजति" इति मन्यमानः सभायां कालिदासमाह,—

"कूजितं रतिकूजितम्" इति। कविराह,—

---

द्यूतक्रीडायां तव पराजयः स्यात्, तदा अमुकी रात्रिः मया सह यापयितव्या इत्येवं नियमेन जयलाभात् तया सह अवस्थानाय निरूपिता, अत एव पराजितस्य विजेतृवश्यवर्तित्वात् साऽपि अवश्यमेव सम्मानीयेति भावः; तथा देवी—प्रधाना महिषी लीलादेवी, अधुना—अद्य, प्रसाद्या—प्रसादनीया, अनुनेया इत्यर्थः, दूतीमुखेनाह्वानरूपं तस्या आदेशं पालयित्वा साऽपि प्रसन्ना करणीया, अन्यथा कोपिष्यतीति भावः; यद्वा,—स्वयं कृतापराधत्वात् कुपितायाः देव्याः कोपोऽपनयनीयः, अत एव साऽपि अवश्यमेव सम्मानीया इति भावः; ("देवी प्रसाद्याऽद्य च" इति पाठान्तरम्) इति—इत्थम्, अन्तःपुरसुन्दरीजनगुणे—अन्तःपुरसुन्दरीजनानाम्—अवरोधस्थवामलोचनासमूहानां, गुणे—गौरवरूपे इत्यर्थः, सम्माननाविषये इति यावत्, न्यायाधिकं—न्यायस्य—उचितस्य, अधिकम्—आधिक्यमित्यर्थः, कस्याः समीपे गमनम् अधिकतया न्याय्यं भविष्यति इति यावत्, ("न्यूनाधिकम्" इति पाठः समीचीनः) ध्यायता—चिन्तयता, [ध्यै+शतृ+इ या १ व०] ("इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते" इति पाठान्तरम्) देवेन—भोजेन, अप्रतिपत्तिमूढमनसा—अप्रतिपत्त्या—अप्रबोधेन, इतिकर्तव्यतानिर्णयाक्षमत्वेनेत्यर्थः, मूढं—विभ्रान्तं, मनः,—चित्तं यस्य तादृशेन, किंकर्तव्यव्याकुलचेतसा सता इत्यर्थः, द्वित्राः,—द्वे वा तिस्रो वा, ["संख्यायाः अल्पीयस्याः" (वा०) इति द्विशब्दस्य पूर्वनिपातः। "बहुव्रीहौ सङ्ख्येये डजबहुगणात्" (५।४।७३ पा०) इति डच्] नाडिकाः,—घटिकाः, द्विप्रहरकं व्याप्य इत्यर्थः, स्थितं—तूष्णीमवस्थितम्। शार्दूलविक्रीडितं वृत्तम्॥१॥

"विदग्धे सुमुखे रक्ते नितम्बोपरि संस्थिते।
कामिन्याश्लिष्टसुगले कूजितं रतिकूजितम्" ॥ २॥

तदा तुष्टो राजा प्रत्यक्षरलक्षं ददौ ननाम च।

[ इति समस्यापूरणे भोज-कालिदाससंवादः ]।

---

## शिलालिपिपाठे भोज-कविद्वयसंवादः।

एकदा नर्मदायां महाह्रदे (क) जालिकैरेकः शिलाखण्ड ईषद्दृशिताक्षरः क्वचिद्दृष्टः। तैश्च परिचिन्तितम्,—"इदमत्र लिखितमिव किञ्चिद्भाति, नूनमिदं राजनिकटं नेयम्" इति बुद्ध्वा

---

भोजपठितां समस्यां पूरयितुमाह, विदग्धे इति।—सुमुखे—सुन्दरवदने, अन्यत्र—सु—प्रशस्तं, मुखं—शब्दः यस्य तस्मिन्, कलकलादिति श्रुतिसुखाव्यक्तशब्दकारिणि इत्यर्थः, यद्वा,—सु—प्रशस्तं, मुखं—जलनिःसरणस्थानं यस्य तादृशे, विस्तृतोर्द्धभागे इत्यर्थः, ("मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि। सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्" इति मेदिनी) रक्ते—अनुरागिणि, रक्तवर्णे च, नितम्बोपरिसंस्थिते—एकत्र—सुरतार्थं नितम्बारूढे, अन्यत्र—वहनार्थं कटीदेशस्थापिते इत्यर्थः, विदग्धे—नागरे, चतुरप्रणयिनि जने इत्यर्थः, अन्यत्र—वि—विशेषेण, दग्धे—अग्निपुष्टे, कुम्भकारेणेति शेषः, घटे इति भावः; कामिन्याश्लिष्टसुगले—कामिन्या—नायिकया, आश्लिष्टः,—आलिङ्गितः, सुगलः,—शोभनकण्ठदेशो यस्य तादृशे सति, अन्यत्र—कामिन्या—जलवाहिन्या रमण्या, आश्लिष्टः,—वेष्टितः, सुगलः,—धारणसुखकरग्रीवादेशो यस्य तादृशे सति, यत् कूजितम्—अव्यक्तशब्दः, जातमिति शेषः, तत् रतिकूजितं—रतिकालीनाव्यक्तध्वनिविशेषं, वयं मन्यामहे इति शेषः; रसाधारः अचेतनः विदग्धो घटोऽपि कामिन्याश्लिष्टः नितम्बारोपितश्च कूजति इत्यहो! चित्रम्॥ २॥

---

(क) जालिकैः,—जालोपजीविभिः, धीवरैरित्यर्थः। ईषद्दृशिताक्षरः,—किञ्चिद्दृष्टवर्णः।

भोजसदसि समानीतम्। तदाकर्ण्य भोजः प्राह,—"पूर्वं भगवता हनुमता श्रीमद्रामायणं कृतं, तदत्र ह्रदे प्रक्षेपितमिति श्रुतमस्ति; ततः किमिदं लिखितमित्यवश्यं विचार्य्यमिति लिपिज्ञानं कार्य्यम्। (ख) जतुपरीक्षयाऽक्षराणि परिज्ञाय पठतु"। तत्र चरणद्वयमानुपूर्व्या लब्धम्,—

"अयि! खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्म्मणां विपाकः"।

ततो भोजः प्राह,—"एतस्य पूर्वार्द्धं कथ्यताम्" इति। तदा भवभूतिराह,—

"क्व नु कुलमकलङ्कमायताक्ष्याः
क्व नु रजनीचरसङ्गमापवादः।
अयि खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्म्मणां विपाकः"॥ १॥

(ख) जतुपरीक्षया—जतु—लाक्षा, तेन या परीक्षा—वस्तुनिरूपणं तया, विद्राविततलाक्षायाः शिलाखण्डोपरिसंस्थापनरूपेणोपायेनेत्यर्थः।

सीतादेव्याः राक्षसपुरीवासमवलम्ब्य श्लोकस्य पूर्वार्द्धमाह, क्वेति।—आयताक्ष्याः,—विशाललोचनायाः; सीताया इति भावः; अकलङ्कं—पवित्रमित्यर्थः, कुलं—वंशः, विदेहवंशः रघुवंशो वा इत्यर्थः, क्व नु?—कुत्र खलु? रजनीचरसङ्गमापवादः,—रजनीचरेण—निशाचरेण, रावणेनेत्यर्थः, सह सङ्गमः,—मिलनं, सम्भोग इत्यर्थः, स एव अपवादः,—कुत्सा, क्व नु?—कुत्र खलु?, क्वद्वयमुभयोर्महदन्तरं सूचयति, यस्मिन् कुले सीतादेव्याः जन्म, यस्य वंशस्य वधूर्वा सा, तस्मिन् वंशे राक्षसापवादः नैव सङ्गच्छते इति भावः; तथाऽपि यत् अपवादः सङ्घटितः, तत्र हेतुं वितर्कयति, अयीति।—हि—तथाहि, अयि!—भोः!, जन्तुषु—प्राणिषु, पुराकृतानां—पूर्वजन्माचरितानां, कर्म्मणाम्—अशुभकार्य्याणाम्; विषमविपाकित्वादिति भावः; विपाकः,—परिणामः, विषमः,—सुदुःसहः, भवति खलु—भवत्येव; ईदृशमकलङ्ककुलजातायाः स्वयमपि अतीव पुण्यचरितायाः सीतादेव्याः यः अपवादः संघटितः, स खलु प्राक्तनदुष्कृतस्य एव दुष्टविपरिणाम इति भावः। पुष्पिताग्रा वृत्तम्॥ १

ततो भोजस्तत्र (ग) ध्वनिदोषं मन्वानस्तदेव पूर्वार्द्धमन्यथा पठति स्म,—

"क्व जनकतनया क्व रामजाया
क्व च दशकन्धरमन्दिरे निवासः।
अयि! खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्म्मणां विपाकः"॥ २॥

ततः भोजः कालिदासं प्राह,—"सुकवे! त्वमपि (घ) कविहृदयं पठ" इति। स आह,—

"शिवशिरसि शिरांसि यानि रेजुः
शिव! शिव! तानि लुठन्ति गृध्रपादे।

(ग) ध्वनिदोषं—ध्वनेः,—"वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम्" इत्युक्तलक्षणस्य उत्तमकाव्यपरिचायकस्य काव्यशोभाविशेषस्य, दोषं—न्यूनतारूपं गुणाभावमित्यर्थः; "क्व नु" इत्यादि पूर्वार्द्धे "कलङ्कम्" "अपवादः" इति पदद्वयस्य स्फुटतया उल्लेखात् अत्र ध्वनिदोषोऽवगन्तव्यः।

क्वेति।—जनकतनया—जनकस्य—वैदेहस्य, अतिपवित्रचरितस्य योगिश्रेष्ठस्येति भावः; तनया—दुहिता, क्व?—कुत्र?, रामस्य—राघवस्य, सवितृकुलसम्भूतस्येति भावः; जाया—पत्नी, क्व?—कुत्र?, दशकन्धरमन्दिरे—दशकन्धरस्य—दशग्रीवस्य, रावणस्येत्यर्थः, मन्दिरे—गृहे, निवासः,—अवस्थितिश्च, क्व?—कुत्र? पवित्रराजर्षिवंशसम्भूतायाः महापराक्रान्तरघुकुलस्य वध्वाः स्वयमप्यतिपूतायाश्च सीतादेव्याः सुदूरवर्त्तिलङ्काद्वीपेश्वरस्य भवने वास एव नैव सङ्गच्छते इत्यर्थः; तथाऽपि यत् अपवादः संरटित इत्यादि पूर्ववत् व्याख्येयम्। पुष्पिताग्रा वृत्तम्॥ २॥

(घ) कविहृदयं—कवेः,—रचयितुः, हृदयं—मानसं, मनोभावमित्यर्थः। पठ—अनुमीय वर्णयेत्यर्थः।

शिवेति।—यानि शिरांसि—मस्तकानि, शिवशिरसि—शिवस्य—हरस्य, शिरसि—मूर्द्ध्नि, रेजुः,—बभुः, कदाचिदिति शेषः, माल्यस्वरूपतया इति भावः; शिवस्य मुण्डमालित्वे उदाहरणं—"श्मशानेष्वाक्रीडाः स्मरहर! पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटिपरिकरः" इति महिम्नः स्तवे "स्रगपि नृकरोटिपरिकरः" इत्यनेन लभ्यते; शिव! शिव!—हा शिव! हा शिव! इति खेदातिशयव्यञ्जकः

अयि ! खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्म्मणां विपाकः"॥ ३ ॥

ततस्तस्य शिलाखण्डस्य (ङ) पूर्वपुटे जतुशोधनेन कालिदासः पठति। तमेव दृष्ट्वा राजा भृशं तुतोष।

[ इति शिलालिपिपाठे भोज-कविद्वयसंवादः ]।

## ब्रह्मराक्षसापसरणे भोज-कालिदाससंवादः।

कदाचिद्भोजेन विलासार्थं नूतनगृहान्तरं निर्म्मितम्। तत्र गृहान्तरे गृहप्रवेशात् पूर्वमेव कश्चित् ब्रह्मराक्षसः प्रविष्टः; स च रात्रौ तत्र ये वसन्ति, तान् भक्षयति। ततो (क) मान्त्रिकान् समाहूय तदुच्चाटनाय राजा यतते स्म। स च आगच्छन्नेव

प्रयोगः, तानि—हरशिरसि शोभमानानि शिरांसि, गृध्रपादे—"शकुनि" इति प्रसिद्धस्य मांसाशिपक्षिविशेषस्य चरणे, लुठन्ति—प्रतिघ्नन्ति, "अयि खलु" इत्यादि पूर्ववत्। शिवः यानि शिरांसि विभूषणानि मत्वा शिरसि धारयन्ति, तानि गृध्रपददलितान्यपि भवन्ति, अत्र खलु प्राक्तनकर्म्मणः परिणाम एव हेतुरिति निष्कर्षः। पुष्पिताग्रा वृत्तम् ॥ ३ ॥

(ङ) पूर्वपुटे—पूर्वपार्श्वे, ऊर्द्धभागे इत्यर्थः, लिखितस्य "अयि खलु" इत्यादि श्लोकार्द्धस्य उपरिभागे इति यावत्। जतुशोधनेन—विशुद्धलाक्षया मुद्रणेनेत्यर्थः, यथा अक्षरसमूहः परिस्फुटतया मुद्रितो भवति, तथा करणेनेति यावत्। पठति—वाचयति, श्लोकं "शिवशिरसि" इत्याद्यंशं स्फुटतया जतुनि मुद्रितमिति भावः।

(क) मान्त्रिकान्—मन्त्रज्ञान्, भूतविद्यानिपुणानित्यर्थः। तदुच्चाटनाय—ब्रह्मराक्षसस्य उत्सारणाय।

मान्त्रिकानेव भक्षयति, किञ्च स्वयं कवितादिकं (ख) पूर्वाभ्यस्तमेव पठन् तिष्ठति। एवं स्थिते तत्रैव रक्षसि, राजा—"कथमस्य निवृत्तिः?" इति व्यचिन्तयत्। तदा कालिदासः प्राह,—"देव! नूनमयं राक्षसः सकलशास्त्रप्रवीणः सुकविश्च भाति। अतस्तमेव तोषयित्वा कार्य्यं साधयामि, मान्त्रिकास्तावत्तिष्ठन्तु, मम मन्त्रं पश्य" इत्युक्त्वा स्वयं तत्र रात्रौ गत्वा शेते स्म। ततः प्रथमयामे ब्रह्मराक्षसः समागतः। स च (ग) अपूर्वं पुरुषं दृष्ट्वा प्रतियाममेकैकां समस्यां पाणिनिसूत्रमेव पठति। येनोत्तरं (घ) तद्धृदयगतं नोक्तम् "अयं न ब्राह्मणोऽतो हन्तव्यः" इति निश्चित्य तं हन्ति। तदानीमपि पूर्ववदयम् "अपूर्वः पुरुषः, अतो मया समस्या पठनीया, न चेद्वक्ति सदृशमुत्तरं तस्याः, तदा हन्तव्यः" इति बुद्ध्या पठति,—

"सर्वस्य द्वे—"

इति। तदा कालिदासः प्राह,—

"—सुमतिकुमती सम्पदापत्तिहेतू"

इति। ततः स गतः। पुनरपि द्वितीययामे समागत्य पठति,—

(ख) पूर्वाभ्यस्तं—पूर्वं—प्राक्, नरदेहे इत्यर्थः, अभ्यस्तं—शिक्षितमित्यर्थः।

(ग) अपूर्वं—पूर्वमदृष्टं, नवागतमित्यर्थः।

(घ) तद्धृदयगतं—तस्य—ब्रह्मराक्षसस्य, हृदयगतं—चित्तगतं, स्वाभिप्रायानुरूपमित्यर्थः। अयं न ब्राह्मणः; विद्याऽभावादिति भावः।

एकस्मिन्नेव श्लोके पाणिनेः सूत्रचतुष्टयमन्यार्थे प्रयुक्तमुपजीव्य ब्रह्मराक्षसेन पृष्टां समस्यां कालिदासः अन्यार्थकतया सुसङ्घटितां कृत्वा पूरयति, सर्वस्येति। —सुमतिकुमती—सुबुद्धिदुर्बुद्धी, द्वे—द्वयं, सर्वस्य—सकलस्य लोकस्य, सम्पदापत्तिहेतू—सम्पदः,—अभ्युदयस्य, अनापत्तेरिति यावत्, आपत्तेः,—विपदश्च, हेतू—निमित्ते, उन्नत्यवनतिकारणभूते, भवत इति शेषः, सुमतिः सम्पत्कारणं कुमतिश्च विपत्कारणं भवतीत्यर्थः, यूना—तरुणेन, सह—सार्द्धं, परिचयात्—संस्तवात्,

"वृद्धो यूना—"

इति। तदा कविराह,—

"—सह परिचयात् त्यज्यते कामिनीभिः"।

इति। तृतीययामे स राक्षसः पुनस्तमागत्य पठति,—

"एको गोत्रे—"

इति। ततः कविराह,—

"—प्रभवति पुमान् यः कुटुम्बं बिभर्त्ति"

ततश्चतुर्थयामे आगत्य स राक्षसः पठति,—

"स्त्री पुंवच्च—"

इति। ततः कविराह,—

"—प्रभवति यदा तद्धि गेहं विनष्टम्" ॥१॥

इति। ततः स राक्षसो यामचतुष्टयेऽपि स्वाभिप्रायमेव ज्ञात्वा तुष्टः प्रभातसमये समागत्य तमाश्लिष्य प्राह,—"सुमते! तुष्टोऽस्मि, किं तवाभीष्टम्?" इति। कालिदासः प्राह,—

---

संलापादिजनितसम्पर्कादित्यर्थः, कामिनीभिः,—नारीभिः, युवतीभिरिति भावः; वृद्धः,—स्थविरः, पूर्वप्रणयीति भावः, त्यज्यते—वर्ज्यते; यः पुमान्—पुरुषः, कुटुम्बं—पोष्यवर्गं, ("कुटुम्बं पोष्यवर्गे च" इत्यमरमाला) बिभर्त्ति—पोषयति, प्रतिपालयतीत्यर्थः, गोत्रे—वंशे, वंशमध्ये इत्यर्थः, एकः,—केवलः स एवेत्यर्थः, प्रभवति—आधिपत्यं करोति, यद्वा—यः कुटुम्बं बिभर्त्ति, गोत्रे पुमान्—कुटुम्बपोषकत्वात् पुमान् इत्युपाधिकः, स एक एव प्रभवति, ("कुटुम्बव्यापृतस्तु यः। स्यादभ्यागारिकस्तस्मिनुपाधिश्च पुमानयम्" इत्यमरः)। यदा च—यस्मिंश्च काले, स्त्री—नारी, पुंवत्—पुरुष इव, प्रभवति—प्रभुत्वं करोति, स्वकीयस्त्रीसमाचारमुल्लङ्घ्य पुरुषवत् कर्त्तृत्वं करोतीत्यर्थः, यस्मिन् गृहे इति शेषः, तत्—तदा, गेहं—तद्भवनं, गृहस्थानां कल्याणमिति भावः; विनष्टं हि—अपध्वस्तमेव, भवतीति शेषः; स्त्री-बाल-वहुनायकानि गृहाणि अचिरविध्वंसीनि भवन्ति इति नीतिविदां सम्मतम्। मन्दाक्रान्ता वृत्तम् ॥ १ ॥

"भगवन्! एतद्गृहं विहायान्यत्र गन्तव्यम्" इति। सोऽपि—"तथा" इति गतः। अनन्तरं तुष्टो भोजः कविं बहुमानितवान्।

[ इति ब्रह्मराक्षसापसारणे भोज-कालिदाससंवादः ]।

---

## भोज-मल्लिनाथकविसंवादः।

एकदा सिंहासनमलङ्कुर्वाणे श्रीभोजे सकलभूपालशिरोमणौ द्वारपाल आगत्य प्राह,—"देव! दक्षिणदेशात् कोऽपि मल्लिनाथनामा कविः कौपीनावशेषो द्वारि वर्त्तते"। राजा,—"प्रवेशय" इत्याह। ततः कविरागत्य,—"स्वस्ति" इत्युक्त्वा तदाज्ञया चोपविष्टः पठति,—

"नागो भाति मदेन खं जलधरैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मन्दिरम्।
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं त्वया वसुमती लोकत्रयं भानुना" ॥१॥

---

किं कस्य उत्कर्षसाधकं भवति इति वर्णनमिषेण भोजोत्कर्षं प्रकटयति, नाग इति।—नागः,—गजः, मदेन—दानवारिणा, भाति—शोभते, खं—नभः, जलधरैः,—मेघैः, ("कं जलदैः" इति पाठान्तरम्) सर्वत्रैव भातीति शेषः, शर्वरी—निशा, पूर्णेन्दुना—पूर्णचन्द्रेण, प्रमदा—रमणी, शीलेन—चरित्रेण, सच्चरित्रतयेत्यर्थः, तुरगः,—अश्वः, जवेन—वेगेन, मन्दिरं—गृहं, नित्योत्सवैः,—सततमानन्दजनकानुष्ठानैः, वाणी—भारती, व्याकरणेन—शब्दव्युत्पादकशास्त्रेण, व्याकरणोक्तनियमानुयायिप्रयोगेणेत्यर्थः, नद्यः,—सरितः, हंसमिथुनैः,—हंसदम्पतीभिः, सभा—संसत्, पण्डितैः,—विद्वद्भिः, कुलं—वंशः, सत्पुत्रेण—उत्तमतनयेन, वसुमती—पृथिवी, त्वया—भवता भोजेन, लोकत्रयं—त्रिभुवनं, भानुना—सूर्य्येण, भातीति शेषः; मदाद्यभावेन नागादिकं नैव शोभते इति निष्कर्षः; नृपतिषु

ततो राजा प्राह,—"विद्वन्! तवोद्देश्यं किम्?" इति। ततः कविराह,—

"अम्बा कुप्यति न मया न स्नुषया साऽपि नाम्बया न मया।
अहमपि न तया न तया वद राजन्! कस्य दोषोऽयम्?" ॥२॥

इति। राजा च दारिद्र्यदोषं ज्ञात्वा कविं पूर्णमनोरथं चक्रे।

[इति भोज-मल्लिनाथकविसंवादः]।

## भोज-कविशेखरसंवादः।

एकदा द्वारपाल आगत्य राजानं प्राह,—"देव! कविशेखरो नाम महाकविर्द्वारि वर्त्तते"। राजा,—"प्रवेशय" इत्याह। ततः कविरागत्य,—"स्वस्ति" इत्युक्त्वा पठति,—

त्वमेव पृथिवीभूषणं, नान्यः कश्चिन्नृपतिः त्वत्समः गुणवानिति वक्तुराशयः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

कविर्भङ्ग्या स्वदारिद्र्यं प्रकटयति, अम्बेति।—अम्बा—मदीयजननी, कुप्यति—क्रुध्यति, किन्तु मया—मल्लिनाथेन, न, स्नुषया—वध्वा, मम पत्न्या इत्यर्थः, न, कुप्यते इति शेषः, अहं मातुः कोपकारणं किमपि नाचरामि, मम भार्य्याऽपि नाचरति, तथाऽपि सा किमर्थं कस्मै कुप्यति तन्न जाने इति भावः; साऽपि—स्नुषाऽपि, अम्बाया वधूरपि, कुप्यतीति पूर्वेण सम्बन्धः, किन्तु नाम्बया न मया, पूर्ववद्व्याख्येयम्; अहमपि—अयं मल्लिनाथोऽपि, कुप्यामि इति विभक्तिविपरिणामेन अन्वयः कार्य्यः, किन्तु न तया—न अम्बया, न तया—न वा स्नुषया, अत्रापि भावः पूर्ववदवगन्तव्यः; राजन्!—भो नरेश्वर! अयं दोषः,—अहेतुककोपकृतः एषः अपराधः कस्य?—कस्य जनस्य? वद—तत् कथय, ईदृशे कोपे वयं सर्वे एव निर्द्दोषाः, दारिद्र्यमेव अत्र मुख्यो हेतुः, दारिद्र्यदावदग्धानां स्नेहपीयूषधाराया अत्यन्ताभावादिति भावः। आर्य्या वृत्तम् ॥ २ ॥

"राजन्! दौवारिकादेव प्राप्तवानस्मि वारणम्।
मदवारणमिच्छामि त्वत्तोऽहं जगतीपते!"॥१॥

तदा प्राङ्मुखस्तिष्ठन् राजाऽतिसन्तुष्टस्तं प्राग्देशं सर्वं कवये दत्तं मत्वा दक्षिणाभिमुखोऽभूत्। ततः कविश्चिन्तयति,—"किमिदम्? राजा मुखं परावृत्य मां न पश्यति" इति। ततो दक्षिणदेशं समागत्याभिमुखः कविः पठति,—

"अपूर्वेयं धनुर्विद्या भवता शिक्षिता कथम्?।
मार्गणौघः समायाति गुणो याति दिगन्तरम्" ॥२॥

---

कविः श्लेषेण स्वाभिप्रायं प्रकटयति, राजन्निति।—राजन्!—भोः धराधिप!, दौवारिकादेव—प्रतीहारादेव, [वारणार्थकशब्दयोगादपादाने पञ्चमी] वारणं—निषेधं, गजञ्च, प्राप्तवान्—लब्धवान्, अस्मि—भवामि, अहमिति शेषः, दौवारिकः सभाप्रवेशोद्यतं मां प्रागेव न्यषेधदित्यर्थः; गजं दत्तवांश्चेत्यर्थः, जगतीपते!—भूपाल! त्वत्तः,—भवत्तः, अहं—सभाऽऽगतोऽहं, मदवारणं—मत्—मम, अवारणम्—अप्रतिषेधं, सभाप्रवेशाभ्यनुज्ञामित्यर्थः, यद्वा—मदस्य—गर्वस्य, वारणं—प्रतिषेधं, गर्वापनयनमित्यर्थः, मदस्राविगजञ्चेत्यर्थः, इच्छामि—अभिलषामि, प्राप्तुमिति शेषः॥ १ ॥

कविः श्लेषेण भोजस्य दिगन्तव्यापिकीर्त्तित्वं प्रकटयति, अपूर्वेति।—भवता—त्वया, अपूर्वा—पूर्वं क्वाप्यदृष्टा, लोकविलक्षणेत्यर्थः, इयम्—एषा, लोकैर्दृश्यमानेत्यर्थः, धनुर्विद्या—धनुर्वेदशिक्षा, कथं—केन प्रकारेण, केनोपायेनेत्यर्थः, शिक्षिता?—अभ्यस्ता? अपूर्वत्वमेव विवृणोति, मार्गणौघ इति।—मार्गणौघः,—बाणसमूहः, समायाति—समागच्छति, भवदभिमुखं प्रत्यागच्छतीत्यर्थः, अन्यत्र—मार्गणौघः,—याचकसमूहः, समायाति—याञ्चार्थं भवत्समीपं समागच्छतीत्यर्थः, ("मार्गणो याचके शरे। याञ्चाऽन्वेषणयोः क्लीवम्" इति मेदिनी) गुणः,—मौर्वी, दिगन्तरं—दिग्दिगन्तम्, अन्यत्र—गुणः,—यशःशौर्यादिकमित्यर्थः, दिगन्तरं—दिङ्मण्डलं, याति—गच्छति, व्याप्नोतीत्यर्थः, सशरशरासने आकृष्टे धनुर्गुणः स्वाभिमुखमायाति, शरसमूहश्च दिगन्तं याति, एष हि नैसर्गिको नियमः, भवतः शिक्षायामस्य वैपरीत्यमेव दृश्यते, एतदेव हि अपूर्वत्वम् इति, समागतानां याचकानामीप्सितपूरणेन भवतो दातृत्वख्यातिः दिगन्तव्याप्ता सञ्जाता इति च निष्कर्षः; दातृत्वगुणेन भुवनविदितकीर्त्तिर्भवानिति भावः॥ २ ॥

ततो राजा दक्षिणदेशमपि मनसा कवये दत्त्वा स्वयं (क) प्रत्यङ्मुखोऽभूत्। कविस्तत्रागत्य प्राह,—

"सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा।
पदमेकं न जानीषे वक्तुं नास्तीति याचके" ॥३॥

ततो राजा तमपि देशं (ख) कवेर्दत्तं मत्वा उदङ्मुखोऽभूत्। कविस्तत्रापि आगत्य प्राह,—

"सर्वदा सर्वदोऽसीति मिथ्या त्वं कथ्यसे बुधैः।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः" ॥४॥

---

(क) प्रत्यङ्मुखः,—पश्चिमाभिमुखः।

भङ्ग्या राज्ञः अविशेषेण अर्थिमनोरथपूरकत्वं विवृणोति, सर्वज्ञ इति।—अयं—परिदृश्यमानः, लोकः,—जनः, भवन्तं—त्वां, सर्वज्ञः,—सर्ववेत्ता, इति—एवं, मृषा—मिथ्या, भाषते—कथयति, भवान् सर्वज्ञ इति यत् लोको वदति, तत् मिथ्यैवेत्यर्थः। मृषात्वमेव विवृणोति, पदमिति।—यतः याचके—अर्थिनि, नास्ति—न विद्यते, धनमिति शेषः, अधुना अर्थप्राप्तिर्न भवतीति वा, इति—एतत्, एकम्—एकमात्रं, पदं—तिङन्तशब्दं, वक्तुं—कथयितुं, न जानीषे—न वेत्सि, [ ज्ञा + लट् से ] यः निखिलशास्त्राभिज्ञः, सः नास्ति इति पदं कथं न जानाति? जानाति चेत् कथं कदाऽपि न प्रयुङ्क्ते? अतः लोकोक्तिर्मृषैवेत्यर्थः; याचकान् कदाऽपि त्वं न विमुखीकरोषि, बुधाबुधनिर्विशेषेण सर्वेभ्य एव नित्यं ददासीति निष्कर्षः ॥ ३ ॥

(ख) कवेः,—कवये इत्यर्थः, [ सम्बन्धविवक्षया षष्ठी ]। उदङ्मुखः,—उत्तराभिमुखः।

भङ्ग्या राज्ञः शौर्य्यं जितेन्द्रियत्वञ्च विवृणोति, सर्वदेति।—सर्वदा—सर्वस्मिन् समये, सर्वदः,—सर्वप्रदाता, असि—भवसि, इति—एतत्, बुधैः,—विद्वद्भिः, त्वं—भवान्, मिथ्या—अनृतं, कथ्यसे—उच्यसे, भवान् सर्वस्मिन्नेव काले सर्वेभ्य एव स्वकीयं सर्वमेव वस्तु ददातीति यत् बुधा कथयन्ति, तत् मिथ्यैवेत्यर्थः; कथं मिथ्या? इत्याह, नारय इति।—यतः अरयः,—रिपवः, पृष्ठं—पश्चाद्भागं, न लेभिरे—न प्रापुः, न ददृशुरित्यर्थः, तथा परयोषितः,—परस्त्रियश्च, वक्षः,—उरःस्थलं, न, लेभिरे इत्यन्वयः, सर्वदश्चेत् भवान् कथं ते पृष्ठं परस्त्रियश्च वक्षः न लेभिरे? अतः सर्वदत्वमिति वचनं मिथ्यैवेत्यर्थः; महावीरो भवान् कदाऽपि

ततो राजा (ग) स्वां भूमिं कवेर्दत्तां मत्वा उत्तिष्ठति स्म। कविश्च तदभिप्रायमज्ञात्वा पुनराह,—

"राजन्! कनकधाराभिः त्वयि सर्वत्र वर्षति।
अभाग्यच्छत्रसंच्छन्ने मयि नायान्ति बिन्दवः" ॥५॥

तदा राजा च अन्तःपुरं गत्वा लीलादेवीं प्राह,—"देवि! सर्वं राज्यं कवये दत्तं, ततस्तपोवनं मया सहाऽऽगच्छ" इति। अस्मिन्नवसरे (घ) विद्वान् द्वारि निर्गतः बुद्धिसागरेण वृद्धामात्येन पृष्टः,—"विद्वन्! राज्ञा किं दत्तम्?" इति। स आह,—"न किमपि" इति। तदा अमात्यः प्राह,—"तवोक्तं श्लोकं पठ"। ततः कविः श्लोकचतुष्टयं पठति। अमात्यस्ततः प्राह,—"सुकवे! (ङ) तव कोटिद्रव्यं दीयते, परं राज्ञा यदत्र तव दत्तं भवति, तत्पुनर्विक्रीयताम्" इति।

---

अमुष्य: पृष्ठप्रदर्शनं न चकार, न च जितेन्द्रियो भवान् कदाऽपि परस्त्रिय-मालिङ्गितवान् इति भावः; निखिलशत्रुविजयी महावीरः जितेन्द्रियश्च भवान् इति तात्पर्य्यम् ॥४॥

(ग) स्वां भूमिं—क्रमात् चतुर्षु दिक्षु मुखपरावर्त्तनेन स्वीयसर्वं राज्यम्। उत्तिष्ठति स्म—देयवस्त्वन्तराभावात् उज्जगाम।

प्रत्युतः किञ्चिदप्यलाभात् निर्विण्णः कविः खिन्नं प्रकाशयन्नाह, राजन्निति।—राजन्!—भो भूपते!, त्वयि—भवति, कनकधाराभिः,—मेघस्य आसारवर्षणवत् निरन्तरं सुवर्णराशिवर्षणैः, सर्वत्र—सर्वस्मिन्नेव देशे जने वा, वर्षति—सिञ्चति, वारिवर्षणवत् अविरलधारेण सुवर्णवर्षणं कुर्वत्यपीत्यर्थः, अभाग्यच्छत्रसंच्छन्ने—अभाग्यं—दुर्भाग्यमेव, छत्रम्—आतपत्रं, बिन्दुसंस्पर्शप्रतिरोधकत्वादिति भावः; तेन संच्छन्ने—आवृते, दुरदृष्टरूपच्छत्रेण समाच्छादितशरीरे इत्यर्थः, मयि बिन्दवः,—कणाः, कनकधाराणामत्यल्पा अपि अंशा इत्यर्थः, नायान्ति—नागच्छन्ति; त्वद्दत्तदानेन जगद्वासिनः सर्वे अदरिद्रा अभवन्, परन्तु दुरदृष्टेन मया तद्दानस्य अंशमात्रमपि न लभ्यते इति भावः ॥५॥

(घ) विद्वान्—कविः कविशेखरः।

(ङ) तव—तुभ्यमित्यर्थः, [सम्बन्धविवक्षया ६ष्ठी]। कोटिद्रव्यं—कोटि-

कविस्तथा करोति। ततः कोटिद्रव्यं दत्त्वा कविं प्रेषयित्वा अमात्यो राजनिकटमागत्य तिष्ठति स्म। तदा राजा च तमाह,—"बुद्धिसागर! राज्यमिदं सर्वं दत्तं कवये, पत्नीभिः सह तपोवनं गच्छामि। तत्र (च) तपोवने तवापेक्षा यदि मया सहाऽऽगच्छ" इति। ततोऽमात्यः प्राह,—"देव! तेन कविना कोटिद्रव्यमूल्येन राज्यमिदं विक्रीतं, कोटिद्रव्यञ्च विदुषे दत्तम्। अतो राज्यं भवदीयमेव भुङ्क्ष्व" इति। तदा राजा च बुद्धिसागरं विशेषेण सम्मानितवान्।

[इति भोज-कविशेखरसंवादः]।

## भोज-गोपबालासंवादः।

अन्यदा राजा (क) मृगयारसेनाटवीमटन् ललाटन्तपे तपने द्यूनदेहः, पिपासापर्य्याकुलस्तुरगमारुह्य उदकार्थं निकटतटभुवमटन् तदलब्ध्वा परिश्रान्तः कस्यांचिन्महातरोः

---

सहस्रकं हिरण्यं, कोटिसुवर्णमुद्रेत्यर्थः, ("द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु। हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि॥" इत्यमरः)।

(च) तपोवने—तपोवनगमने इत्यर्थः। अपेक्षा—आकाङ्क्षा।

(क) मृगयारसेन—मृगयाऽनुरागेण। ललाटन्तपे—ललाटं तपतीति तस्मिन्, ललाटदेशसन्तापदायके, मध्यगगनारूढे इत्यर्थः, ["असूर्य्यललाटयोर्दृशितपोः" (३।२।३६ पा०) इति ललाट+तप+खश्, मुमागमश्च+७भी १व०]। द्यूनदेहः,—द्यूनः,—क्षीणः, देहः,—शरीरं यस्य तादृशः, क्लान्तकलेवरः। [दिव+क्तः "दिवोऽविजिगीषायाम" (८।२।४९ पा०) इति निष्ठातस्य नः "च्छोः शूडनुनासिके च" (६।४।१९ पा०) इति दिव ऊट् च]। निकटतटभुवं—समीपस्थोन्नतप्रदेशमित्यर्थः।

अधस्तादुपविष्टः। तत्र काचिद्गोपकन्या सुकुमारमनोज्ञसर्वाङ्गी यदृच्छया धारानगरं प्रति तक्रं विक्रेतुकामा तक्रभाण्डञ्चोद्वहन्ती समागच्छति। तामागच्छन्तीं दृष्ट्वा राजा पिपासावशात् "एतद्भाण्डस्थं पेयञ्चेत् पिबामि" इति बुद्ध्याऽपृच्छत्,—"तरुणि! किमावहसि?" इति। सा च तन्मुखश्रिया भोजं मत्वा, तत्पिपासाञ्च ज्ञात्वा, (ख) तन्मुखावलोकनवशाच्छन्दोरूपेणाऽऽह,—

"हिमकुन्दशशिप्रभशङ्खनिभं परिपक्वकपित्थसुगन्धरसम्।
युवतीकरपल्लवनिर्मथितं पिब हे नृपराज! रुजाऽपहरम्" ॥१॥

राजा तच्च तक्रं पीत्वा तुष्टः तां प्राह,—"सुभ्रु! किं तवाभीष्टम्?" इति। सा च (ग) किञ्चिदाविष्कृतयौवना मदपरवशमोहाकुलनयना प्राह,—"देव! मां कन्यामेवावेहि"। सा पुनराह,—

---

(ख) तन्मुखावलोकनवशाच्छन्दोरूपेण—अतोऽयं भोजः स्वयं कविः कविताप्रियश्च इति तन्मुखं दृष्ट्वा अनुमीय कवितारूपेण इत्यर्थः।

गोपकुमारी श्लोकेन स्वीयभाण्डस्थद्रव्यस्य उत्कर्षवर्णनमुखेन परिचयमाह, हिमेति।—नृपराज!—हे राजश्रेष्ठ! हिमं—तुषारं, कुन्दं—माघ्यविकाशिपुष्पविशेषः, शशी—चन्द्रः, त इव प्रभा—कान्तिः यस्य तत्, हिमकुन्दशशिप्रभञ्च तत् शङ्खनिभं—शङ्खसदृशधवलमिति तादृशम्, अतिशुभ्रमित्यर्थः, परिपक्वकपित्थसुगन्धरसं—परिपक्वं—सुपरिणतं, यत् कपित्थं—फलविशेषः, तद्वत् सु—प्रशस्तौ, गन्धरसौ यस्य तादृशं, सुगन्धं सुरसञ्चेत्यर्थः, युवतीकरपल्लवनिर्मथितं—युवत्याः,—तरुण्याः, करपल्लवेन—पाणिकिसलयेन, सुकोमलारक्तपाणिनेत्यर्थः, निर्मथितम—आलोडितम्, (एतेनास्य स्पृहणीयत्वं व्यज्यते) अत एव रुजाऽपहरम्—उक्तगुणवत्त्वात् सर्वक्लेशापनोदकं, पिपासाप्रशमकमिति भावः; मथितं—निर्जलघोलं, "युवतीकरपल्लवनिर्मथितम्" इत्यतः "मथितम्" इति पदम् आकृष्य अन्वयः कार्य्यः; ("तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम्" इत्यमरः) पिब—पानं कुरु। तोटकं वृत्तम् ॥ १ ॥

(ग) किञ्चिदाविष्कृतयौवना—किञ्चित्—ईषत्, आविष्कृतम्—उद्भिन्नं, यौवनं—तारुण्यं यस्याः तादृशी, किञ्चित्प्रोद्भिन्नयुवतीलक्षणा। मदपरवशमोहा-

"इन्दुं कैरविणीव कोकपटलीवाम्भोजिनीवल्लभं
मेघं चातकमण्डलीव मधुपश्रेणीव पुष्पव्रजम् ।
माकन्दं पिकसुन्दरीव रमणीवात्मेश्वरं प्रोषितं
चेतोवृत्तिरियं सदा नृपवर ! त्वां द्रष्टुमुत्कण्ठते" ॥२॥

---

चञ्चलनयना—मदपरवशेन—यौवनजनितगर्ववशेन, यद्वा—राज्ञो रूपदर्शनजनितहर्षवशेन, ("मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति मेदिनी) यः मोहः,—मुग्धभावः, अनात्मज्ञता इत्यर्थः, चतकुलकेशरी नृपश्रेष्ठः भोजोऽयम्, अहं इह नीचजातीया गोपकन्या, महदन्तरमावयोः, मिलनञ्चाभयोर्नैव सङ्घटिष्यते एव इत्यादि वितर्कणान्वितेन यावत्, तेन आकुले—चञ्चले, नयने—नेत्रे यस्यास्तादृशी, यौवनगर्वेण आनन्दवेगेन वा आत्मविस्मृततया कटाक्षं कुर्वतीत्यर्थः। कन्या—कुमारीम्, अविवाहितामित्यर्थः।

मुग्धा गोपकन्या चिरादेव संवरीतुमक्षमा स्वाभिप्रायं स्फुटयितुमाह, इन्दुमिति। —कैरविणी—कुमुदिनी, इन्दुमिव—चन्द्रमिव, कैरविणी यथा इन्दुं द्रष्टुमुत्कण्ठते तथेत्यर्थः, एवं कोकादिष्वपि बोद्धव्यम्; चन्द्रोदये कैरवं विकसतीति प्रसिद्धिः, तेन च कैरविण्याः तद्दर्शनोत्कण्ठा; कोकपटली—चक्रवाकसमूहः, ("कोकश्चक्रश्चक्रवाकः रथाङ्गाह्वयनामकः" इत्यमरः। "समूहे पटलं न ना" इत्यमरवचनात् समूहार्थकस्य पटलस्य पुंलिङ्गतानिषेधात् स्त्रीत्वेऽपि प्रयोगः बोध्यः) अम्भोजिनीवल्लभं—कमलिनीकान्तं, सूर्यमित्यर्थः, सूर्योदये चक्रमिथुनानां वियोगावसानात् तद्दर्शनोत्कण्ठा; चातकमण्डली—वृष्ट्यम्बुपायिपक्षिविशेषसमूहः, मेघमिव—जलधरमिव, भूमिस्थजलापायितया पिपासाक्षामकण्ठानां चातकानां मेघदर्शनोत्कण्ठा; मधुपश्रेणी—भ्रमरपङ्क्तिः, पुष्पव्रजमिव—कुसुमसमूहमिव, मधुपायित्वात् मधुपानां पुष्पदर्शनोत्कण्ठा; पिकसुन्दरी—कोकिलवधूः, माकन्दमिव—सहकारमिव; प्रियावासत्वात् तन्मञ्जरीप्रियत्वाद्वा पिकवधूनां सहकारवृक्षदर्शनोत्कण्ठा; ("माकन्दः सहकारे" इति मेदिनी) रमणी—प्रोषितभर्तृका कामिनीत्यर्थः, प्रोषितं—प्रवासस्थम्, आत्मेश्वरमिव—स्वभर्तारमिव, नृपवर !—हे भूपशार्दूल !, इयं—त्वदासक्ता मदीया इत्यर्थः, चेतोवृत्तिः,—मनोव्यापारः, सदा—सर्वदैव, त्वां—भवन्तं, द्रष्टुम्—ईक्षितुम्, उत्कण्ठते—आध्यायते, व्याकुलायते इत्यर्थः; [ उत् + कण्ठ + लट्-ते ] त्वदासक्तचित्ताऽहं सदा त्वत्समीपं स्थातुमभिलषामीति आशयः। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

राजा चमत्कृतः प्राह,—"सुकुमारि! त्वां लीलादेव्या अनुमत्या (घ) स्वीकुर्म्मः" इति धारानगरं नीत्वा तां तथैव स्वीकृतवान्।

[ इति भोज-गोपबालासंवादः ]।

---

## हेमघटपतनप्रसङ्गे भोज-कालिदाससंवादः।

कदाचित् (क) राजाभिषेके कस्याश्चित् मदनशरपीड़िताया: मदिराक्ष्याः करतलगलितो हेमकलशः सोपानपङ्क्तिषु रटन्नेव पपात। ततो राजा सभायामागत्य कालिदासं प्राह,—"सुकवे! एनां समस्यां पूरय—टटं टटं टं टटटं टटं टं"।

तदा कालिदासः प्राह,—

"राजाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटो युवत्याः।
सोपानमार्गेषु करोति शब्दं टटं टटं टं टटटं टटं टं" ॥

तदा राजा स्वाभिप्रायं ज्ञात्वाऽक्षरलक्षं ददौ।

[ इति हेमघटपतनप्रसङ्गे भोज-कालिदाससंवादः ]।

---

(घ) स्वीकुर्म्मः,—प्रतिगृह्णीमः, पाणिग्रहणं कुर्म्म इत्यर्थः। [ स्व + कृ + लट्-मस्। अविशेषणत्वादस्मद एकत्वेऽपि बहुवचनम् ]।

---

(क) राजाभिषेके—राज्ञः,—भोजस्य, अभिषेके—स्नानकाले इत्यर्थः। कस्याश्चित्, स्नानार्थमागताया इति शेषः। मदनशरपीड़िताया:, राज्ञः सौन्दर्य-दर्शनेनेति भावः। मदिराक्ष्याः,—मदिरे—मत्तखञ्जने इव, अक्षिणी—नयने यस्याः तस्याः, खञ्जनलोचनाया इत्यर्थः। रटन्—शब्दायमानः।

राज्ञोक्तां समस्यां पूरयितुमाह, राजेति।—राज्ञः,—भोजनृपतेः, अभिषेके—स्नानकाले, मदविह्वलाया:,—मदेन—हर्षेण, राज्ञः रूपदर्शनजनितहर्षवेगेनेत्यर्थः, विह्वलाया:,—विक्लवायाः, परवशाया इत्यर्थः, स्वाङ्गान्येव धारयितुमशक्ताया इति यावत्, युवत्याः,—तरुण्याः, हस्तात्—करात्, च्युतः,—भ्रष्टः, हेमघटः,—

# भोज-भुक्कुण्डसंवादः ।

अन्यदा सिंहासनमलङ्कुर्वाणे श्रीभोजे कश्चिच्चोरः (क) आरक्षकैः राजनिकटं नीतः । राजा तं दृष्ट्वा,—"कोऽयम् ?" इत्यपृच्छत् । तदा आरक्षकाः प्राहुः,—"देव ! अनेन (ख) कुम्भिलकेन कस्मिंश्चिद्वेश्यागृहे घातपातमार्गेण द्रव्याणि अपहृतानि" इति । तदा राजा प्राह,—अयं दण्डनीयः" इति । ततः भुक्कुण्डो नाम चोरः प्राह,—

"भट्टिर्नष्टो भारवी योऽपि नष्टो
भिक्षुर्नष्टो भीमसेनोऽपि नष्टः ।

स्वर्णकुम्भः, सोपानमार्गेषु—आरोहणपथेषु, जलावतारेषु इत्यर्थः, टट टटं टं टटटं टटं टं—इत्यादिकमव्यक्तं, शब्दं—ध्वनिं, करोति—विदधाति । ("रामाभिषेके मदविह्वलायाः कक्षच्युतो हेमघटस्तरुण्याः । सोपानमारुह्य चकार शब्दं ठठं ठठं ठं ठठठं ठठं ठः" "ठः" इति वा इति महानाटकीयपाठभेदः) । इन्द्रोपेन्द्रवज्रयो-रुपजातिः वृत्तम् ॥ १ ॥

---

(क) आरक्षकैः,—रक्षिवर्गैः ।

(ख) कुम्भिलकेन—कुम्भिल एव कुम्भिलकः,—चौरः तेन, ("कुम्भिलः श्यालमीने च चौरश्लोकार्थचौरयोः" इति मेदिनी) । घातः,—आघातः, सन्धि-खननास्त्रप्रहार इत्यर्थः, तेन पातः,—पातनं, भित्तेरिति भावः, तेन यः मार्गः,—अभ्यन्तरप्रवेशपन्थाः तेन, सुरङ्गपथेन । द्रव्याणि—धनानि ।

भुक्कुण्डः कवितापियं राजानं सन्तोष्य आत्ममुक्तये चातुर्यं प्रकाशयन्नाह, भट्टिरिति ।—राजन् !—नृपते !, भट्टिः,—तन्नाम्ना प्रसिद्धः भकारादिः कविः, नष्टः,—मृतः, यः भारविः,—तन्नाम्ना प्रथितः भाकारादिः किरातार्जुनीयमहा-काव्यस्य कविः, सोऽपि नष्टः—मृतः, (मूले "भारवी" इति दीर्घान्तप्रयोगश्चिन्त्यः,

भुक्कुण्डोऽहं भूपतिस्त्वं हि राजन्!

भभ्भाःपङ्क्तावन्तकः सन्निविष्टः" ॥ १ ॥

तदा राजा प्राह,—"भो भुक्कुण्ड! गच्छ गच्छ, यथेच्छं विहर"।

[ इति भोज-भुक्कुण्डसंवादः ]।

---

"भारविर्थोऽपि नष्टः" इति युज्यते। "भारविश्चापि नष्टः" इति पाठकल्पना साध्वी। "भास्करश्चापि नष्टः" इति पाठे—भास्करः,—सिद्धान्तशिरोमण्यादि-ज्योतिर्ग्रन्थप्रणेतृपण्डितविशेषः) भिक्षुः,—साङ्ख्यसारप्रवचनभाष्यादिकर्त्ता भिकारादिः प्रसिद्धः विज्ञानभिक्षुः, नष्टः,—मृतः, भीमसेनोऽपि—वीरश्रेष्ठः भीकारादिर्द्वितीय-पाण्डवोऽपि, नष्टः,—कालवशं गतः, भकारादिकमारभ्य भीकारादिपर्यन्ताः सर्वे गताः इत्यर्थः, अहं भुक्कुण्डः,—एतन्नामा भुकारादिश्चौरः, त्वं—भवान्, भूपतिः,—भूकारादिर्धरानाथः, इदानीं भुकारादिभूकारादिसंज्ञाविशिष्टः अहं त्वञ्च अवशिष्ट इति भावः; हि—तथाहि, भभ्भः,—भकारमारभ्य भकारपर्यन्तस्य, भभाभिभी-भुभूकारादिवर्णविशिष्टस्य नाम्न इत्यर्थः, पङ्क्तौ—श्रेण्यां, ("भभ्भापङ्क्तौ" इति पाठे—भकारमारभ्य भकारपर्यन्तस्य, आपङ्क्तौ—श्रेण्यां, भकारादूकारपर्यन्ता भकारपङ्क्तिं व्याप्येत्यर्थः। पाठोऽयं न समीचीनतया प्रतिभाति। "भाभ्भादौ" इति कस्यचित् पाठः) अन्तकः,—यमः, सन्निविष्टः,—सम्यगवस्थितः; भट्टादयः सर्वे गताः, इदानीं भुक्कुण्डे मयि त्वया विनष्टे भूपतेस्तव वारः समागमिष्यति इति भावः; यद्वा—अन्ते—शेषे, कायति—शब्दायते इति अन्तकः,—अन्त इत्यर्थः, सन्निविष्टः,—अवस्थितः, अन्तावस्थितत्वात् इदानीं तव नाशस्यावसरः इति भावः। शालिनी वृत्तम् ॥ १ ॥

# समस्यापूरणे भोज-कवित्रयसंवादः ।

कदाचिद्भोजो मृगयापर्य्याकुलः वने विचरन् (क) विश्रमाविष्टहृदयः कञ्चित्तटाकमासाद्य स्थितवान्, श्रमात् प्रसुप्तश्च । ततः (ख) अपरपयोनिधिकुहरं गते भास्करे,—

तत्रैवारोचत निशा तस्य राज्ञः सुखप्रदा ।
चञ्चच्चन्द्रकरानन्दसन्दोहपरिकन्दला ॥ १ ॥

---

(क) विश्रमाविष्टहृदयः,—विश्रमाय—विश्रामाय, आविष्टम्—आवेशयुक्तम्, अभिलाषयुक्तम् इति यावत्, हृदयं—चेतः यस्य तादृशः, विश्रामाकाङ्क्षी इत्यर्थः । तटाकं—तडागं, सपद्मजलाशयमित्यर्थः ।

(ख) अपरपयोनिधिकुहरं—पश्चिमसागराभ्यन्तरम् ।

निशावर्णनमाह, तत्रैवेति ।—चञ्चच्चन्द्रकरानन्दसन्दोहपरिकन्दला—चञ्चतः,—गच्छतः, उद्गच्छत इत्यर्थः, चन्द्रस्य—इन्दोः, निशापतित्वात् प्रियस्येति भावः, करेण—किरणेन हेतुना, प्रियपाणिस्पर्शेन इति च व्यज्यते ; यः आनन्दसन्दोहः,—हर्षसन्तानः, हास्यपरम्परा इत्यर्थः, तेन परिकन्दला—सर्वतोभावेन उपरागयुक्ता, सुप्रसन्नेत्यर्थः ; यद्वा—चञ्चता—चलता, चन्द्रकरेण—इन्दुरश्मिना, मृदुपवनचालिततडागोदके प्रतिफलितत्वात् चन्द्रकरस्य चञ्चलतया प्रतीयमानत्वं बोध्यम् ; यः आनन्दसन्दोहः,—प्रियकरस्पर्शात् सुखसन्तानः, तेन परिकन्दला, कौमुदीशुभ्रा इत्यर्थः, ("कन्दलं त्रिषु कपालेऽप्युपरागे नवाङ्कुरे" इति मेदिनीवचनात् उपरागार्थेऽपि कन्दलशब्दः प्रयुज्यते, अनुग्रहार्थकग्रहशब्दस्य च उपरागपर्य्यायकत्वात् अत्र कष्टकल्पनया परिकन्दलस्य प्रसादार्थः कल्पनीयः, कन्दलस्य यथाश्रुतार्थेन असङ्गतेः ; तथा च "उपरागो ग्रहः" इत्यमरः, "अनुग्रहे प्रमादे च ग्रहशब्दः" इत्यनेकार्थकैरवाकरकौमुदी च) अत एव सुखप्रदा—प्रीतिदायिनी, निशा—रात्रिः, तस्य राज्ञः,—प्रसुप्तस्य नृपतेर्भोजस्य, तस्मै राज्ञे इत्यर्थः, [सम्बन्धविवक्षया ६ष्ठी०] तत्रैव—तडागतटे एव, अरोचत—प्रीतिजननी अभवत् इत्यर्थः ; यद्वा—तस्य राज्ञः सम्बन्धे तत्रैव—निर्जनारण्यमध्यस्थतडागतटे एव, अरोचत—अतीव मनोज्ञतया प्रकाश, नगरं तु तथा न अरोचत यथा तत्र इत्येव

ततः प्रत्यूषसमये नगरींप्रति प्रस्थितो राजा (ग)चरमगिरि-नितम्बलम्बमानशशाङ्कबिम्बमवलोक्य सकुतूहलः सभामागत्य तदा समीपस्थान् कवीन्द्रान्निरीक्ष्य समस्यामिकामवदत्,—

"चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे।"

तदा प्राह भवभूतिः,—

"अरुणकिरणजालैरन्तरिक्षे गतर्क्षे"

ततो दण्डी प्राह,—

"चलति शिशिरवाते मन्दमन्दं प्रभाते।"

ततः कालिदासः प्राह,—

"युवतिजनकदम्बे नाथमुक्तौष्ठबिम्बे
चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे" ॥ २ ॥

शब्दार्थः; निद्रया विगतश्रमो नृपः किञ्चिदन्तरं प्रबुद्धोऽपि निशासुषमादर्शनाक्षिप्त-हृदयः तत्रैव व्यतिष्ठत, न तु निशागमनसन्त्रस्तः नगरीं अगमदिति भावः॥ १ ॥

(ग) चरमगिरिनितम्बलम्बमानशशाङ्कबिम्बं—चरमगिरेः,—अस्ताचलस्य, नितम्बे—कटकदेशे, मध्यप्रदेश इत्यर्थः, ("कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः) लम्बमानम्—अवतिष्ठमानम् इत्यर्थः, शशाङ्कबिम्बं—चन्द्रमण्डलं तत, अस्तोन्मुखं चन्द्रम्। तदा समीपस्थान्—तस्मिन् समये निकटावस्थितान्। ("तदा" इत्यत्र "सदा" इति पाठान्तरम्)।

भवभूत्यादयस्त्रयः प्रत्येकमेकैकपादं प्रपूर्य्य समस्यापूरणप्रसङ्गेन प्रभातं वर्णयन्ति, अरुणेति।—अन्तरिक्षे—नभसि, अरुणकिरणजालैः,—अरुणस्य—अर्कस्य, उदय-मानसूर्य्यस्य इत्यर्थः, ("विकर्त्तनार्कमार्त्तण्डमिहिरारुणपूषणः" इत्यमरः) किरणजालैः,—करसमूहैः, गतर्क्षे—गतानि—विलुप्तानि, ऋक्षाणि—नक्षत्राणि यस्मात् तादृशे, अदृष्टतारे सति, ("नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः) प्रभाते—अहर्मुखे, शिशिरवाते—हिमानिले, मन्दमन्दं—मृदुमृदु, चलति—प्रवाति सति, युवतिजनकदम्बे—तरुणीजनसमूहे, नाथमुक्तौष्ठबिम्बे—नाथेन—प्रियेण, मुक्तं—त्यक्तम्, ओष्ठबिम्बं—बिम्बाधरः यस्य तादृशे, विरतचुम्बनव्यापारे, परित्यक्त-शयनीये सति इति भावः; चन्द्रबिम्बं—शशाङ्कमण्डलं, चरमगिरिनितम्बे—

ततो राजा सर्वानपि सम्मानितवान्, तत्र कालिदासं विशेषतः पूजितवान्।

[ इति समस्यापूरणे भोज-कविनिवहसंवादः ]।

---

## भोज-स्ववैद्यसंवादः।

अथ कदाचिद्भोजः नगराद्बहिर्निर्गतः (क) नूतनेन तटाकाम्भसा बाल्यसाधितकपालशोधनादिं चकार। (ख) तन्मूलेन कश्चन शफरशावः कपालं प्रविष्टो विकटकरोटिकानिकटघटितोऽविर्निर्गतः। ततो राजा स्वपुरीमवाप। तदारभ्य राज्ञः कपाले वेदना जाता। ततस्तत्रत्यैर्भिषग्वरैः सम्यक् चिकित्सिताऽपि न शान्ता। एवमहर्निशं नितरामस्वस्थे राज्ञि (ग) अमानुषाविदितेन महारोगेण,—

अस्ताचलकटके, लग्नस्य—असंश्लिष्ट, अस्ताचलस्य मध्यदेशमाश्रित्येत्यर्थः, ऊषा-गमनदर्शनेन सतारतारानाथः अस्तमितः इति निष्कर्षः। मालिनी वृत्तम् ॥ २ ॥

---

(क) नूतनेन तटाकाम्भसा—अभिनवखानिततडागोदकेन। बाल्यसाधित-कपालशोधनादिं—बाल्ये—शैशवे, साधितम्—अभ्यस्तं, बाल्यादारभ्य साधितम—अनुष्ठितमिति वा, कपालशोधनं—शिरोऽस्थिधौतादिकपालधौतिरित्यर्थः, हठ-योगविशेष इति यावत्, तदादिं—तत्प्रभृतिकम्।

(ख) तन्मूलेन—तेनैव मूलेन—आदिकारणेन, कपालशोधनरूपं निमित्त-मालम्ब्येत्यर्थः। शफरशावः,—प्रोष्ठीपोतः। कपालं—शिरोऽस्थि, ("कपालोऽस्त्री शिरोऽस्थ्नि स्याद् घटादेः शकले व्रजे" इति मेदिनी)। विकटकरोटिकानिकटघटितः,—विकटायाः,—विषमायाः, करोटिकायाः,—शिरोऽस्थ्नः, ("शिरोऽस्थनि करोटिः स्त्री" इत्यमरः) निकटे—समीपे, मस्तकास्थ्नः उच्चनीचसन्ध्यादिस्थाने इत्यर्थः, घटितः,—संसक्तः। अविर्निर्गतः,—बहिर्गन्तुमशक्तः।

(ग) अमानुषाविदितेन—मानवबुद्धेरगोचरेण, लक्षणाद्यभावात् योगगम्येनेत्यर्थः।

क्षामं क्षाममभूद्वपुर्गतसुखं हेमन्तकालेऽभवत्
वक्त्रं निर्गतकान्ति राहुवदनाक्रान्ताब्जबिम्बोपमम्।
चेतः कार्य्यपदेषु तस्य विमुखं क्लीवस्य नारीष्विव
व्याधिः पूर्णतरो बभूव विपिने शुष्के शिखावानिव ॥१॥

एवमतीते संवत्सरेऽपि काले न केनापि निवारितः स (घ) गदः। ततः श्रीभोजो (ङ) नानाविधसमानौषधग्रसन-रोगदुःखितमना: समीपस्थं शोककसागरनिमग्नं बुद्धिसागरं

---

इदानीं भोजस्य अवस्थां वर्णयति, क्षाममिति।—हेमन्तकाले—शीतसमये, अभवत्—कमलमिव, वपुः,—शरीरं, क्षामं क्षामं—क्षीणं क्षीणम्, अतिक्षीणं जातमित्यर्थः, गतसुखं—विनष्टस्वाच्छन्द्यं, दुःखपीड़ितमित्यर्थः, अभूत्—अजायत, शिशिरमथितपद्मिनीपर्णमिव म्लानमभूदित्यर्थः, वक्त्रं—मुखं, राहुवदनाक्रान्ताब्ज-बिम्बोपमं—राहोः,—सैंहिकेयस्य, वदनेन—मुखेन, आक्रान्तं—कवलितं, राहु-ग्रस्तमित्यर्थः, अब्जबिम्बं—चन्द्रमण्डलम्, उपमा—तुलना यस्य तादृश सत्, निर्गत-कान्ति—विच्छायम, अभूदित्यन्वयः, राहुग्रस्तचन्द्रमण्डलमिव मुखचन्द्रं विवर्णमभू-दित्यर्थः, क्लीवस्य—सुरतासक्तस्य, नारीष्विव—स्त्रीषु इव, तस्य—भोजस्य, चेतः,—मनः, कार्य्यपदेषु—कर्म्मवस्तुषु, कार्य्यविषयेषु इत्यर्थः; कर्म्माणि व्यवसायेषु वा, कर्म्मकरणसङ्कल्पेषु इत्यर्थः, ("पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः) विमुखं—पराङ्मुखम्, अभूत् इति शेषः, क्लीवो यथा नारीप्रसङ्गेषु अनिच्छुर्भवति, तथा तस्य चित्तं कार्य्ये अनिच्छु अभूदित्यर्थः, शुष्के—नीरसे, विपिने—कानने, शिखावानिव—अनल इव, दावाग्निरिवेति यावत्, व्याधिः,—रोगः, पूर्णतरः,—अतीवप्रवृद्धः, बभूव—अजनि, शुष्कारण्ये दावानलो यथा आशु समधिकप्रबलो भूत्वा तद्भस्मीकरोति, तथा तस्य राज्ञः व्याधिः सर्वाङ्गसम्पूर्णो भूत्वा तं नितरां पीडयामासेत्यर्थः। शार्द्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(घ) गदः,—रोगः।

(ङ) नानाविधसमानौषधग्रसनरोगदुःखितमनाः,—नानाविधानां—विविध-प्रकाराणां, समानानां—तुल्यजातीयानां, न तु परिवर्त्तितानामिति भावः; औषधानां—भेषजानां, ग्रसनं—कवलीकरणमेव, रोगः—पीडा, क्लेशदायकत्वा-दिति भावः; ग्रसनेन हेतुना यः रोगः,—दुःखमित्यर्थो वा, नानाविधानां समानामौषधानां ग्रसनं यस्मिन् तादृशः यः रोग इत्यर्थो वा, तेन दुःखितं—

कथमपि संयताक्षरामुवाच वाचम्,—"बुद्धिसागर ! इतः पर-मस्मद्विषये न कोऽपि भिषग्वरो वसतिमातनोतु, वाग्भटादि-भेषजकोशान् निखिलान् स्रोतसि निरस्यागच्छ; मम देव-समागमसमयः समागतः" इति। तच्छ्रुत्वा सर्वेऽपि पौरजनाः कवयश्च (च) अवरोधसमाजाश्च विगलदस्राऽऽसारनयना बभूवुः।

ततः कदाचिद्देवसभायां पुरन्दरः सकलमुनिवृन्दमध्यस्थं (छ) वीणामुनिमाह,—"मुने ! इदानीं भूलोके का नाम वार्त्ता ?" इति। ततः नारदः प्राह,—"सुरनाथ ! न किमप्याश्चर्यं, किन्तु धारानगरवासी श्रीभोजभूपालः रोगपीडितो नितरा-मस्वस्थो वर्त्तते। स तस्य रोगः केनापि न निवारितः। तदनेन भोजनृपालेन भिषग्वरा अपि स्वदेशान्निष्कासिताः, वैद्यशास्त्र-मपि अनृतमिति निरस्तम्" इति। एतदाकर्ण्य (ज) पुरुहूतः समोपस्थौ नासत्याविदमाह,—"भोः स्ववैद्यौ ! कथमनृतं

खिन्नं, मनः,—चित्तं यस्य स तादृशः, प्रभूतकष्टतिक्तागदसेवनाक्लिष्टः। कथमपि—कष्टेन। संयताक्षरा—दुर्बलतया वक्तुमसामर्थ्यात् अल्पवर्णसम्बद्धां, वाचमित्यस्य विशेषणम्; ("संयताक्षरम्" इति पाठे—राज्ञः क्लेशदर्शनक्लेशेन अवरुद्धवाचं, बुद्धिसागरमित्यस्य विशेषणम्)। अस्मद्विषये—अस्माकं जनपदे देशे वा, मम राज्ये नगरे वा इत्यर्थः, ("विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी)। वाग्भटादिभेषजकोशान्—वाग्भटकृताष्टाङ्गहृदयाद्यौषधसङ्ग्रहग्रन्थानित्यर्थः। देव-समागमसमयः,—देवैः,—अमरैः सह, समागमसमयः,—मिलनकालः, परलोक-प्रयाणसमयः।

(च) अवरोधसमाजाः,—अन्तःपुरिकासमूहाः, राजपत्न्यः इत्यर्थः, ("अवरोध-स्तिरोधाने राजदारेषु तद्गृहे" इति मेदिनी)। विगलदस्रासारनयनाः,—विगलन्तः,—प्रस्रवन्तः, अस्रासाराः,—अश्रुधाराः येभ्यः तादृशानि नयनानि—लोचनानि येषां तादृशाः, रोदनपरायणाः।

(छ) वीणामुनिं—वीणावादननिरतं मुनिं, नारदमित्यर्थः। वार्त्ता—वृत्तान्तः।

(ज) पुरुहूतः,—इन्द्रः, (इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः। वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः॥" इत्यमरः)। नासत्यौ—अश्विनीकुमारौ,

धन्वन्तरीयं शास्त्रम्?"। तदा तावाहतुः,—"अमरेश देव! न ह्यलौकमिदं शास्त्रं, किन्तु (ञ) अमरविदितेन रोगेण बाध्यतेऽसौ भोजः" इति। इन्द्रः,—"कोऽसाववार्य्यरोगः? किं (ञ) भवतोर्विदितः?"। ततस्तावूचतुः,—"देव! भोजेन कपालशोधने कृते तदा प्रविष्टः (ट) शफरः, तन्मूलोऽयं रोगः" इति। तदा इन्द्रः (ठ) स्मयमानमुखः प्राह,—"तदिदानीमेव युवाभ्यां गन्तव्यं, न चेदितःपरं भूर्लोके भिषक्शास्त्रस्यासिद्धिर्भवेत्। स खलु (ड) सरस्वतीविलासस्य निकेतनं शास्त्राणामुद्धर्त्ता च" इति।

ततः सुरेन्द्रादेशेन तावुभावपि (ढ) धृतद्विजन्मवेशौ धारानगरं प्राप्य द्वारस्थं प्राहतुः,—"द्वारस्थ! आवां भिषजौ काशीदेशादागतौ, आभोजाय विज्ञापय, तेनानृतमित्यङ्गीकृतं वैद्यशास्त्रमिति श्रुत्वा तत्प्रतिष्ठापनाय तद्रोगनिवारणाय च"

स्वर्वैद्यौ इत्यर्थः। ("स्वर्वैद्यावश्विनीसुतौ। नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ॥" इत्यमरः)।

(ञ) अमरविदितेन—देवलोकज्ञातेन, मानुषबोधागम्येनेत्यर्थः। बाध्यते—पीड्यते। [बाध+कर्मणि लट्-ते]।

(ञ) भवतोः,—भवद्भ्याम्। ["क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति कर्त्तरि षष्ठी]।

(ट) "शफरः" इत्यत्र "पाठीनः" इति पाठः पूर्वापरसङ्गतिविरोधादसाधुः, न खलु पाठीनः शफरस्य पर्य्यायः, "प्रोष्ठी तु शफरी द्वयोः" इत्यमरात्, पाठीनस्य च सहस्रदंष्ट्राख्यमत्स्यविशेषत्वात्। तन्मूलः,—शफरप्रवेशहेतुकः।

(ठ) स्मयमानमुखः,—स्मयमानम्—ईषद्धसत्, [स्मि+शानच्] मुखं यस्य सः स्मेराननः। भिषक्शास्त्रस्य—आयुर्वेदस्य। असिद्धिः,—अप्रामाणिकत्वम्।

(ड) सरस्वतीविलासस्य—सरस्वत्याः,—वाग्देव्याः, विलासस्य—लीलायाः, निकेतनं—मन्दिरं, सरस्वत्याः क्रीडागारः; सदैव शास्त्रपर्य्यालोचनादिति भावः।

(ढ) धृतद्विजन्मवेशौ—गृहीतब्राह्मणपरिच्छदौ, ब्राह्मणपरिच्छदं परिधाय इत्यर्थः। अनृतमित्यङ्गीकृतं—मिथ्यातया स्वीकृतम्। तत्प्रतिष्ठापनाय—तस्य—

इति। ततो द्वारस्थः प्राह,—"भो विप्रौ! 'न कोऽपि भिषक्प्रवरः (ण) प्रवेशयितव्यः' इति राज्ञोक्तम्। राजा तु केवलमस्वस्थः, नायमवसरो विज्ञापनस्य" इति। तस्मिन् क्षणे कार्य्यवशाद्बहिर्निर्गतो बुद्धिसागरस्तौ दृष्ट्वा,—"कौ भवन्तौ?" इत्यपृच्छत्। ततस्तौ (त) यथाऽऽगतमूचतुः। ततो बुद्धिसागरेण तौ राज्ञः समीपं नीतौ। ततो राजा ताववलोक्य मुखश्रिया अमानुषाविति बुद्ध्वा—"आभ्यां शक्यतेऽयं रोगो (थ) निवारयितुम्" इति निश्चित्य तौ बहुमानितवान्। ततस्तावूचतुः,—"राजन्! न भेतव्यं, रोगो (द) निर्गतः, किन्तु कुत्रचिदेकान्ते त्वया भवितव्यम्" इति। ततः राज्ञाऽपि तथा कृतम्। ततस्तावपि राजानं (ध) मोहचूर्णेन मोहयित्वा शिरःकपालमादाय तत्करोटिकापुटे स्थितं शफरकुलं गृहीत्वा कस्मिंश्चिद्भाजने निक्षिप्य सन्धानकरण्या कपालं यथावदारचय्य सञ्जीवन्या च तं जीवयित्वा तस्मै तददर्शयताम्। तदा तद्दृष्ट्वा

---

वैद्यशास्त्रस्य, प्रतिष्ठापनाय—गौरवस्थापनाय, वैद्यशास्त्रं सत्यमिति प्रत्ययमुत्पाद्य गौरववर्द्धनार्थमित्यर्थः।

(ण) प्रवेशयितव्यः,—प्रवेशनार्हः, [प्र+विश+णिच्+तव्यः]। अस्माभिरिति शेषः। ("प्रवेष्टव्यः" इति पाठः असाधुः)।

(त) यथाऽऽगतं—यस्माद्देशात् यदर्थं समागतम्।

(थ) ("निवारितुम्" इति पाठः असाधुः)।

(द) निर्गतः,—निष्क्रान्तः, निवृत्त इत्यर्थः, तव देहात् इति शेषः। एकान्ते—रहसि, निर्जने इत्यर्थः।

(ध) मोहचूर्णेन—मोहजनकचूर्णविशेषाघ्रापणेनेत्यर्थः। शफरकुलं—शफरस्य—प्रोष्ठीमत्स्यस्य, कुलं—तनुं, शफरदेहमित्यर्थः, मृतशफरमिति यावत्। ("कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीवम्" इति मेदिनी)। सन्धानकरण्या—संयोजनविद्यया, सूच्या इत्यर्थः। यथावत्—यथास्थितम्। आरचय्य—विधाय, सूच्या संसीव्य पूर्ववत् कृत्वा इत्यर्थः। [आ+रच+णिच्-ल्यप्]। सञ्जीवन्या—चैतन्यसम्पादिकया विद्यया, प्राणसञ्जीवनौषधविशेषेणेत्यर्थः।

राजा विस्मितः,—"किमेतत् ?" इति तौ पृष्टवान्। तदा तावूचतुः,—"राजन्! त्वया बाल्यादारभ्य परिचितकपाल-शोधनतः मस्मार्मिदम्" इति। ततो राजा तावश्विनौ मत्वा, (न) तच्छोधनार्थमपृच्छत्,—"किमस्माकं पथ्यम् ?" इति। ततस्तावचतुः,—

"अशीतेनाम्भसा स्नानं पयः पानं वराः स्त्रियः।
एतद्वो मानुषाः! पथ्यम्"

इति। तदनन्तरं राजा मध्ये "मानुषाः" इति सम्बोधनं श्रुत्वा,—"वयञ्चेन्मानुषाः कौ युवाम् ?" इति तयोः हस्तौ झटिति स्वहस्ताभ्याम् अग्रहीत्। ततस्तत्क्षण एव तौ (प) अन्तरधत्तां ब्रुवन्ताविव,—"कालिदासेन पूरणीयं तुरीयचरणम्" इति। ततो राजा विस्मितः सर्वानाहूय तद्वृत्तमब्रवीत्। तत् श्रुत्वा

(न) तच्छोधनार्थं—तस्य—अश्विनीसुताविमौ इति स्वकीयज्ञानस्य, शोधनार्थं—विशुद्धतासम्पादनार्थं, ज्ञानं मे भ्रान्तं न वा इति निश्चयार्थमित्यर्थः; तयोः,—अश्विनीकुमारयोः, शोधनार्थं—परीक्षार्थमित्यर्थो वा। अत्रायमाशयः,—देवानामेव चिकित्सकाविमौ देवतोपयोगिपथ्योपदेशे अभ्यस्तौ, अभ्यासवशात् मानुषस्य मे पथ्योपदेशे देवपथ्यमुपदेक्ष्यतश्चेत् देवावेतौ इत्यवधातव्यम् इति।

राज्ञा पृष्टौ आश्विनेयौ पथ्योपदेशप्रसङ्गेन आत्मनोरमानुषत्वं प्रकटयतः, अशीतेनेति।—अशीतेन—उष्णेन, अम्भसा—जलेन, स्नानम्—अभिषवः, पयः,—दुग्धम्; ईषदुष्णमिति भावः; पानं—सेवनं, वराः,—उत्तमाः, सुलक्षणाः इति यावत्, तरुण्यः इति भावः; स्त्रियः,—नार्यः, "स्निग्धमुष्णञ्च भोजनम्" इति कालिदासोक्तं वक्ष्यमाणं चतुर्थपादमपि अत्राकृष्य अन्वेतव्यम्; स्निग्धं—स्नेहांशयुक्तम्, उष्णञ्च—उष्णवीर्यमुष्णस्पर्शञ्चेत्यर्थः, भोजनम्—आहार्य्यं, मानुषाः!,—भोः मर्त्याः!, वः,—युष्माकं, मानवाणामिति यावत्, एतत्—मदुक्तमिदं, पथ्यं—हितम्; देवभोग्यामृतादीनामभावेन मानुषलोकसुलभानां सर्वेषां बलजननानाञ्च एतेषामेव पथ्यत्वमवधेयमित्यर्थः, तथा च—"सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट्॥" इति॥ २॥

(प) अन्तरधत्तां—तिरोऽभवताम्, अदृश्यौ अभवतामित्यर्थः, [ अन्तर्+धा

सर्वेऽपि चमत्कृताः विस्मिताश्च बभूवुः। ततः कालिदासेन तुरीयचरणं पूरितम्,—

"स्निग्धमुष्णञ्च भोजनम्" ॥ २ ॥ इति।

ततो भोजोऽपि कालिदासं (फ) लीलामानुषं मत्वा परं सम्मानितवान्।

[ इति भोज-स्वर्वैद्यसंवादः ]।

## भोज-कवीन्द्रमल्लिनाथसंवादः।

अथ भोजनृपालः प्रतिदिनं सञ्जातबलकान्तिर्ववृधे कृष्णेतरपक्षे चन्द्र इव। ततः कदाचित् सिंहासनमलङ्कुर्वाणे श्रीभोजे कालिदास-भवभूति-दण्डि-बाण-मयूर-वररुचिप्रभृति-कवितिलककुलालङ्कृतायां सभायां द्वारपाल एत्याऽऽह,—"देव! कश्चित् कविर्द्वारि तिष्ठति। तेनेयं प्रेषिता (क) गाथासनाथा चीठिका देवसभायां निक्षिप्यताम्" इति तां दर्शयति। राजा गृहीत्वा तां वाचयति,—

"काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं
दासीहस्तात् सभयमलिखद् व्यालमस्योपरिष्टम्।

+लङ्-ताम्। "अन्वर्घत्ताम्" इत्यपप्रयोगः अडागमबाधाऽभावात्, नाप्यत्र लोटः प्रयोगः, अनुशासनाभावात् ]। ब्रुवन्ताविव—कथयन्ताविव। [ ब्रु+शतृ+१मा द्विव० ]। तुरीयचरणं—श्लोकस्यास्य चतुर्थपादः।

(फ) लीलामानुषं—लीलाप्रकाशार्थं मानुषदेहधरं, देवमित्यर्थः।

---

(क) गाथासनाथा—श्लोकसहिता, चीठिका—लिपिः, श्लोकलिखितं पत्रमित्यर्थः। देवसभायां—राजसंसदि। इति, उक्तीति शेषः।

कस्याश्चिद्वियोगिन्याः स्वनायकाय कौशलेन स्वाभिप्रायविज्ञापनं वर्णयति, काचिदिति।—काचित्—अविज्ञातपरिचया, बाला—षोडशवर्षीया तरुणी, ("बाला तु

गौरीकान्तं पवनतनयं चम्पकञ्चात्र भावं
पृच्छत्यार्य्यो निपुणतिलको मल्लिनाथः कवीन्द्रः॥" ॥ १

षोडशी मता" इति कोषात ) दासीहस्तात्—परिचारिकाकरात्, दूतीं सहायीं कृत्येत्यर्थः, [ त्वयस्तोपि भूमौ ] रमणवसतिं—नायकावासं, सभयं—भयेन सहितं यथा स्यात् तथा, करण्ड—कुसुमाधारं, सम्पुटाविशेषं वा, प्रेषयन्ती—प्रेरयन्ती सती, व्यालं—सर्पम्, अस्य—व्यालस्य, उपरिस्थम—ऊर्द्धदेशावस्थितं, गौरीकान्तं—शिवं, पवनतनय—वायुपुत्रं हनुमन्तं, चम्पकञ्च—तदाख्यपुष्पविशेषञ्च, आलिखत—अचित्रयत, करण्डगात्रे इति भावः ; निपुणतिलकः,—अभिज्ञश्रेष्ठः, सुशिक्षित इत्यर्थः, कवीन्द्रः.—कविश्रेष्ठः, आर्य्यः,—कुलीनः, महाकुलप्रसूतिरित्यर्थः, ( "महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः" इत्यमरः ) मल्लिनाथः,—मल्लिनाथेति प्रसिद्धः कश्चित, अत्र—व्यालाद्यङ्कनविषये, भावम्—अभिप्रायं, किमभिप्रत्य बाला एतत् सर्वं लिखितवतीत्यर्थः, पृच्छति—जिज्ञासते, भवतः इति शेषः ; अत्रेदं बोध्यम् ; —त्वद्विरहव्यालविषार्त्ताऽहं मृत्युयन्त्रणामनुभवामि, तस्मात्त्वं झटिति आगत्य नीलकण्ठवत् विषमिदं प्रशमय्य ( महेश्वरो हि समुद्रमथने वासुकिमुखविनिर्गतं जगद्दाहनोद्यतं विषं स्वयं कण्ठे धृत्वा जगतां विषज्वालां निवारयामास ) सङ्गत्य च मया सह गौरीकान्तो ( हरगौरीरूपः ) भव, अन्यथा रावणस्य उद्यानभङ्गकृत् पवनतनयस्य वेगेन चम्पकदलवत् त्वद्विरहानिलवेगेन त्वद्दोद्यानपालिता चम्पककलिका अहं विशीर्णा म्रिये इति। अत्र पवनस्य अमूर्त्तत्वात अङ्कनायोग्यतया वैदग्ध्यद्योतनार्थञ्च पवनजवस्य पवनतनयस्य मूर्त्तिमलिखदिति मन्तव्यम् ; यद्वा—व्यालवत् क्रूरः ( कठोरहृदयः ) गौरीकान्तवत् निर्विकारः जितमन्मथश्च त्वं न गणयसि मे दुःखं, पवनतनयजववत अतिजवेन नागच्छेः चेत् चम्पकवत् विशीर्णा अहं म्रियै इति भावः ; अथवा—पवनतनयो लक्ष्मणार्थं यथा विशल्यकरणीमानीतवान्, तथा विरहज्वालपीड़ितां मां विशल्यीकर्त्तुं त्वं विशल्यकरणीमानीय गौरीकान्तौ ( हरगौरीरूपौ ) भव, अन्यथा चम्पकवत् विशीर्णा अहं म्रियै इति भावः ; यद्वा—व्यालः,—सर्पः, शेषः इत्यर्थः, मम शेषकालः समुपस्थितः, त्वं पवनतनयवेगेन समागत्य गौरीकान्तः ( हरगौरीरूपो मृत्युञ्जयश्च ) भव इति भावः। ( "व्यालं सर्पम्, अनन्तः कालोऽस्तीति ज्ञापनार्थम् ; तदुपरिस्थं गौरीकान्तं महादेवं संसारवैराग्यस्य जितकामस्य च ज्वलन्तीं मूर्त्तिं, कामो मे जितकाम इति ज्ञापनार्थं शीघ्रागमनसम्भावनानिरुत्यर्थञ्च, पवनतनयं हनुमन्तं वियोगिन्या अवस्थायाश्च विरहवार्त्ताया उद्दीपनार्थम् ; विरहखिन्नाऽहमस्मीति

तत् श्रुत्वा सर्वाऽपि विद्वत्परिषच्चमत्कृता। ततः कालिदासः प्राह,—"राजन्! मल्लिनाथः शीघ्रम् (ख) आकारयितव्यः" इति। ततो राजादेशाद् द्वारपालेन स प्रवेशितः कविः राजानं "स्वस्ति" इत्युक्त्वा तदाज्ञयोपविष्टः। ततो राजा प्राह तं कवीन्द्रं,—"विद्वन्मल्लिनाथकवे! साधु रचिता गाथा"। तदा कालिदासः प्राह,—(ग) "किमुच्यते साध्विति? देशान्तरगतकान्तायाश्चारित्र्यवर्णनेन श्लाघनीयोऽसि विशिष्य तत्तद्भावप्रतिभटवर्णनेन"। तदा भवभूतिः प्राह,—"विशिष्यते इयं गाथा (घ) पङ्क्तिकण्ठोद्यानवैरिणो (ङ) वातात्मजस्य वर्णनात्" इति। ततः प्रीतेन राज्ञा तस्मै दत्तं सुवर्णानां लक्षं, पञ्च गजाश्च दश तुरगाश्च दत्ताः। ततः प्रीतो विद्वान् स्तौति राजानम्,—

ज्ञापनार्थम्। चम्पकस्य वृक्षे स्थित्वैव विशीर्णपत्रं भवतीति प्रायशः समवलोकनात् विशीर्णा म्रियै इति ज्ञापनार्थम्। केचित् वार्षिकमिदं रात्रौ स्फुटितमिति कालक्षारकं मन्यन्ते" इति कस्यचित् व्याख्या)। मन्दाक्रान्ता वृत्तम् ॥ १ ॥

(ख) आकारयितव्यः,—आह्वातव्यः [ आ + कृ + णिच् + तव्यः। "हूतिराकारणाह्वानम्" इत्यमरः ]।

(ग) किमुच्यते? साधु इति—अस्य साधुत्वे विचिकित्सैव नास्तीत्यर्थः। देशान्तरगतकान्तायाः,—देशान्तरं—प्रवासं, गतः,—प्रस्थितः, कान्तः,—नायकः यस्याः तस्याः प्रोषितनायकायाः। श्लाघनीयः,—प्रशंसनीयः। विशिष्य—विशेषं कृत्वेत्यर्थः। तत्तद्भावप्रतिभटवर्णनेन—तस्य तस्य भावस्य—सर्पलिखनादिरूपस्य, प्रतिभटवर्णनेन—प्रतिपक्षाङ्कनेन, क्रूरस्य व्यालस्य अन्तिके तत्प्रतिपक्षस्य उदारस्य महेश्वरस्य तथा दृढकायस्य महावीरस्य पवनात्मजस्य पार्श्वे सुकुमारस्य प्रतिघातासहस्य चम्पकस्य च अङ्कनद्वारा स्वाभिप्रायाविष्करणेनेत्यर्थः।

(घ) पङ्क्तिकण्ठोद्यानवैरिणः,—पङ्क्तिः,—दश, दशसङ्ख्यका इत्यर्थः, ("पङ्क्तिर्दशाक्षरच्छन्दोदशसङ्ख्याऽऽलिषु स्त्रियाम्" इति मेदिनी) कण्ठाः,—गलदेशाः, मूर्द्धानः इति यावत्, यस्य तस्य दशाननस्य रावणस्येत्यर्थः, उद्यानवैरिणः,—उपवनशत्रोः, अशोकवनभङ्क्तुरित्यर्थः।

(ङ) वातात्मजस्य—पवननन्दनस्य हनूमतः।

"देव भोज! तव दानजलौघैः
सोऽयमद्य रजनीति विशङ्के।
अन्यथा तदुदितेषु शिलागो-
भूरुहेषु कथमीदृशदानम्?" ॥ २ ॥

भोजस्य दानमाहात्म्यं वर्णयति, देवेति।—देव भोज!—भो भोजराज!, तव—भवतः, दानजलौघैः,—दाने—त्यागे, दानकाले इत्यर्थः, ये जलौघाः,—वारिसमूहाः तैः, सङ्कल्पकाले अर्थिहस्ते प्रदानार्थमिति भावः; सोऽयं—मल्लिनाथनामा, अहमिति शेषः, अद्य—इदानीं, रजनी—रात्रिः, सञ्जाता इति शेषः, इति—एवं, विशङ्के—मन्ये; मेघादनवरतजलधारावर्षणेन यथा सर्वाः दिशः आच्छन्ना भवन्ति, तथा त्वद्दानजलधाराभिः अविरतं प्रपतन्तीभिः दिङ्मण्डलानामाच्छन्नतया वस्तुजातदर्शनाक्षमत्वात् रात्रिशङ्का इति भावः; अन्यथा—रजन्यभावे, तदुदितेषु—तेषु—दानजलौघेषु, उदितेषु—प्रकाशितेषु, वर्त्तमानेष्वपि इत्यर्थः, शिलागोभूरुहेषु—शिला—पर्व्वत इत्यर्थः, गौः,—पृथिवी, भूरुहः,—वृक्षः, ते तेषु, पर्व्वते पृथिव्यां वृक्षे च, ईदृशदानम्—एतादृशत्यागः, शिलायाः प्रभूतरत्नवितरणं पृथिव्याः प्रचुरशस्यवितरणं वृक्षस्य च भूरिफलवितरणमित्यर्थः, कथं—केन प्रकारेण, सम्भवतीति शेषः; तव भूरिदानेषु सत्स्वपि शिलादयः अद्यापि यत् प्रभूतदानं कुर्व्वन्ति, तत्र नैशान्धकारेण दृष्टिशक्तेरवरोध एव कारणं, दृष्टिशक्तिसत्त्वे तव दानप्राचुर्य्यं दृष्ट्वा स्वेषां दानप्राचुर्य्यस्य यत्किञ्चनत्वज्ञानात् लज्जया ते सङ्कुचिता भवेयुरिति मन्ये इति भावः; यद्वा—शिलागोभूरुहेषु—शिलायां—पर्व्वते, गवि—पृथिव्याञ्च, ये भूरुहाः,—वृक्षाः तेषु, पार्व्वत्यवृक्षेषु पार्थिववृक्षेषु चेत्यर्थः। ["सोऽयमद्य रजनीति विशङ्के" इत्यत्र "सोऽयमब्धेरजनीति विशङ्के" इति पाठकल्पना स्वर्णा; अस्मिन् पक्षे—हे देव भोज! तव दानजलौघैः हेतुभिः, उत्पन्नादिति शेषः, अब्धेः,—सागरात्, तव दानजलराशिसमुद्भूतात् सागरात् इत्यर्थः, अयं—यदुत्पन्नशिलागोभूरुहेषु ईदृशदानं तादृशोऽयमित्यर्थः, सः,—चन्द्रः, ("सो हंसः सुयशा विष्णुर्भर्व्वाशचन्द्रसंज्ञकः" इति वर्णाभिधानम्) अजनि—अभूत्, इति विशङ्के, अहमिति शेषः, अन्यथा—तदभावे, तव दानजलौघसमुद्भूतसमुद्रजन्यत्वाभावे इत्यर्थः, तदुदितेषु—तस्मात्—चन्द्रात्, उदितेषु—समुद्भूतेषु, शिलागोभूरुहेषु—शिलायां भुवि च ये भूरुहाः तेषु, पार्व्वत्यवृक्षेषु भौमवृक्षेषु च, चन्द्रस्य ओषधिपतित्वात् ओषधीनां तत्समुद्भूतत्वाच,

ततो लोकोत्तरम् श्लोकं श्रुत्वा राजा पुनरपि तस्मै लक्षत्रयं ददौ। ततो लिखति स्म भाण्डारिको धर्मपत्रे.—

"प्रीत: श्रीभोजभूप: सदसि विरहिणीगूढनर्मोक्तिपद्यं
श्रुत्वा हेम्नाञ्च लक्षं दश वरतुरगान पञ्च नागानयच्छत्।
पश्चात्तत्रैव सोऽयं वितरणगुणसद्वर्णनात् प्रीतचेता:
लक्षं लक्षञ्च लक्षं पुनरपि च ददौ मल्लिनाथाय तस्मै" ॥ ३ ॥

[ इति भोज कवीन्द्रमल्लिनाथसंवाद: ]।

(तथाच "ओषधीशो निशापति:" इत्यमर:। "तस्य यत् प्राविनं तेज: पृथिवी-मन्वपदात। तेनौषध्य: समुद्भूता याभि: सन्धार्यते जगत ॥" इति सोमस्य चन्द्रलोक-प्राप्तिकथा काशीखण्डीया ) कथम ईदृशदाम, सम्भवेदिति शेष:, चन्द्र: खलु न सगर-तनयखातात् प्रसिद्धात् सागरात् समुत्पन्न:, परन्तु तव दानजलौघसमुत्पन्नात् सागरात् समुत्पन्न इति मन्ये, यत: कारणगुणा: कार्य्यगुणमारभन्ते इति नियमात् कारणीभूतत्वद्दानजलोद्भूतसागरजाते कार्य्यभूते चन्द्रे त्वद्दातृत्वस्य सङ्क्रमणात् वृक्षेष्वपि चन्द्रसमुद्भूतेषु दातृत्वसङ्क्रमणम्, अन्यथा वृक्षाणामेतादृशदातृत्व मसम्भवदेवेति भाव: ]; सुधासितरि त्वयि शासति शैलगोभूरुहाणां रत्नशस्यफलप्रस-विनी शक्ति: समधिकं वृद्धिं गता इति तात्पर्य्यम्। स्वागता वृत्तम् ॥ २ ॥

मल्लिनाथाय दत्तानां द्रव्याणां विवरणमाह, प्रीत इति।—सदसि—सभायां, विरहिणीगूढनर्मोक्तिपद्यं—विरहिण्या:,—वियोगिन्या:, गूढा—अस्फुटार्था, या नर्मोक्ति:,—परिहासवचनं, व्याजाद्यलङ्कारूपपरिहासद्वारा इङ्गितेन कृतभावज्ञापनमित्यर्थ:, ("द्रवकेलिपरीहासा: क्रीडा लीला च नर्म च" इत्यमर: ) यत्र तादृशं पद्यं—श्लोकं, श्लोकाकारेण निबद्धां नर्मोक्तिमित्यर्थ:, श्रुत्वा—आकर्ण्य, प्रीत:,—हृष्ट:, श्रीभोजभूप:,—श्रीमान् भोजराज:, मल्लिनाथाय—मल्लिनाथकवये, हेम्नां—सुवर्णानां, स्वर्णमुद्राणामित्यर्थ:, लक्षं—शतशतं, लक्षस्वर्णमुद्रा: इत्यर्थ:, दश—दशसङ्ख्यकान्, वरतुरगान्—उत्कृष्टाश्वान्, पञ्च—पञ्चसङ्ख्यकान्, नागान्—गजान्, अयच्छत्—अददात. [ दा + लङ्-द "पाघ्राध्मास्थाम्नादाण्—" (७।३।७८ पा०) इति यच्छादेश: ] पश्चात्—लक्षसुवर्णादिदानानन्तरं, तत्रैव—तस्मिन्नेव सदसि, न तु स्थानान्तरे कालान्तरे वा इत्यर्थ:, सोऽयं—तादृश-दायी श्रीभोजराज:, वितरणगुणसद्वर्णनात्—वितरणे—दाने य: गुण:,—दातृत्व-मित्यर्थ:, तस्य सद्वर्णनात्—उत्तमवर्णनात्, भोजदातृत्वस्य प्रकर्षवर्णनाकरणाद्धि-

# भोज-क्रुद्धकालिदाससंवादः।

ततः कदाचिद्भोजराजः कालिदासं प्रति प्राह,—"सुकवे! त्वमस्माकं (क) चरमग्रन्थं पठ"।

ततः (ख) क्रुद्धो राजानं विनिन्द्य कालिदासः क्षणेन तं देशं त्यक्त्वा विलासवत्या सह एकशिलानगरं प्राप।

ततः कालिदासवियोगेन शोकाकुलस्तं कालिदासं (ग) मृगयितुं राजा कापालिकवेषं धृत्वा क्रमेण एकशिलानगरं प्राप।

ततः कालिदासो योगिनं दृष्ट्वा तं (घ) सामपूर्वं पप्रच्छ,—

---

त्यर्थः, प्रीतचेताः,—हृष्टचित्तः सन्, तस्मै—प्राग्ज्ञाय, माङ्गनाथाय, पुनरपि—भूयोऽपि च, लक्षं लक्षच लक्षं—लक्षत्रयं, निष्कसुवर्णमुद्रा इत्यर्थः, ददौ—अर्पयामास। स्रग्धरा वृत्तम् ॥ ३ ॥

---

(क) चरमग्रन्थं—चरमे—अवसाने, देहत्यागान्ते इत्यर्थः, यः ग्रन्थः,—शास्त्रम्, अक्षरसङ्घा वा, अक्षरसङ्घया निबद्धः श्लोक इत्यर्थः, तं, मम मरणादनन्तरं पठनीयं श्लोकमित्यर्थः, मृत्योः परमवश्यमेव यूयं मदर्थं शोचन्तः किञ्चित् पठिष्यथ, तदेवेदानीमेव पठेत्यर्थः। ("ग्रन्थो ग्रन्थनाधनयोः स्यात् शास्त्राक्षरसङ्घयोः" इति मेदिनी)।

(ख) क्रुद्धः,—परमप्रेमास्पदेन राज्ञा निजमरणसूचकवाक्यप्रयोगात् प्रणयकुपित इत्यर्थः। विनिन्द्य—ईदृक्प्रलापितुस्तव समीपे अवस्थानं न युक्तमित्यादिप्रकारेण निर्भर्त्स्य इत्यर्थः। एकशिलानगरं—बल्लालभूपतिराजधानीम्।

(ग) मृगयितुम्—अन्वेष्टुं, [मृग + स्वार्थे णिच् + तुमुन्]। कापालिकवेषं—कापालिकस्य—कपालेन—मस्तककर्परेण, व्यवहरति—पानभोजनादिकं करोति इति तस्य, तान्त्रिकसन्न्यासिविशेषस्येत्यर्थः, वेषं—परिच्छदम्।

(घ) सामपूर्वं—सान्त्वपूर्वं, सविनयमित्यर्थः।

"योगिन्! कुत्र ते स्थितिः?" इति। योगी वदति—"सुकवे! अस्माकं धारानगरे वसतिः" इति।

ततः कविराह,—"तत्र भोजः कुशली किम्?"। ततो योगी प्राह,—(ङ) "किं मया वक्तव्यम्?" इति।

ततः कविराह,—"तत्र (च) अतिशयवार्त्ताऽस्ति चेत् सत्यं कथय" इति। तदा योगी प्राह,—"भोजो दिवं गतः" इति।

ततः कविर्भूमौ निपत्य प्रलपति,—"देव! त्वां विनाऽस्माकं क्षणमपि भूमौ न स्थितिः, अतस्त्वत्समीपमहमागच्छामि" इति कालिदासो बहुशो विलप्य चरमश्लोकं कृतवान्,—

"अद्य धारा निराधारा निरालम्बा सरस्वती।
पण्डिताः खण्डिताः सर्वे भोजराजे दिवं गते" ॥ १ ॥

एवं यदा कविना चरमश्लोक उक्तः, तदैव स योगी भूतले (छ) विसंज्ञः पपात।

ततः कालिदासस्तथाविधं तमवलोक्य "अयं भोज एव"

(ङ) किं मया वक्तव्यम्?—भोजः कुशली किम्? इति प्रश्नस्य प्रत्युत्तरं यत् वक्तव्यमस्ति, तत्तु वक्तुं न शक्यते मयेत्यर्थः।

(च) अतिशयवार्त्ता—अप्रतिविधेयवृत्तान्तः, यस्मिन् व्यापारे सङ्घटिते तत्-प्रतिविधानमत्यन्ताशक्यं स्यात्, ईदृशः संवाद इत्यर्थः।

अर्थात्।—भोजराजे—भोजनृपतौ, दिवं—स्वर्गं, गते—प्रस्थिते, धारा—धाराख्यनगरी, अद्य—इदानीं, निराधारा—निराश्रया, सरस्वती—वाग्देवी, निरालम्बा—आश्रयविहीना. जाता इति शेषः, भोजाभावात् सुशासकाभावेन धारानगरी एकान्तिकाराधकाभावेन भारती देवी च अनाथा जाता इत्यर्थः, सर्वे—निखिलाः, पण्डिताः,—विद्वांसः, खण्डिताः,—विच्छिन्नाः, हता इति यावत्, भोजाभावेन वृत्तिच्छेदात् पण्डिता अपि सर्वे मृतप्रायाः सञ्जाता इति भावः ॥ १ ॥

(छ) विसंज्ञः,—अचेतनः, स्वाभीष्टचरमश्लोकश्रवणजनितहर्षाधिक्यात् धारादीनां भाविदुरवस्था[illegible] भावः।

इति निश्चित्य,—"अहह! महाराज! (ज) तत्रभवताऽहं वञ्चितोऽस्मि" इत्यभिधाय झटिति तं श्लोकं प्रकारान्तरेण पपाठ,—

"अद्य धारा सदाधारा सदालम्बा सरस्वती।
पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते" ॥ २ ॥

ततो भोजस्तमालिङ्ग्य प्रणम्य धारानगरं प्रति ययौ।

[ इति भोज क्षुद्रकालिदाससंवादः ]।

---

(ज) तत्रभवता—माननीयेन। वञ्चितः,—प्रतारितः, छद्मवेशेन आत्म-परिचयमदत्त्वा भवान् मां प्रतारितवानित्यर्थः।

अद्य धारेति।—भोजराजे भुवं—पृथिवीं, गते—प्राप्ते, भोजराजे जीवति सति इत्यर्थः, धारा अद्य सदाधारा—सतां—साधूनाम्, आधारा—आश्रयभूता, सज्जन-निवासा इत्यर्थः, सरस्वती सदालम्बा—सन्तः,—बुधाः, ("सन् सुधीः कोविदो बुधः" इत्यमरः) आलम्बाः,—आधारभूताः यस्याः तादृशी, कोविदाश्रया, सद्गर्भिका इत्यर्थः, जातेति शेषः, सर्वे पण्डिताः मण्डिताः,—भूषिताः, भोजदत्तरत्नादिना अलङ्कृता इत्यर्थः; भोजप्रभावेण धारादयः सर्वे सर्वथा उत्कर्षं प्राप्ता इति भावः ॥ २ ॥

इति भोजप्रबन्धव्याख्या समाप्ता।

समाप्तोऽयं ग्रन्थः।

# भोजप्रबन्धस्य कथानां सूची।

| विषया: | | | | पृष्ठाङ्का: |
|---|---|---|---|---|

# भोजप्रबन्धः।

श्रीवल्लालविरचितः।

पण्डितकुलपति-

वि, ए, उपाधिधारि-

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां

विरचितया टीकया समेतः।

द्वितीयसंस्करणम्।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे मुद्रितः।

ई १९२१



[illegible]।